# ब्रह्मसूत्रभाष्यप्रदीपिका



लेखकः

वेदशास्त्रभूषण तर्कालङ्कारादिबिरुदाङ्कितः
न्यायव्याकरणवेदान्तविद्वान् शास्त्ररत्नाकर

**श्री गोडा सुब्रह्मण्यशास्त्री**

आन्ध्रराज्यपालभारतराष्ट्रपतिभ्यां सम्मानितः

प्रकाशकः

**श्रीशङ्करभक्तजनसभा**

**काञ्चीपुरम्**

१९९२

First Edition 1992

Price : Rs. 100/-

Publishers :- Sri SANKARA BAKTHA JANA SABHA
Kancheepuram

Copies Can be had from :

1. **Sri Goḍa Subrahmanya Shastri,**
Sulameni, Chenglepet District,
Tamil Nadu-602026

2. **Secretary,**
Sri Sankara Baktha Jana Sabha,
No. 91, Salai Street,
Kancheepuram-631509.

---

Laser Typeset at M/s. KALABHARATHI Instant Printers & Publishers No. 11, Bheemasena Garden Road, Mylapore, Madras-4, Ph : 71181,

Printed at RAJAN & CO., PRINTERS
No. 1, Goomes Street, Madras-1, Ph: 584585 588572

दूरभाषिणी - 2115

॥ श्रीः ॥

श्री चन्द्रमौलीश्वराय नमः

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य

# जगद्गुरु - श्रीशङ्करभगवत्पादाचार्यपरम्परागतं श्रीकामकोटिपीठमहासंस्थानम् ।

काञ्चीपुरम् 631502

यात्रास्थानम्........... २०-८-१९९२

विष्णुरूपिणा महर्षिणा ग्रथितानां ब्रह्मसूत्राणां तदादेशेन विरचितं भाष्यं श्रीमद्भिः आदिशंकरभगवत्पादैः ।

अनितरसाधारण्या अतिगम्भीरया शैल्या विराजमानस्योस्य ग्रन्थस्य गाम्भीर्याऽनुभाविका व्याख्या भवति ब्रह्मसूत्र-भाष्य-प्रदीपिका ।

शास्त्ररत्नाकरादिबिरुदभाग्भिः शास्त्राऽध्यापननिरतैः शिष्टैः श्रीगोडा सुब्रह्मण्यशास्त्रिवर्यैः कृतामिमां अवलोक्य सुभृशं सन्तुष्यामः ।

श्रीमठस्य शिष्याऽग्रगण्यानां ज्ञान-वयोवृद्धानां एतेषां विद्वद्वराणां श्रीचन्द्रमौलीश्वरस्य परमया कृपया श्रेयः प्रेयोऽभिवृद्धानां द्धिमाशास्महे ।

नारायणस्मृतिः

श्री कामकोटिमठाधिप श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्री (१००८) २००८ चन्द्रशेखरेन्द्रसरस्वतीस्वामि श्रीचरणेषु शिष्यचरमाणुना ग्रन्थकर्त्रा भक्त्यासमर्पितमिदं भाष्यप्रदीपिका-ग्रन्थकुसुमम् ।

—०—

॥ श्री गुरुभ्यो नमः ॥

# प्रस्तावना

विदितमेवेदं सर्वेषां भारतभूमण्डलवासिनां यद्धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्था इति, तेष्वपि मोक्ष एव परमः पुरुषार्थ इति। मोक्षस्य आत्मज्ञानमेव साधनम्। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति, तरति शोकमात्मविदिति श्रुतेश्च। आत्मज्ञानार्थमेव सर्वाणि दर्शनानि प्रवृत्तानि। तेषु च बादरायणीयं दर्शनमेव मुख्यम्। तत्र हि कर्तृत्वभोक्तृत्वादिसंसाररहितं जीवाभिन्नब्रह्मतत्त्वं बोध्यते। अन्यानि तु दर्शनानि विनेयबुद्ध्यनुसारेण तदपेक्षित तत्तदंशं बोधयन्ति सन्ति बादरायणं दर्शनमुपकुर्वन्ति। न्यायवैशेषिकदर्शने आत्मनो देहादिभिन्नत्वं, सांख्यदर्शनमात्मनोऽपि कर्तृत्वं, योगदर्शनं निदिध्यासनायापेक्षितं चित्तैकाग्र्यं पूर्वमीमांसादर्शनं कर्मावबोधनपूर्वककर्मानुष्ठानद्वारा चित्तशुद्धिं सम्पाद्य मोक्षार्थमपेक्षितज्ञानायोपकुर्वन्ति। दर्शनकारास्सर्वेऽपि महर्षयः आत्मतत्त्वं न जानन्तीति वक्तुं न शक्यते। किन्तु विनेयानामेकदैव असंसार्यात्मतत्त्वग्रहणयोग्यता न स्यादित्यालोच्य एकैकमंशमबोधयन्नित्येव वक्तव्यम्। अत एव बादरायणाचार्यः स्वसूत्रेषु तत्र तत्र जैमिनिमपि स्मरति। बादरायणसूत्राणां यद्यप्यनेकानि भाष्याणि सन्ति तथापि श्रीमच्छंकरभगवत्पादभाष्यमेव बादरायणाभिप्रायानुसारीति व्यासतात्पर्यनिर्णयादौ निर्णीतम्।

विष्ण्ववतारभूतबादरायणाचार्याशयं शिवावतारभूतशङ्करभगवत्पादेभ्योऽन्यः को वा ज्ञातुं शक्तः। तस्यास्य भाष्यस्य प्रौढानि भामती पञ्चपादिकाविवरणादीनि, मन्दबुद्ध्यनुग्रहार्थानि च रत्नप्रभान्यायनिर्णयादीनि च व्याख्योपव्याख्यानानि प्रसिद्धानि। श्रीमद्भगवत्पादाश्च श्रुतियुक्ती उभे अवलम्ब्य भाष्यं व्यरचन्। सर्वत्र श्रुतिमुदाहृत्य उपपत्तिमपि

प्रादर्शयन्। स्वयञ्च "तर्कोपकरणा प्रस्तूयते" इत्युक्तवन्तः। तर्को ह्यनुमानम्। अत एव पञ्चपादिका कृद्भिरपि "अनुमार्धविग्रह"मिति भाष्यस्य अनुमानार्धविग्रहत्वं तद्द्वारा भाष्यकारस्याप्यनुमानार्धविग्रहत्वमुक्तम्।

यद्यपि रत्नप्रभान्यायनिर्णयादिषु क्वचित्क्वचित् अनुमानप्रयोगाः प्रदर्शिताः, तथापि सर्वत्र नोपदर्शिताः। आन्ध्रप्रदेशसम्प्रदायेऽपि सर्वत्रानुमानप्रदर्शनं नास्ति, परन्तु यदा वेदान्तविद्वत्पूर्वभागपरीक्षादानार्थमहं मैसूरुनगरमगमं, तदा पूर्वभागे मम वाक्परीक्षाधिकारिणः श्री श्री पण्डितवर्यरामचन्द्रसोमयाजिन आसन्। परीक्षासमाप्त्यनन्तरं ते मयि प्रीतास्सन्तः "तत्र पाठसम्प्रदाये सर्वत्रानुमानकथनरीतिरस्ति। तज्ज्ञाने भाष्यस्य संक्षेपेणार्थावबोधो भवति। अतस्तदर्थं प्रयतनीय" मित्युपादिशन्। तदनुसारेण विद्वद्वरेण्याः न्यायमीमांसावेदान्तेषु अद्वितीयपाण्डित्यमण्डिताः श्री श्री श्री गुरुवर्य नवीनं वेङ्कटेशशास्त्रिणः मया प्रार्थिताः मद्गृहे स्थित्वा पुनः तत्सम्प्रदायेन भाष्यमध्यापयन्। तदनन्तरं शास्त्रदर्पणादिग्रन्था नवलोक्य अन्येऽपि अनुमानप्रयोगाः अवगताः। सर्वानपि संगृह्य लघुव्याख्यानमेकं व्यलेखि। परन्तु तस्य मुद्रणादिकं मया न चिन्तितम्।

व्याख्यानमेतद्दृष्ट्वा "सम्यक् प्रतिकृतिं लेखय। मुद्रापणे केषांचिदपि कश्चनोपकारो भवती" ति मां प्रेरितवद्भ्यः सर्वदा वेदान्तश्रवणमनननिदिध्यासनतत्परेभ्यः श्री परमहंसपरिव्राजकाचार्य श्री जनार्दनानन्दसरस्वतीस्वामिचरणारविन्देभ्यः भक्तिपूर्वकान् प्रणामकुसुमाञ्जलीन् समर्पयामि। ग्रन्थमिममामूलाग्रं दृष्ट्वा "ग्रन्थोऽयं मुद्रणार्ह" इति प्रोत्साहितवद्भ्यः मित्रवर्येभ्यः सूरिरामकोटिशास्त्रि पण्डितवर्येभ्यः मदीयाः हार्दिकाः प्रणामाः। एवमस्य ग्रन्थस्योपरि स्वाभिप्रायं प्रकटीकृतवद्भ्यः ब्रह्मश्रीसम्पन्नेभ्यः अपरिमितपाण्डित्य मण्डितेभ्यः श्री उ. भालचन्द्रशास्त्रि महाभागेभ्यः कृतज्ञतापूर्वकं नतिततीः समर्पयामि। मम शिष्यः श्रीपादसुब्रह्मण्यशास्त्री प्रतिकृतिं विलिख्यादात्। तस्य इतोऽप्यधिकतया

शास्त्रविज्ञानाभिवृद्धिः सकलसौभाग्यप्राप्तिश्च भवत्विति तमाशीर्भिरभिनन्दयामि।

कस्मिंश्चित् सन्दर्भे एतद्ग्रन्थस्य मुद्रापणविषयं मच्छिष्यात् श्री गणपतिभट्टात् श्रुत्वा "अहमेव मुद्रापयिष्यामी" ति स्वयमेव प्रवृत्तेभ्यः शीघ्रमेव तत्कार्यं समापितवद्भ्यः श्री शङ्करभक्तजनसभाकार्यदर्शिमहाभागेभ्यः श्रीयुत वैद्यनाथार्येभ्यः कृतज्ञतापूर्वकाभिनन्दनानि निवेदयामि। मुद्रणपरिशोधनं कृतवद्भ्यः मच्छिष्येभ्यः सुब्रह्मण्यशास्त्रि, सत्यनारायण शास्त्रि, गणपतिभट्टेभ्यः वेदोक्ताः आशिषः वितीर्यन्ते। ग्रन्थममुं सम्यक् मुद्राप्याविलम्बेन दत्तवद्भ्यः कलाभारती इन्स्टन्ट् प्रिन्टर्स, तथा वी.टी.राजन् अंड् को मुद्रणकार्यालयाधिपतिभ्यः कृतज्ञतां निवेदयामि॥

नचानातीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषोह्यविद्यमानोपि तच्चित्तानां प्रकाशते॥

इत्थं
निवेदयिता
बुधजनविधेयः
गोडा सुब्रह्मण्यशास्त्री
सूळमेनि

श्री शङ्करः शरणम्

प्रसीदतितमां नश्चेतः समुपजज्ञुषां प्राज्ञमूर्धन्य श्रीसुब्रह्मण्यशास्त्रिकेसरिणां सुकृतिप्रमोदकरीं कृतिमिमां वैयासिकसूत्रानुगुणभगवत्पादीयभाष्यस्फुरदानुमानिकविषयनिर्णयकृत्वरीम्। यत्सत्यमतिमात्रं पराक्रान्तममीभिः शास्त्रिचरणैः यद्भामतीप्रस्थानं पाञ्चपादिकेयं च समुदञ्चितसारमनुमानव्यूहैः समूह्य प्रबन्धप्रणयनं नामेति। प्रतिभायादेव प्रतिभाविशेषः खल्वेतत्प्रभवः समवलुलोकयिषूणां विशिष्टप्रेक्षावतां विदुषाम्।

यद्यप्ययं त्र्यन्तसिद्धान्तः केवलमुपनिषदर्थानुसन्धानगम्य इति श्रीमद्भगवत्पादैः जन्माद्यधिकरणे "वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्त" इति प्रतिपादयद्भिः प्रादर्शि। तथापि श्रुत्यविरोधिनस्तर्का अपि श्रुतौ मन्तव्यपदेनोपदिष्टास्तैरेव समगृह्यन्तेति भाष्यस्थतिङ्सुबन्तचर्यैरुन्नीयते।

स च तर्कावष्टब्धः किल सन्दृब्धो विषयपरीवाहो विचक्षणधिषणाकर्षी बह्वाञ्जस्येन व्यञ्जयत्यद्वैतराद्धान्तम्। नूनं नैयायिकपरीपाटीमाटीकमानोप्ययं टीकाग्रन्थो गुरुलघुचन्द्रिका सिद्धिचतुष्टयचित्सुख्यादिवत् केवलं परुषशेमुषीविगाह्यतामनवाप्तः परं सामान्यनैयायिकानपि स्वावगमक्षमाननुक्षणं विधत्ते। संक्षेपशारीरकपञ्चपादिकापञ्चदशीभामत्यादिप्राचीनप्रबन्धान्, तथाऽर्वाचीन रत्नप्रभा ब्रह्मविद्याभरणादिग्रन्थस्थान् विषयानपि साकल्येन समाकलय्य समासतः समुट्टङ्कितोऽसौ ग्रन्थवरः सम्यगुपकरोति मतौ सङ्गम्यमानः समेषां विदुषामिति प्रबन्धॄणां श्रमः साफल्यं यायादिति च विश्वसिमः। एवमेवाऽग्रे पदं निदधतु प्रणयने इमे श्रीशास्त्रिचरणा ईदृक्प्रबन्धस्येति प्रार्थयामहे। श्रीमद्भगवत्पादाचार्याश्च तादृशीं स्फूर्तिं आयुररोगतां च अमीभ्यो वितरन्त्विति साभिनिवेशमाशेमह इति शिवम्॥

उप्पिनबेटगेरी भालचन्द्रशास्त्री
श्रीमज्जगद्गुरु शङ्कराचार्य संस्कृतपाठशाला
धारवाड, कर्नाटक — ५८०००१

# अनुक्रमणिका

## प्रथमाध्यायस्य प्रथमः पादः



## प्रथमाध्यायस्य द्वितीयः पादः

## प्रथमाध्यायस्य तृतीयः पादः



## प्रथमाध्यायस्य चतुर्थः पादः

## अथ द्वितीयाध्यायस्य प्रथमः पादः



## द्वितीयाध्याये द्वितीयः पादः

## द्वितीयाध्याये तृतीयः पादः



## द्वितीयाध्याये चतुर्थः पादः

## तृतीयाध्यायस्य प्रथमः पादः



## तृतीयाध्यायस्य द्वितीयः पादः

## तृतीयाध्यायस्य तृतीयः पादः

## तृतीयाध्यायस्य चतुर्थः पादः

## चतुर्थाध्यायस्य प्रथमः पादः

## चतुर्थाध्यायस्य द्वितीयः पादः



## चतुर्थाध्यायस्य तृतीयः पादः



## चतुर्थाध्यायस्य चतुर्थः पादः

ओम्

श्री गुरुभ्यो नमः

श्री गोडा सुब्रह्मण्यशास्त्रिकृता

# ब्रह्मसूत्रभाष्यप्रदीपिका

यदविद्याप्रभावेण प्रपञ्चः कल्पितश्चिति।
तदभिन्नतयात्मानं भावयामि सदा हृदि॥ 1

गणेशं विघ्नहन्तारं स्कन्दं सिद्धिप्रदायकम्।
सर्वप्रदौ शिवौ चैव भजे भक्तिसमन्वितः॥ 2

शङ्कराचार्यगुरुभिः स्वयं स्थित्वा प्रवर्तितम्।
काञ्चीमठमधिष्ठाय लोकानुग्रहतत्परम्॥ 3

चन्द्रशेखरयोगीन्द्रजयेन्द्रविजयाभिधम्।
अभीष्टप्राप्तये वन्दे मुनित्रयमनारतम्॥ 4

वेदे वेदान्तशास्त्रे च शब्दशास्त्रे च निष्ठितम्।
पितरं कृष्णशास्त्र्याख्यमाचार्यं प्रणमाम्यहम्॥ 5

श्रीरामब्रह्मविदुषां गुरूणां चरणस्मृतिः।
बाधिका सर्वविघ्नानामिष्टानामस्तु साधिका॥ 6

नवीनं वेङ्कटेशाख्यगुरूणां चरणं भजे।
तदुक्तार्थपरिस्फूर्तिः सिध्येद्येन सदा मम॥ 7

शूलमेनिग्रामजातो रुक्मिणीकृष्णयोस्सुतः।
भाष्यप्रदीपिकां कुर्वे सुब्रह्मण्याख्यशास्त्रवित्॥ 8

भाष्यं प्रसन्नगंम्भीरमनुमारत्नगर्भितम्।
अन्तः प्रविश्य गृह्यन्ते रत्नानि कृतबुद्धिभिः ॥ 9

भगवत्पादभाष्यस्यानुमानार्थदेहिनः।
अर्थदेहप्रकाशाय यतिष्ये गुर्वनुग्रहात्॥ 10

गुरूदितविशेषा ये ये च ग्रन्थान्तरस्थिताः।
त एव संग्रहीष्यन्ते मदीयन्तु न किञ्चन॥ 11

मदीयबुद्धिशुद्ध्यर्थं कृतेऽस्मिन् संग्रहे यदि।
दोषा समुपलभ्यन्ते ते ममाज्ञानसम्भवाः॥ 12

इति विज्ञाय विद्वद्भिः क्षम्यतां तदशेषतः।
पण्डिता हि भवन्त्येव मादृशेषु दयालवः॥ 13

ओम्

## श्री बालापरमेश्वर्यै नमः

## अथातो ब्रह्मजिज्ञासा १-१-१

अथ - साधनचतुष्टयसम्पत्त्यनन्तरं, अतः साधनचतुष्टयसम्पत्तेरेव हेतोः ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः।

अस्याधिकरणस्य "तद्विजिज्ञासस्व" इति श्रुतिर्विषयः। तादृशश्रुत्यानुगुण्येन सूत्रेऽपि कर्तव्यपदाध्याहारस्तदनुरोधेन च सन् प्रत्ययस्य विचारे लक्षणा। तथाच ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रार्थः सम्पद्यते।

तत्र विचारशास्त्रमारम्भणीयं नवेति संशयः। तद्विजिज्ञासस्वेति श्रुत्यर्थनिर्णयाळु तिसंगतिः उत्थाप्योत्थापकभावरूपः।

तत्र विचारशास्त्रं नारम्भणीयम्। असम्भवद्विषयप्रयोजनकत्वाज्जीव ब्रह्मैक्यरूपो विषयो न सम्भवति। जीवो ब्रह्मभिन्नः ब्रह्मविरुद्धधर्मवत्त्वात्। अनर्थो न ज्ञाननिवर्त्यः सत्यत्वादित्यनुमानेनानर्थनिवृत्तिरूपप्रयोजनमपि न सम्भवतीति विषयप्रयोजनासम्भवाद् विचारशास्त्रं नारम्भणीयमिति पूर्वपक्षः।

एवं प्राप्ते अथातो ब्रह्मजिज्ञासा। ब्रह्मज्ञानाय विचारः कर्तव्यः। अर्थात् वेदान्तानामेव। अनेन च ब्रह्मज्ञानस्य दुःखपरिहारसाधनत्वं गम्यते। तथाहि ब्रह्मज्ञानं सुखसाधनत्वदुःखपरिहारसाधनत्वान्यतरवत् सुखदुःखपरिहारान्यतरभिन्नत्वे सति इष्यमाणत्वेन विमर्शकारिभिरुक्त त्वात्। अनेनानुमानेन ब्रह्मज्ञानस्थानर्थनिवृत्तिहेतुत्वे सिद्धे सत्यबन्धस्य ज्ञानान्निवृत्त्यनुपपत्त्या बन्धस्याध्यस्तत्वं ज्ञायते। तथाहि - अनर्थः ब्रह्मण्यध्यस्तः ब्रह्मज्ञाननिवर्त्यत्वात्। यत् यज्ज्ञाननिवर्त्यं तत्तस्मिन् अध्यस्तम्। यथा शुक्तौ रजतमिति रीत्याऽनर्थनिवृत्तिरूप प्रयोजनं

सम्भवति। एवं जीवो ब्रह्माभिन्नः ब्रह्मज्ञाननिवर्त्याध्यासाश्रयत्वात् इत्यनुमानेन जीवब्रह्मैक्यरूपो विषयश्च सिद्ध्यति। भेदसाधकविरुद्धधर्मवत्त्व हेतुरसिद्धः कर्तृत्वादिरूपधर्माणां वस्तुतो जीवेऽभावात्। अध्यस्तानां तेषां सम्भवेऽपि तादृशानां भेदासाधकत्वात्। एवञ्च विचारशास्त्रमारम्भ णीयं विषय प्रयोजनवत्त्वादित्यनुमानेन विचारस्य कर्तव्यत्वं सिद्ध्यति। जीवब्रह्मैक्यरूप विषयसाधकहेतोरसिद्धिमाशङ्क्याध्यासं समर्थयति युष्मदस्मत्प्रत्ययगोचरयोरित्यादिना। यूयमिति प्रत्ययः युष्मत्प्रत्ययः, वयमिति प्रत्ययोऽस्मत्प्रत्ययः, युष्मत्प्रत्ययश्चास्मत्प्रत्ययश्च युष्मदस्मत् प्रत्ययौ। एकस्य प्रत्ययपदस्य लोप इति रत्नप्रभाविग्रहः। युष्मदस्मदोः प्रत्ययस्तस्थ गोचराविति पूर्णानन्दीयविग्रहः।

युष्मदस्मच्छब्दयोर्युष्मदस्मच्छब्दोल्लिख्ये लक्षणा। युष्मदस्मदी च तौ प्रत्ययौ च तयोर्गोचरयोरिति नृसिंहाश्रमश्रीचरणानां विग्रहः।

आनन्दगिरिमते युष्मच्चास्मच्च युष्मदस्मदी, प्रत्ययश्च प्रत्ययश्च प्रत्ययौ, गोचरश्च गोचरश्च गोचरौ पदत्रयस्य कर्मधारय इति।

सूत्रेण विचारकर्तव्यतारूपश्रौतार्थानुपपत्त्या अर्थात् सूत्रितविषयप्रयो जन वत्त्वस्योपोद्घातत्त्वात् तत्सिद्धिहेत्वध्यासमाक्षेपसमाधानाभ्यां वर्णयति-युष्मदिति।

1. अनात्मा आत्मतादात्म्याध्यासाभाववान् आत्मतादात्म्यप्रमा जन्यसंस्काराविषयत्वात्। एवमात्मा अनात्मतादात्म्याध्यासाभाववान् अनात्मतादात्म्यप्रमाजन्यसंस्काराविषयत्वादित्युत्तरत्राप्युभयपक्षकानुमा-नानि द्रष्टव्यानि। 2. अनात्मा आत्मतादात्म्यप्रमाजन्यसंस्काराविषयः आत्मतादात्म्य प्रमाविषयत्वाभावात्। 3. अनात्मा आत्मतादात्म्यप्रमाक्षिय त्वाभाववान् आत्मतादात्म्याभावात्। 4. अनात्मा अत्मतादात्म्यशून्यः आत्मविरुद्ध स्वभावत्वात्। यः यद्विरुद्धस्वभावः स तत्तादात्म्यशून्यः यथा प्रकाशविरुद्धस्वभावं तमः। 5. अनात्मा आत्मविरुद्धस्वभावः विषयत्वात्।

6. अनात्मा विषयः युष्मत्प्रत्ययगोचरत्वादित्यनुमानुष्वं युष्मदस्मदित्यादि मिथ्येत्यन्तग्रन्थेन सूच्यते। संक्षेपतस्तु 1. आत्मानात्मानौ इतरेतरतादात्म्या ध्यासरहितावितरेतरभावरहितत्वात् तमः प्रकाशवत्। 2. विमतौ तादात्म्यशून्यौ विरुद्धस्वभावत्वात् तमः प्रकाशवत्। 3. विमतौ विरुद्धस्वभावौ विषयविषयित्वात् नेत्ररूपवत्। विरोधोऽत्र वध्यघातकभाव लक्षणो वा सहावस्थानसामर्थ्याभावलक्षणो वा न। चिद्रूपस्यात्मनो जडरूपस्यानात्मनः साधकत्वेनानुकूलत्वात्। किन्तु भावाभाववत् परस्परात्मतासामर्थ्याभावलक्षणः। धर्मितादात्म्याध्यासाभावेऽपि धर्मा ध्यासो भवतु। स्फटिकजपाकुसुमयोर्भेदग्रहेऽपि स्फटिके लौहित्यद्द मवदिति शङ्काव्युदासाय तद्धर्माणामपीति। रूपवतः स्फटिकस्य स्वच्छतया रूपान्तरप्रतिबिम्बग्राहित्वस्य सम्भवेऽपि नीरूपस्य चिद्रात्मनः प्रतिबिम्बग्राहित्वासम्भवेन धर्मितादात्म्याध्यासमूलकेनैव प्रतिबिम्बातिरिक्त धर्माध्यासेन भाव्यम्। तथा च धर्म्यध्यासासम्भवे धर्माध्यासो दूरापेत इति भावः। इत्यतः – इति तादात्म्याभावात् तादात्म्यप्रमाया असम्भवात् तज्जन्यसंस्कारासम्भवाद्धेतोः। तथा चाध्यासकारणस्याधिष्ठान सामान्यांशा ध्यस्तविशेषांशयोरैक्यप्रमाजन्यसंस्कारस्येदं रजतमित्यादिभ्रमेषु क्लृप्तस्य प्रकृतेऽसम्भवात् अध्यासस्योत्पत्त्यनर्हत्वेनाध्यासो नास्तीत्यर्थः। अध्यासे सादृश्यज्ञानं भेदाग्रहः ऐक्यप्रमाहितसंस्कार इति कारणानि। तत्र विरुद्धस्वभावयोरित्यनेन सादृश्यज्ञानं नास्तीति सूच्यते। युष्मदस्मत्प्रत्यय गोचरयोरित्यनेन भेदाग्रहो नास्तीतीतररेतरभावानुपपत्ता' वित्यनेनैक्यप्रमा जनितसंस्कारोऽपि नास्तीति कारणाभावादध्यासो न भवति किन्तु गौण एव तादृशप्रत्यय इति। नन्वात्मनोऽहंप्रत्ययगोचरत्वे कथं विषयित्वम्– अहंकारवद्विषयित्वासम्भवादिति चेन्न। आत्मनोऽहंवृत्तिव्यंग्यस्फुरणत्वात्। अहंकारस्य तु स्फुरणविषयत्वात्।

अध्यासं सम्भावयति तथापीति। अन्योन्यस्मिन्नित्यादि। विचारशास्त्रमारम्भणीयं सम्भावितविषयप्रयोजनकत्वात् कृष्यादिवत्। विमतं शास्त्रं सम्भावितविषयप्रयोजनमविद्यात्मकबन्धप्रत्यनीकत्वात्

जाग्रद्बोधवत्– अत्यन्तविविक्तयोर्धर्मधर्मिणोः सत्यानृते मिथुनीकृत्येतरेतरा विवेकेनान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांनध्य मिथ्याज्ञाननिमित्तोऽहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति भामतीरीत्या योजना। अत्र व्याख्याने लोकव्यवहार इत्यस्य लोकानां व्यवहारश्शब्द प्रयोग इत्यर्थः। अहमिदं– अहं मनुष्यः, अहमन्धः, अहं गच्छामीत्यादि भाष्ये वक्ष्यमाणव्यवहारः। तत्र हेतुरध्यस्येत्यनेनोक्तः। सुप्तवोत्तिष्ठतीत्यादि-वदहेतुत्वेऽपि पूर्वकालत्वं सम्भवतीति कारणत्वस्फुटीकरणाय मिथ्याज्ञान निमित्त इति। अध्यासे कारणमितरेतराविवेकेनेति। तत्र च सत्यानृते मिथुनीकृत्येति हेतुः। तथाच वस्तुतः तादात्म्यरहितयोरपि धर्मधर्मिणोरधिष्ठानारोप्ययोः स्वरूपेण बुद्धौ भानात् यो विवेकाग्रहस्तेन योऽध्यासः तत्प्रयुक्तो लोकव्यवहार इत्यर्थः। तथा चान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति अध्यासस्वरूपमुक्तम्। इतरेतराविवेकेनेति निमित्तम्। लोकव्यवहार इति च फलम्। तत्र चिदात्मातिरिक्तस्य वस्तुनोऽभावात् तेन साकं भेदाग्रहस्यासम्भवात् कथमध्यास इति शङ्कानिराकरणाय सत्यानृते मिथुनीकृत्येति। आरोप्यस्य पारमार्थिकत्वाभावेऽपि आरोप्यप्रतीतेस्सम्भवात् प्रतीतेन तेन भेदाग्रहादेवाध्यास उपपद्यत इति भावः। आरोप्यस्य पूर्वं प्रतीतिसत्त्वे पूर्वदृष्टस्य तस्यारोपः समारोपनिबन्धना च प्रतीतिरित्यन्योन्याश्रयशङ्काया निरसनाय नैसर्गिक इति। नैसर्गिकत्वं प्रवाहतोऽनादित्वं तच्च स्वपूर्वकालत्वव्यापकस्वसजातीय स्वसंस्कारान्यतरकत्वम्। व्यवहारस्यानादित्वोक्त्या तत्कारणस्याध्यासस्याप्यनादितोक्ता। तथा च पूर्वपूर्वाध्यासदृष्टस्योत्तरोत्तराध्यासोपयोगित्वम्, अनादित्वाद् बीजाङ्कुरवन्नान्योन्याश्रयः। तथा चाध्यासात्मकस्यैवाधिष्ठानारोप्यैक्यज्ञानस्य सत्त्वात्तज्जनितसंस्कारेणैवाध्यासोत्पत्तिर्निराबाधा। तथा च प्रमाजन्यसंस्काराविषयत्वरूपपूर्वपक्षहेतुरप्रयोजकः। लाघवात्पूर्वानुभव जनितसंस्कारस्य हेतुत्वात्। एवमितरेतराविवेकेनेत्यनेनाध्यासहेतुर्विवेकाग्रहोऽप्युक्तः। यद्यपि पूर्वपक्षिणा अहमनुभवे आत्मा विषयः। सच मम देहः मम चक्षुरित्यादिरीत्या इदंप्रत्ययगोचरेभ्यो देहेन्द्रियादिभ्यो

भेदेनाहमनुभवगोचरः। तथा च भेदज्ञानसत्वादहं कृशोऽहं मनुष्य इत्यादि प्रत्ययो गौणो नत्वध्यासः, विवेकाग्रहरूपतत्कारणाभावादित्यभिप्रेयते। तथापि यत्र यत्र गौणीवृत्त्या तच्छब्दबोध्यत्वं तत्र तच्छब्दमुख्यार्थप्रतियोगिकभेदज्ञानविषयत्वमिति नियमात् प्रकृते च कदापि नाहं स्थूल इत्यादिविवेकाग्रहादहं स्थूलोऽहं कृश इत्यादीनामध्यासत्वमेव। सिंहो माणवक इत्यादिगौणस्थले नायं सिंह इति भेददर्शनस्य नियतत्वेन प्रकृते तादृशभेदग्रहाभावात्। मम देह इति तु न भेदग्रहः। राहोः शिर इतिवदप्युपपत्तेः। अन्यथा यदि देह एवाहं प्रत्ययगोचरो न स्यात्तदा 'अहमिहैवास्मि सदने जानान' इति कथमुपपद्यते? आत्मनो विभुत्वेन गृहैकदेशवर्तित्वासम्भवात्, गौणत्वे च जानान इत्यस्यान्वयानुपपत्तेः। तस्माद्भेदग्रहाभावेनाहं कृशोऽहं काण इत्यादीनामध्यासत्वमेव। एवमहं कर्तेत्यादिरप्यन्तःकरणाध्यासमूलक एव तद्धर्मकर्तृत्वाद्यध्यास इति अध्यस्ततादृशकर्तृत्वादिबन्धस्यात्मज्ञानान्निवृत्तिसम्भवेन तादृशात्मज्ञानाय वेदान्तविचारः कर्तव्य इति विचारशास्त्रमारम्भणीयमिति सिद्ध्यति। एवं कर्तृत्वादीनामात्मन्यध्यस्तत्वेन वास्तवत्वाभावात् शुद्धजीवस्य ब्रह्माभेदसम्भवेन विषयोऽपि सम्भवतीति विषयप्रयोजनसम्भवाच्छास्त्रमारम्भणीयमिति।

अथ रत्नप्रभारीत्या—— लोक्यते मनुष्योऽहमित्यभिमन्यत इति लोकः, अर्थाध्यासः। तद्विषयो व्यवहारोऽभिमानो ज्ञानाध्यासः। जाड्यचैतन्यादिधर्माणां धर्मिणावहंकारात्मानौ तयोरत्यन्तविविक्तयोरितरेतरभेदाग्रहेणान्योन्यस्मिन्नन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति योजना। अत्रेन्द्रियतादात्म्याध्यासस्यास्फुटत्वेऽपि तद्धर्माध्यासस्य अहमन्ध इत्यादेः स्पष्टतासूचनाय धर्म्यध्यासात् पृथक् धर्माध्यासकथनम्। अन्योन्याध्यासेऽपि शून्यवादो नास्ति – अहंकारादीनां स्वरूपतोऽध्यासादात्मनस्तु संसर्गमात्राध्यासात् (कल्पितवस्तु तादात्म्यप्रतियोगित्वोपहितेनैव रूपेणध्यासादित्यर्थः) आत्मनस्सत्यत्वं तद्भिन्नस्यानृतत्वमनिर्वचनीयत्वमिति सूचनाय सत्यानृते मिथुनीकृत्येति। अध्यस्य

मिथुनीकृत्य लोकव्यवहार इति पदानां समानार्थकत्वेऽप्यध्यास व्यक्तीनां भेदात् पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यासं प्रति संस्कारद्वारा पूर्व कालवृत्तित्वेन हेतुत्वद्योतनार्थं ल्यपूप्रयोगः। एतदेव प्रवाहतोऽनादित्वार्थक नैसर्गिकपदेन स्पष्टयति। अत्र नैसर्गिकपदेन संस्काररूपनिमित्तकारणमुक्तम्। अध्यासस्योपादानमाह— मिथ्याज्ञाननिमित्त इति। मिथ्या च तदज्ञानं च मिथ्याज्ञानं तदेव निमित्तमुपादानञ्च। आत्मतत्त्वावारकत्वेन दोषत्वादीश्वरोपाधित्वात् संस्कारकालकर्मादिनिमित्ताकारेण परिणामित्वाच्चा ज्ञानस्य निमित्तत्वम्। अज्ञानस्य ज्ञानाभावरूपतानिरासाय मिथ्येति। मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानस्य लक्षणम्। इच्छाप्रागभावे बन्धे चातिव्याप्तिवारणाय सत्यन्तसाक्षात्त्वे। तत्र प्रमाणम्—। अशनायाद्यतीतं विवेकिप्रसिद्धमात्मतत्त्वं नास्ति न प्रकाशत इति व्यवहारः आत्मनि भावरूपावरणनिमित्तो भवितुमर्हति। अस्ति प्रकाशते इति व्यवहारपुष्कलकारणे सति तद्विपरीतव्यवहारत्वात् यन्नैवं तन्नैवं, यथा अस्ति प्रकाशते घट इति व्यवहारः। अहमिदमिति। आध्यात्मिककार्याध्यासेषु अहमिति प्रथमः। यद्यप्यहमित्यध्यासे अधिष्ठानारोप्यांशद्वयं नोपलभ्यते तथाप्ययो दहतीतिवदहमुपलभे इति दृग्दृश्यांशयोरुपलम्भः।

## अध्यासलक्षणभाष्यम् ———

स्मृतिरूपः परत्र पूर्वदृष्टावभासः तत्र भामतीरीत्या ——— अवभास इत्येव लक्षणम्। मिथ्याज्ञानमित्यर्थः। इदानीमवसन्नोऽवमतो वा भास इति योगार्थः। रूढ्यर्थमादाय विस्तृतलक्षणं परत्रेत्यादि। पूर्वं दृष्टस्यावभासः पूर्वदृष्टावभासः। पूर्वदृष्टमित्यनेन पूर्वदर्शनमात्रमपेक्ष्यते न वस्तुसत्तेति सूच्यते। तेन चारोप्यस्यानृतत्वं लभ्यते। आरोपाधिष्ठानं सत्यं परत्रेत्यनेनोच्यते। प्रत्यभिज्ञायामतिव्याप्तिवारणार्थं स्मृतिरूप इति। असंनिहितविषय इत्यर्थः। इदानीं परत्रेत्यस्यानिवेशे असन्निहितविषयकत्वे सति पूर्वदृष्टावभासत्वस्य स्मृतौ सत्वात्तत्रातिव्याप्तिः स्यादतः परत्रेति। एवञ्चासन्निहितस्य परत्र प्रतीतिरध्यास इति लक्षणम्। असन्निहितत्वञ्च

आरोप्यस्यधिष्ठाने परमार्थतोऽसत्वम्। अधिष्ठानसमसत्ताकत्वाभाववद्विषयक ज्ञानमध्यास इति निष्कर्षः।

अत्रासन्निहितविषयकत्वोक्त्या सत्ख्यातिनिरासः, असतो देहादेर्ज्ञानविषयत्वस्य स्वीकारात्। सत्ख्यातिवादिनो हीत्थमाक्षिपन्ति ——— देहेन्द्रियादीनां यदि प्रकाशमानत्वं तर्हि सत्त्वमेवायातम्। सत्ता नाम न जातिरर्थक्रियाकारिता वा। सत्तायामपि सत्तान्तराभ्युपगमेऽनवस्थापातात्। तथा च देहादयस्सन्तः प्रकाशमानत्वादात्मवत् । तथाचानृतविषयकत्वमध्यासस्य यदुक्तं सत्यानृते मिथुनीकृत्येति तदसङ्गतमिति। अत्रोच्यते। प्रकाशमानत्वरूपहेतुः मरुमरीचिकोदके व्यभिचरितः। तत्र प्रकाशमानत्वे सत्वेऽप्यबाध्यत्वरूपसत्त्वाभावात्। यदि तत्रापि प्रकाशमानत्वात् सत्त्वमभ्युपगम्येत तदा तज्ज्ञानेन प्रवृत्तिस्तत्पानेन पिपासाशान्तिश्च स्यात्। तस्मादारोपितस्य प्रकाशेऽपि वस्तुसत्त्वमभ्युपगन्तुमशक्यम्। न च सलिलस्य स्वरूपतः सत्त्वात्तस्य भ्रमविषायत्वमुपपद्यते। देहेन्द्रियादीनां तु स्वरूपतोऽप्यसत्त्वात् कथमारोपविषयत्वमिति वाच्यम्। तोयात्मनाऽसतां मरीचीनां तोयात्मतयाऽनुभवगोचरत्वमस्तीति असतोऽप्यारोपविषयत्वस्याङ्गीकर्तव्यत्वात्। ननु मरीच्यादीनां तोयात्मनाऽसत्त्वं नाम तोयात्मनाभावः। तथा च भाव एव भावान्तरात्मनाऽभावस्स्वरूपेण तु भाव इत्युभयविधस्यापि तस्य भावत्वेन भावव्यतिरेकेणाभावान्तरस्याभावेन सद्रूपत्वादनुभवगोचरत्वं युक्तम्। देहादिप्रपञ्चस्य त्वसत्त्वात् कथमनुभवगोचरत्वं कथं वा चिदात्मन्यारोपः। यत्तु असत्ख्यातिवादिनोच्यते – देहादेरसतः समस्तसामर्थ्याभावेन ज्ञानविषयत्वे सामर्थ्याभावेऽपि ज्ञानमेव स्वसमानाकारप्रत्ययसामर्थ्येनासद्विषयकभानरूपं भवति। ज्ञानस्य येयमसत्प्रकाशनशक्तिः सैवाविद्येति, तन्न। येयमसत्प्रकाशनशक्तिर्विज्ञानस्य तस्याश्शक्याभावात्। असदेव शक्यमिति चेत् किमेतत्कार्यमुत ज्ञाप्यम्। नाद्यम्। असतः कार्यत्वासम्भवात्। नापि ज्ञाप्यम्। तद्धि किं शक्त्याश्रयज्ञानादतिरिक्तज्ञानेन ज्ञाप्यमुत तेनैव वा? नाद्यः ज्ञानान्तरानुपलब्धेः। तदुपलब्धावपि तत्रापि तादृक्शक्तेस्सत्वेन तच्छक्यस्य

ज्ञाप्यत्वे तज्ज्ञापकज्ञानान्तरापेक्षायां तत्र तत्राप्येवमित्यनवस्थापातात्। तेनैव ज्ञानेन ज्ञाप्यं चेत् तदपि न सम्भवति। असत्प्रत्यययोस्संबन्धाभावात्। यदि सम्बन्धः किमसदधीननिरूपणत्वं सतो ज्ञानस्यासता सम्बन्धोऽविना भावो वा? नाद्यः, असतो निरूपकत्वासम्भवात्। नान्त्यः, त्वन्मते कार्यकारणभावस्य तादात्म्यस्य वाऽविनाभावसम्बन्धमूलत्वात्, प्रकृते चासत्प्रत्यययोस्तदभावात्। तथा च असत आरोपो न सम्भवतीति चेन्न। यदि सत एव प्रतीतिविषयत्वं तदा मरीचिषु तोयाकारप्रतीतिरपि सद्विषयिणीति तादृशप्रतीतेर्भ्रमत्वं बाध्यत्वं च न स्यात्। यदि चातोयात्मकानां मरीचीनां तोयात्मकतया प्रत्ययविषयता स्यात् तदा स प्रत्ययो न बाध्येत न वा भ्रमत्वमापद्येत । न चातोयात्मकान्मरीचीनतोयात्मकतया प्रत्ययो यदि गृह्णीयात्तदा न बाध्येत भ्रमोऽपि न स्यात् मरीचीन् तोयात्मना गृह्णन् प्रत्ययः कथमभ्रान्तः स्यात् कथं वा न बाध्येतेति वाच्यम्। तोयाभावात्मकेषु मरीचिषु तोयात्मकत्वं भ्रमविषयीकृतमित्युक्तं खलु, तत्तोयात्मकत्वं किं सत्? उतासदथवा सदसदात्मकं वा, आहोस्विदनिर्वचनीयं वा। नाद्यः, त्वया मरीचीनां तोयाभावस्वरूपत्वोक्त्या तोयाभावस्वरूपत्वानुपपत्तेः। न द्वितीयः, मरीचीनां तोयात्मत्वमसदित्युच्यमानं किं मरीचिस्वरूपमेवेति उच्यते, किं वा वस्त्वन्तरमथवा तुच्छमिति। नाद्यः, मरीचिस्वरूपस्यासत्त्वा भावात्। न द्वितीयः, मरीचिषु तोयाकार प्रत्यये मरीचयस्तोयं चेति द्वे एंव वस्तुनी भासेते। तत्र तद्वस्त्वन्तरं यदि मरीचयस्तदा मरीचय इति प्रतीतिस्स्यात् न तोयमिति। यदि गङ्गातोयं तदा गङ्गायां तोयमिति स्यात्, न पुनरिह तोयमिति। नापि तुच्छपक्षस्साधीयान्। अलीकस्यापरोक्षानुभवगोचरत्वासम्भवात्। सदसदिति तु विरुद्धम्। तस्मादनिर्वचनीयमेव देहादिकं भ्रमविषयः। तथा च सत्त्वसाधकतयोक्तः प्रकाशमानत्वहेतुः मरुमरीचिकोदके व्यभिचरितः। तथा च भामतीरीत्य सत्ख्यातिनिरासार्थमुच्यत इत्यादिग्रन्थः।

रत्नप्रभारीत्या तु – आहेत्यादि कथं पुनरिति पर्यन्तं लक्षणभाष्यम्। तदारभ्य सम्भावनापरम्। तमेतमविद्याख्यमित्यादि सर्वलोकप्रत्यक्ष इत्यन्तं प्रमाणपरमिति विभागः। परत्रावभास इत्येव लक्षणम्। स्मृतिरूप इति पूर्वदृष्टेति पदद्वयं तदुपपादनार्थम्। प्रथममर्थाध्यासलक्षणमुपपाद्यते। अवभास्यत इत्यवभासो रजतादिः। तस्या योग्यमधिकरणं परत्र पदार्थः। अयोग्यत्वमारोप्यान्ताभाववत्त्वम्। तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववति प्रतीयमानत्वं लक्षणम्। संयोगेऽतिव्याप्तिवारणायैकावच्छेदेनेति। घटाभाववति भूतले घटानयनानन्तरं घटस्य प्रतीयमानत्वात्तत्राति व्याप्तिवारणाय स्वसंसृज्यमाने इति।

पृथिवीत्वावच्छेदेन प्रतीयमानगन्धेऽतिव्याप्तिवारणाय स्वात्यन्ताभाववतीति। ननु शुक्तौ रजतोत्पादकसामग्र्यभावात् कथं रजतसंसर्गवत्त्वं शुक्तेरित्याशङ्कापरिहाराय स्मृतिरूप इति। स्मर्यत इति स्मृतिः। तस्य रूपमिव रूपं यस्येति स्मर्यमाणसदृश इत्यर्थः। सादृश्योपपादकं पूर्वदृष्टेति। दृष्टं दर्शनम्। संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासः। तथा च संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति। दोषसंस्काराधिष्ठानज्ञानजन्यत्वविवक्षणात् संस्कारमात्रजन्यस्मृतौ नातिव्याप्तिः। एवञ्च दोषसंप्रयोगसंस्कारबलाच्छुक्तौ रजतमुत्पन्नमिति तादृशरजतसंसर्गवत्त्वं शुक्तेरुपपद्यते।

अन्ये तु स्मृतिरूपपूर्वदृष्टपदाभ्यां दोषसंप्रयोगसंस्कारजन्यत्वं कार्याध्यासलक्षणमुक्तमित्याहुः। अपरे तु स्मृतिरूपः स्मर्यमाणसदृशः। सादृश्यञ्च प्रमाणाजन्यज्ञानविषयत्वम्। पूर्वदृष्टपदं तज्जातीयपरम्। तथा च प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणम्। परत्रावभास इति तु अध्यासमात्रलक्षणम्। स्मर्यमाणगङ्गादावभिनवघटे चातिव्याप्तिवारणाय प्रमाणेत्यादिदलयम्। तत्र रत्नप्रभारीत्या स्मृतिरूपेत्यादिपदद्वयं सामान्यलक्षणस्योपपादकम्। अन्ये तु मतरीत्या तत्पदद्वयं कार्याध्यासलक्षणपरम्। परे तु मतरीत्या प्रातीतिकाध्यासलक्षण

प्रदर्शनपरमिति विवेकः। प्रकारताविशिष्टत्वमध्याससामान्यलक्षणम्। वैशिष्ट्यं स्वविशिष्टविशेष्यताविशिष्टत्वसंबन्धेन। स्ववैशिष्ट्यं स्वावच्छेदकधर्मसंबन्धावच्छिन्नाभावनिरूपितस्वाश्रयावच्छेदकदेशावच्छिन्नाधिकरणतावद्वृत्तित्व संबन्धेन। विशेष्यतावैशिष्ट्यञ्च स्वविशिष्टप्रकारतावत्त्वसंबन्धेन। स्ववैशिष्ट्यञ्च स्वनिरूपितत्वसंबन्धेन। प्रकारतावत्त्वं स्वाश्रयत्वस्वनिरूपकत्वान्यतरसंबन्धेन।

रत्नप्रभारीत्या तं केचिदिति आत्माख्यात्यन्यथाख्यात्योः संग्राहकम्। केचित्त्वित्यनेनाख्यातिमतमुच्यते। अन्येत्वित्यनेनासत्ख्यातिरुच्यते। भामतीरीत्या तु प्रथमे आत्मख्यातिः द्वितीये अख्यातिः तृतीयेऽन्यथाख्यातिः उच्यते।

आत्मन्यध्यासासम्भवं शङ्कते कथं पुनरिति। अस्य ग्रन्थस्य भामतीरीत्याऽयमभिप्रायः। प्रातिलोम्येनासज्जडदुःखविलक्षणत्वेन सच्चिदानन्दात्मना अञ्चति प्रकाशत इति प्रत्यक् स चासावात्मा च प्रत्यगात्मा सच परप्रकाश्यत्वाभावादनंशत्वाच्चाविषयस्तस्मिन् देहेन्द्रियादिधर्माणामध्यासोऽयुक्त इत्याक्षेपः। कथमयुक्त इत्याह– सर्वो हीति। निरंशे स्वप्रकाशे आत्मन्यधिष्ठानसामान्यांशविशेषांशयोरभावात् सामान्यांशज्ञानविशेषांशाज्ञानरूपाध्यासकारणस्याभावात्, एवमात्मनः स्वप्रकाशतयाऽविषयत्वाच्चाध्यासाभावः। प्रकाशाविषयत्वे पुरोऽवस्थितत्वस्यापरोक्षत्वस्याभावान्नाध्यासः। तथा च स्वप्रकाशत्वपक्षे विशेषांशाग्रहणरूपाध्यासकारणाभावात् प्रकाशसामान्याभावपक्षे चाधिष्ठानसामान्यज्ञानरूपाध्यासकारणाभावाच्च नाध्यास इति भावः। युष्मत्प्रत्ययापेतस्येति भाष्येणात्मनश्चैतन्यभास्यत्वाभ्युपगमे विषयत्वं स्यात्। तथा चानात्मत्वं स्यादिति तत्परिहाराय भास्यत्वं नास्तीति वक्तव्यम्। तथा चाविषयत्वमायातमित्यध्यासो न सम्भवतीत्यर्थः। परिहरति उच्यते इति। यद्यप्यात्मनः स्वरूपतः स्वप्रकाशत्वमनंशत्वञ्च तथापि निरंशोऽपि चिदात्मन्यविद्याकल्पितांशभेदसत्त्वात् चिद्रूपेण भानादधिष्ठानसामान्यांशज्ञानम्, आनन्दस्य भानेऽपि

तस्यापरिच्छिन्नत्वादिविशेषांशाभानाद् विशेषांशाज्ञानश्चाध्यासकारणमस्तीत्यध्याससम्भव इत्युपाध्यवच्छिन्नस्य चास्मत्प्रत्ययविषयत्वात् विषयत्वं चास्तीति नाध्यासासम्भव इति भावः। न तावदित्यादिग्रन्थस्यात्मनश्चिद्रूपत्वेन स्वयंप्रकाशतया वस्तुतोऽविषयत्वेऽप्यौपाधिकेन रूपेण विषयत्वमस्तीति भावः। अपरोक्षाध्यासाधिष्ठानत्वेऽपरोक्षत्वमात्मन आवश्यकं तस्यात्मन्यभावे कथमध्यास इत्याशङ्कानिरासायापरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरिति। प्रत्यगात्मनः प्रसिद्धिरिति भेदोपचारः पुरुषस्य चैतन्यमितिवत्। तथा च प्रत्यगात्मनोऽपरोक्षत्वादित्यर्थः पर्यवस्यति। नचाधिष्ठानापरोक्ष्यं नियमेनाध्यासेऽपेक्षितमित्याह - नचायमस्ति नियम इति।

रत्नप्रभारीत्या तु यत्रापरोक्षाध्यासाधिष्ठानत्वं तत्रेन्द्रियसंप्रयुक्तत्वे सति विषयत्वमिति व्याप्तिः। आत्मनि व्यापकाभावाद्व्याप्याभाव इत्याशङ्कते कथं पुनरिति। तादृशव्याप्तिमेव प्रदर्शयति सर्वो हीति। उच्यत इति। अधिष्ठानारोप्ययोरेकज्ञाने भासमानत्वमेवाध्यासव्यापकम्। भासमानत्वं च भानप्रयुक्तसंशयनिवृत्त्यादिफलभाक्त्वं नतु भानभिन्नत्वघटितं गौरवात्। तथा चात्मनो विषयत्वाभावेऽपि नाध्यासासम्भव इति भावः। अस्मत्प्रत्ययविषयत्वात् अहमित्याकारकप्रत्यये भासमानत्वात्। ननु भानरूपस्यात्मनः कथं भासमानत्वं तद्विषयत्वं विना तत्फलभाक्त्वायोगादिति शङ्कायामपरोक्षत्वादिति। स्वप्रकाशत्वादित्यर्थः। स्वप्रकाशत्वे हेतुः प्रत्यगात्मप्रसिद्धेरिति। आबालपण्डितमात्मनः संशयादिशून्यत्वेन प्रसिद्धेः स्वप्रकाशत्वमित्यर्थः। (यत्र यत्राध्यासाधिष्ठानत्वं तत्र भासमानत्वमित्येव व्याप्तिः।) पूर्वपक्ष्युक्तव्याप्तेर्व्यभिचारं प्रदर्शयति नचायमस्ति नियम इत्यादिना।

इतरेतराध्यासं पुरस्कृत्य सर्वे लौकिका वैदिकाश्च व्यवहाराः प्रवृत्ता इत्युक्तम्। शास्त्रजन्यप्रमा अविद्यावद्वृत्तिर्न भवति अविद्याविरोधित्वादिति शङ्कते कथं पुनरिति। अध्यासाभावे प्रवर्तकाभावेन प्रमाणप्रवृत्तिर्नोपपद्यते। चिदात्मनः कूटस्थनित्यस्य व्यापारासम्भवेन प्रवर्तकत्वानुपपत्तेः। अतो

व्यापारवद्बुद्धितादात्म्याध्यासेनैवात्मनः प्रवर्तकत्वमावश्यकम्। एवं रीत्या प्रमाणानामविद्यावदाश्रितत्वं (प्रवर्तकतया) इति समाधत्ते उच्यते इत्यादिना। प्रमाणानां प्रवृत्तिरेव मास्त्वित्यत आह नहीन्द्रियाणीति। प्रमाणप्रवृत्तिमन्तरा व्यवहारो न भवतीत्यर्थः। प्रमाणानां स्वयमेव प्रवृत्तिरस्त्विति शङ्कायामाह - करणानां कर्त्रानधिष्ठितानां स्वकार्ये व्यापारो न सम्भवति। अचेतनं चेतनाधिष्ठितं कार्यं करोतीति व्याप्तेः। देहस्यैव प्रेरकत्वमस्त्वित्यत आह न चानध्यस्तात्मेति आत्मतादात्म्याध्यास रहितस्य देहस्य प्रेरकत्वं न सम्भवति। सुषुप्तेऽपि व्यापारप्रसङ्गादित्यर्थः। आत्मा करणतादात्म्याध्यासशून्यो व्यापारवत्त्वात् कुविन्दवदिति शङ्कायामाह– न चैतस्मिन् सर्वस्मिन्नसति।इति ससंगत्वमुपाधिः। देहादितादात्म्याध्यासरहितस्यात्मनो व्यापारवत्त्वाभावात् स्वरूपासिद्धिश्च। एवं प्रमाणप्रेरकत्वानुपपत्त्याध्यासः सिद्धः। प्रमाश्रयत्वेनापि समर्थयति नच प्रमातृत्वानुपपत्ताविति। इत्थश्च न पुनरुक्तिः। अन्तःकरणवृत्तेः परिणामभूतायाः जडत्वात् प्रकाशकत्वं न सम्भवति। अतोऽन्तःकरणे चिदात्मनोऽध्यासे तत्परिणामोऽपि चिद्रूपो भवेदिति रीत्या प्रमाणानां प्रमारूपफलाभावेऽप्रवृत्तेः प्रमायाश्चाध्यासं विनाऽभावादध्यासवदाश्रितत्वं प्रमाणानां सिद्ध्यतीति। अविद्याविरोधित्वादिति पूर्वपक्षिणा यो हेतुरुक्तः स नास्ति विद्यायाः वृत्तिप्रतिफलित चैतन्यात्मिकाया अविद्यारूपत्वेनाविद्या विरोधित्वाभावादित्यर्थ इति भामती । तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमाया अन्तःकरणतादात्म्याध्यासरूपप्रमात्राश्रितत्वात्, प्रमाणानामविद्याव दाश्रितत्वं यद्यपि प्रत्यक्षसिद्धं तथापि पुनरपि केन प्रमाणेन (कथं) अविद्यावद्विषयत्वमिति शङ्काभिप्रायः। देवदत्तकर्तृको व्यवहारस्तदीयदेहादि ष्वहं ममाध्यासमूलकस्तदन्वयव्यतिरेकानुविधायित्वात् सामान्यव्याप्तौ यथा मृन्मूलो घट इत्यनुमानं प्रमाणमित्यभिप्रेत्याह उच्यत इति। देहेन्द्रियादिष्वित्यनेन सुषुप्तावध्यासाभावे व्यवहाराभाव इति व्यतिरेकः प्रदर्श्यते। देहाध्यासोऽस्तु किमिन्द्रियादिषु ममताध्यासेनेत्यत आह- नहीन्द्रियाणीति। तदभावे द्रष्टृत्वादिव्यवहारो न स्यादित्यर्थः।

देहाध्यासकैमर्थ्यं परिहरति न चाधिष्ठानमिति। अधिष्ठानमाश्रयः शरीरमित्यर्थः। नन्वात्मसंयुक्तं शरीरमेवाश्रयोऽस्त्विति शङ्कायामाह न चानध्यस्तात्मेति। आत्मनोऽसंगत्वादाध्यासिकसम्बन्धातिरिक्तसम्बन्धो न सम्भवतीति भावः। नन्वात्मनः स्वतश्चेतनतया प्रमातृत्वोपपत्तेः किं देहाद्यध्यासेनेत्यत आह - न चैतस्मिन्निति। प्रमातृत्वं प्रमाश्रयत्वम्। प्रमा यदि नित्यचैतन्यं तर्हि तदाश्रयत्वं नोपपद्यते। करणवैयर्थ्यञ्च। यदि वृत्तिमात्रं तर्हि जडत्वाज्जगदान्ध्यप्रसङ्गः। अतो वृत्तीद्धो बोधो बोधेद्धा वृत्तिर्वा प्रमा तदाश्रयत्वमात्मनोऽसंगस्य वृत्तिमन्मनः तादात्म्याध्यासं विना न सम्भवतीति भावः। प्रमातृत्वमेव मास्त्विति शङ्कायामाह - नचेति॥ यदुक्तं व्यवहारस्याध्यासान्वयव्यतिरेकानुविधायित्वं, तन्न। विदुषामध्यासाभावेऽपि व्यवहारसत्त्वादित्याशङ्क्याह पश्वादिभिरिति। किं विद्वत्त्वमखण्डब्रह्मसाक्षात्कार उत यौक्तिकात्मानात्मभेदज्ञानम्? आद्ये बाधिताध्यासानुवृत्त्या व्यवहारः। द्वितीये परोक्षज्ञानस्यापरोक्षाध्यासानिवर्तकत्वाद्विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषादध्यासवत्त्वेन तुल्यत्वात् - अध्यासान्वयव्यतिरेकानुविधायित्वमप्रतिहतमित्यर्थः। विवेकिनः अध्यासवन्तो व्यवहारवत्त्वात् पश्वादिवदिति प्रयोगः। अथवा पण्डितप्रवृत्तिरध्यासमूलिका प्रवृत्तित्वात् पश्वादिप्रवृत्तिवत्। एवं निवृत्तिपक्षकानुमानमपि। लौकिकव्यवहारे पशुसाम्यमुपपादयति यथाहीत्यादिना। प्रत्यक्षादिव्यवहारस्तत्काल इति। यदाऽध्यासस्तदा व्यवहारः सुषुप्तौ तदभावे तदभाव इति अध्यासान्वयव्यतिरेकानुविधायी व्यवहार इत्यर्थः। ननु यद्यपि लौकिकव्यवहारोऽध्यासमूलकस्तथापि शास्त्रीयव्यवहारो न तादृशः। तस्य देहातिरिक्तात्मज्ञानपूर्वकत्वादित्याशङ्क्य प्रतिब्रूते शास्त्रीये त्विति। शास्त्रीयव्यवहारो देहभिन्नात्मज्ञानमात्रमपेक्षते। तच्च नाध्यासविरुद्धम्। यत्त्वसंसार्यात्मज्ञानं तस्याध्यासविरोधित्वेऽपि तथाविधज्ञानं शास्त्रीयव्यवहारेऽनपेक्षितम्, अनुपयुक्तत्वाद्विरुद्धत्वाच्च। अपि त्वध्यासमेवापेक्षत इत्याह तथापीत्यादिना। अध्यासमुदाहरति। तद्यथा पुत्रेत्यादिना। पुत्रादिनिरूपितं

स्वामित्वं देहेऽस्ति पुत्रादिस्वस्य साकल्ये वैकल्ये वा स्वामित्वस्यापि साकल्यं वैकल्यं सम्पद्यते। तदाश्रयदेहतादात्म्याध्यासाश्रयत्वात्, आत्मनोऽपि साकल्यं वैकल्यं वेति अहमेव विकलः सकलो वेत्यध्यासः। धर्माध्यासे हि त्रीणि कारणानि धर्म्यध्यासः, धर्मिप्रतिबिम्बाध्यासः, धर्मिप्रतिसम्बन्ध्यध्यास इति। तत्र धर्म्यध्यासादहं काण इति। लोहितः स्फटिक इति धर्मिप्रतिबिम्बाध्यासात्। साकल्याध्यासः धर्मिप्रतिसम्बन्ध्य ध्यासात्। एवमहं प्रत्ययिनमित्यादि। अज्ञाने केवलात्मनः संसर्गाध्यासः, मनस्यज्ञानोपहितस्य, देहादौ मन उपहितस्य। एवमात्मनि बुद्ध्याद्यध्यासात् कर्तृत्वादिलाभः। बुद्ध्यादावात्माध्यासाच्चैतन्यलाभः। प्रहाणायेति। प्रकृष्टं हानं प्रहाणम्। चरमनाश इत्यर्थः। नाशे चरमत्वं च पदार्थविशिष्टत्वम्। वैशिष्ट्यं च स्वप्रतियोगिकत्व स्वविशिष्टप्रागभावसमानकालीनत्वसम्बन्धा वच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन। वैशिष्ट्यं च स्वसजातीयप्रतियोगिकत्व - स्वसामानाधिकरण्योभयसम्बन्धेन। एवमध्याससमर्थनेन विषयप्रयोजनसम्भवप्रदर्शनाद्विषयप्रयोजनवत्त्वाच्छास्त्र मारम्भणीयमिति प्रथमवर्णकम्।

वर्णकान्तरं तु गतार्थत्वागतार्थत्वाभ्यां संशये प्रवृत्तम्। तत्र पूर्वपक्षः - ब्रह्ममीमांसाशास्त्रं नारम्भणीयम्। पूर्वमीमांसानिर्णीतार्थव्यतिरिक्तार्थक त्वाभावात्। तत्प्रयोजनभिन्नप्रयोजनकत्वाभावाच्च। ब्रह्ममीमांसाशास्त्रं पूर्वमीमांसानिर्णीतार्थव्यतिरिक्तार्थकत्वाभाववदुपासनारूपधर्मप्रतिपादक– त्वाज्जीवातिरिक्तब्रह्माबोधकत्वाच्च। वेदान्ताः जीवातिरिक्तब्रह्मबोधका न भवन्ति विधिमात्रपरत्वात्। वेदान्ताः विधिमात्रपराः वेदत्वात् कर्मकाण्डवदिति प्राप्ते ब्रह्ममीमांसाशास्त्रं पठनीयं पूर्वमीमांसानिर्णीतार्थव्यति रिक्तार्थकत्वात्, पूर्वमीमांसालब्धप्रयोजनभिन्नप्रयोजनकत्वाच्च। धर्मः चोदनातिरिक्तवेदार्थभिन्नः चोदनाप्रमाणकत्वादित्यनुमानेन धर्मातिरिक्तवे दार्थस्य सिद्धौ तदर्थकत्वेन ब्रह्ममीमांसाशास्त्रस्यारम्भणीयत्वं सिद्ध्यति। तदेतदभिप्रेत्य भाष्ये व्याचिख्यासितस्येत्युक्तम्। इति द्वितीयवर्णकम्।

आनन्तर्यार्थः - आनन्तर्यतात्पर्यकः। मङ्गलानन्तरारम्भेत्यादि कोशादथशब्दस्यारम्भार्थकत्वमस्तु। अथ योगानुशासनमित्यत्र योगानुशासनमारभ्यत इतिवत्। तत्राह - नाधिकारार्थः। अधिकारः आरम्भः। इच्छाया विषयसौन्दर्यजन्यतया कर्तव्यत्वासम्भवात्। विचारलक्षणायामपि कर्तव्यपदाध्याहाराद्वैयर्थ्यमेव। मङ्गलार्थकत्वेऽपि मङ्गलस्य कर्तृत्वादिना वाक्यार्थेऽन्वयो न सम्भवति। पूर्वप्रकृतेऽर्थे अपेक्षा यस्याः अर्थान्तरतायाः फलतो ज्ञानत आनन्तर्याव्यतिरेकात्। तथाच पूर्वप्रकृतापेक्षायाः आनन्तर्यज्ञाननियतज्ञानविषयत्वात्। तथाच पूर्वप्रकृतधर्मिणमपेक्ष्य पक्षान्तरोपन्यासे अथशब्दस्य प्रयोगेऽन्यत्र दृष्टेऽपि प्रकृते विकल्पाभावान्न पूर्वप्रकृतापेक्षार्थकोऽथशब्दः किंत्वानन्तर्यार्थक एव ग्राह्यः।

यथा च हृदयाद्यवदानानामित्यादि अधिकृताधिकारे प्रमाणाभावादिति। यस्य यन्निरूपितपाठादि विवक्षितक्रमवत्त्वं तस्य तन्निरूपितशेषत्व-तन्निरूपितशेषित्व तन्निरूपितशेषित्वाश्रयनिरूपितशेषत्व तदधिकृताधिकार्यत्वैतदन्यतमवत्त्वम्। प्रयाजदर्शयोरवदानानां दर्शपूर्णमाससोमयागयोः क्रमनियमार्थं चतुर्णामन्यतमत्वनिरूपकतया निवेशः। धर्मब्रह्ममीमांसे न क्रमवत्यौ विभिन्नफलकत्वाद् विभिन्नजिज्ञास्यकत्वाच्च। सौर्यार्यम्णप्राजापत्यचरुवत् कामचिकित्सातन्त्रवच्चेत्याशयेन फलभेदं जिज्ञास्यभेदं च विवृणोति - फलजिज्ञास्येत्यादिना। चोदनाप्रवृत्तिभेदादिति। अज्ञातज्ञापकं वाक्यं चोदना तस्याः प्रवृत्तिर्बोधकत्वं तदभेदादित्यर्थः। तथा च प्रवर्तकमानमेयो धर्मः उदासीनमानमेयं ब्रह्म इति जिज्ञास्यभेदान्न तन्मीमांसयोः क्रम इति भावः। शमदमादिसम्पत् = शान्तो दान्त इत्यादिवाक्योपात्त कर्तृविशेषणत्वरूपानुगतानतिप्रसक्त धर्ममादाय शमादि षट्कस्यैव ग्रहणम्। मुमुक्षा = अहं मुक्तःस्यामितीच्छा। तादृशेच्छोपलक्षितचिदंशस्य मुक्त्यन्वयः। विशिष्टधर्माणां केषाञ्चित् प्रमाणानुसारेण विशेष्यगतत्वं स्वीक्रियते।

वेदान्तशास्त्रं नारम्भणीयमसम्भवदधिकारिकत्वात्, असम्भवदधिकारिकं असम्भवत्साधनचतुष्टयकत्वात्। ब्रह्मजिज्ञासाधिकारी साधनचतुष्टयवान्न भवति, तद्घटकवैराग्याभाववत्त्वात्। वैराग्याभाववान् वैराग्यायोग्यत्वात्; वैराग्यायोग्यो वैराग्यायोग्यत्वेनानुभवसिद्धत्वात्। आमुष्मिकसुखस्यापामसोममित्यादिश्रुत्या नित्यत्वावगमेन तत्र वैराग्यासम्भवात् इत्याशङ्कायां सूत्रे अत इत्युक्तम्। अत्र ब्रह्मपदेन तत्प्रमाणं वेद उपस्थितः। सच अथशब्दोक्त हेतुत्वसमर्थनयोग्यत्वात् तद्यथेह कर्मचित इत्यादिरत इति सर्वनाम्ना परामृश्य हेतुपञ्चम्या निर्दिश्यते।यत्कृतकं तदनित्यमिति व्याप्त्युपोद्बलिततद्यथेहेत्याद्यागमेनामुष्मिकसुखेऽपि साधनपारतन्त्र्यक्षयितालक्षणदुःखयोर्विद्यमानत्वलाभात् तत्रापि वैराग्यं सम्भवतीति प्रदर्शयति भाष्ये यस्मादित्यादिना। एवंच अतः स्वर्गादीनां क्षयिताप्रतिपादकाद् ब्रह्मज्ञानस्य च परमपुरुषार्थहेतुता प्रतिपादकादागमाद् वैराग्यघटितसाधन सम्पत्। ततश्च ब्रह्मजिज्ञासेति सिद्धम्। तथा चाथातशशब्दाभ्यामधिकार्यसम्भवनिराकरणाच्छास्त्रमारम्भणीयमिति सिद्धम्। अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्मेति भाष्यम्। अवगतिः = आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यम्। तदेव पर्यन्तोऽवधिः यस्याखण्डसाक्षात्कारात्मकवृत्तिज्ञानस्य तदेव जिज्ञासायाः कर्म तदेव फलम्। कारणं त्वापातज्ञानम्। ज्ञाने-नहीति = ज्ञानं वृत्तिरवगतिस्तत्फलमिति भेदः। यद्वा- अवगतिः अविद्यानिवर्तको वृत्तिरूपः साक्षात्कारः। तत्साधनं विचारजनिततात्पर्यावधारणं प्रकृत्यर्थः। अवगतेश्चाविद्यानिवर्तकतया पुरुषाभिलाषविषयत्वमिति ब्रह्मावगतिर्हि पुरुषार्थ इति। ब्रह्म जिज्ञासितव्यमित्यनेन सन् प्रत्ययस्य विचारलक्षकत्वं सूचितं भवति। अथ चतुर्थवर्णकम् - विचारशास्त्रस्य ब्रह्म विषयः।तस्य च प्रसिद्धत्वेऽप्रसिद्धत्वेऽपि विषयत्वं न सम्भवति कुत इति चेत् प्रसिद्धत्वेऽज्ञातत्वाभावात् अप्रसिद्धत्वेऽप्रसिद्धस्य केनापि विचारयितुमशक्यत्वाच्च। तथा च तज्ज्ञानाभावे फलमपि नास्तीति वेदान्तशास्त्रमनारम्भणीयमिति पूर्वपक्षं प्रदर्शयति तत्पुनर्ब्रह्मेति। श्रुतौ सूत्रे च ब्रह्मशब्दप्रयोगात् तदन्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते।

सच बृह बृहि, वृद्धाविति व्याकरणानुसारेण महत्त्वरूपः। तस्य च संकोचाभावान्निरतिशयमहत्त्वरूप एव सः। सच परिच्छेदत्रयशून्यस्यैवेति नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म प्रसिद्धमिति प्रदर्शयति उच्यत इत्यादिना। चैतन्यरूपात्मत्वसामान्येन ब्रह्मणः प्रसिद्धावपि पूर्णानन्दरूपब्रह्मत्वेन न प्रसिद्धिरस्तीति ब्रह्मणः सामान्यतः प्रसिद्धावपि विशेषतोऽप्रसिद्धत्वाद्विप्रतिपत्तिदर्शनाच्च ब्रह्मणो विषयत्वसम्भव इति विषयप्रयोजनसम्भवाद्विचारशास्त्रमारम्भणीयमिति सिद्धान्तः। तत्र स्थूलसूक्ष्मक्रमेण विप्रतिपत्तीरुपन्यस्यति देहमात्रमित्यादिना। ब्रह्मणो जीवाद्भिन्नत्वे निरतिशयबृहत्त्वं न सम्भवतीति जीवाभिन्नं ब्रह्मैव जिज्ञास्यम्। अतो विप्रतिपत्तीनां जीवकोटिकत्वेऽपि नासङ्गतिः। विस्तरः शङ्करपादभूषणे द्रष्टव्यः। किमात्मा देहादिरूपः उत तद्भिन्न इति विप्रतिपत्तिकोटित्वेन, देहेन्द्रियमनोबुद्धिशून्यान्युक्त्वा, तद्भिन्नत्वेऽपि कर्तृत्वभोक्तृत्वादिमान्नवेति विप्रतिपत्तिकोटित्वेन तार्किकसांख्यपक्षावुपन्यस्याकर्तृत्वेऽपीश्वराद्भिन्नो नवेति विप्रतिपत्तिकोटित्वेन योगिमतमुक्त्वा ईश्वराद्भिन्नो नेति स्वमतमाह आत्मा स भोक्तुरिति। जीवो ब्रह्मैवात्मत्वाद् ब्रह्मवदिति युक्तिः तत्त्वमसीति वाक्यं च सिद्धान्तिनः। देहादिरात्मा अहंप्रत्ययगोचरत्वाद् व्यतिरेकेण घटवदिति युक्त्याभासः, स वा एष पुरुषोऽन्नरसमयः, ते ह वाचमूचुः मन उवाच, योऽयं विज्ञानमयः असदेवेदमग्र आसीत्, कर्ता भोक्ता, अनश्नन्नन्यः, आत्मानमन्तरोयमयतीति च वाक्याभासानि। देहादिरनात्मा भौतिकत्वात् दृश्यत्वादित्याद्यनुमानैरानन्दमयोऽभ्यासादित्यादिसूत्रैश्चाभासत्वमुच्यते। श्रवणविधिना आरब्धमिदं सूत्रं शास्त्रान्तर्गतमेव शास्त्रारम्भं प्रतिपादयति। यथाध्ययनविधिर्वेदान्तर्गत एव कृत्स्नवेदाध्ययनं प्रयुङ्क्ते तद्वत्।

इति जिज्ञासाधिकरणम्।

## जन्माद्यस्य यतः १–१–२

जिज्ञास्यत्वेन भवदभिमतमप्रसिद्धं लक्षणरहितत्वात्। ब्रह्म लक्षणरहितं लक्षणत्वेनाभिमत ब्रह्मभिन्नवस्तुरहितत्वात्। एवं ब्रह्म न वाक्यप्रमितिविषयः अपदार्थत्वात्। ब्रह्म अपदार्थोऽप्रसिद्धत्वादित्यभिप्रायेणाक्षिपति ब्रह्म जिज्ञासितव्यमित्युक्तमित्यादिना। ब्रह्म लक्षणवत् जगदुत्पत्त्यादिकारणत्वेन श्रुत्या प्रतिपाद्यमानत्वात्। अस्य जगत इत्यादिभाष्येण ब्रह्ममात्रकर्तृकत्वं साध्यते। तथाहि - इदं जगत् ब्रह्मकर्तृकं तदितराकर्तृकत्वे सति सकर्तृकत्वात्। नामरूपाभ्यां व्याकृतस्येत्यनेन जगत् प्रधानकर्तृकं निरुपाख्यकर्तृकं च न नामरूपाभ्यां व्याकृतत्वादित्यभिप्रेतम्। प्रधानस्याचेतनत्वेन तेन व्याकृतत्वासम्भवात्। जगत् ग्रहलोकपालादि कर्तृकं न अनेककर्तृभोक्तृघटितत्वादित्यनेककर्तृभोक्तृसंयुक्तस्येत्यनेन विवक्षितम्। जगत् यादृच्छिकं, स्वाभाविकं, असर्वशक्तिकर्तृकं च न, प्रतिनियतदेशकालनिमित्तक्रियाफलघटितत्वादित्यभिप्रेत्य प्रतिनियतेत्यादिविशेषणम्। एवञ्च ब्रह्मेतराकर्तृकत्वे सिद्धे कार्यत्वेन च सकर्तृकत्वे सिद्धे जगतो ब्रह्मकर्तृकत्वं सिद्ध्यतीत्यभिप्रायः। एतदनुमानं श्रुत्युपोद्बलकमित्यस्मदभिमतं स्वतन्त्रमिति तार्किका वदन्ति तन्निरस्यति - एतदेवेत्यादिना। अनुमानपरमेवेदं सूत्रमिति कुतो न वाच्यमिति शङ्कायामाह वेदान्तवाक्येति। उत्तरत्र वेदान्तवाक्यानामेव विचार्यमाणत्वादत्रापि तदेवाभिप्रेतम्। केवलानुमानस्य सर्वज्ञ सर्वशक्तिब्रह्मसाधकत्वायोगात्। अनुमानेन दृष्टान्तबलात् सशरीरस्यैव कारणस्य सिद्ध्यापत्तेः। वाक्यार्थविचारेत्यनेन शब्दस्यैव ब्रह्मावगतौ कारणत्वमुक्तम्। तथासति प्रमाणान्तरानपेक्षायां मननादिकं कुत इत्याशङ्कायां सत्सुतु इत्यादिना। संशयादिनिवृत्त्यर्थं मननादिकमुपयुज्यत इत्यर्थः। ननु ब्रह्म न मननाद्यपेक्षं वेदार्थत्वाद्धर्मवदित्याशङ्कायामाह न धर्मजिज्ञासायामिति। साध्यत्वेन धर्मस्यानुभवायोग्यत्वं, अनपेक्षितानुभवत्वं चोपाधिरिति (ज्ञानमात्रेण फलानुपयोगित्वं) सूचयति कर्तव्ये हि विषये इति। धर्मस्यानुष्ठानमात्रेण फलसाधनत्वादनुष्ठानस्य च परोक्षज्ञानेनापि सम्भवान्नानुभवापेक्षेति

अनपेक्षितानुभवत्वं धर्मे वर्तते। (ननु धर्मस्याप्यनुभवेनैव फलजनकत्वमस्तु। तथाच नोपाधेः साध्यव्यापकतेत्याशङ्कायामाह पुरुषाधीनेति। धर्मस्यानुष्ठान साध्यत्वात् पूर्वसिद्धत्वाभावान्नानुभवविषयत्वयोग्यता) अनुभवायोग्यत्व-मुपाधिं प्रदर्शयति पुरुषाधीनेति। तथा च पुरुषप्रयत्नसाध्यत्वान्नानुभव योग्यता धर्मस्येत्यर्थः। पुरुषाधीनात्मलाभत्वमुपपादयति कर्तुमकर्तुमिति। कर्तुमकर्तुं कर्तुमन्यथाकर्तुमित्यन्वयः।ननु धर्मे पुरुषस्य स्वातन्त्र्ये विधिप्रतिषेधशास्त्राणां वैयर्थ्यं स्वत एव प्रवृत्तिसम्भवादित्यत आह विधिप्रतिषेधा इति। विधिप्रतिषेधाः धर्मे अर्थवन्तः, इष्टसाधनत्वानिष्टसाधन त्वप्रतिपादकत्वादित्यभिप्रायः। ननु अतिरात्रे षोडशिनं गृह्णातीति विधिवाक्यमिष्टसाधनताप्रतिपादकं न भवति नातिरात्रे षोडशिनं गृह्णातीति वाक्यविरुद्धत्वात् कलञ्जं भक्षयेदिति वाक्यवदित्यत्राह - विकल्पोत्सर्गापवा दाश्चेति। विकल्पत्वापवादत्वान्यतराभावेन सोपाधिकत्वान्न पूर्वोक्तहेतुः साधकः। अतो विध्यादि नाइष्टादिसाधनत्वज्ञानं निष्प्रत्यूहमिति। ननु यदि विकल्प्यमानत्वाद्धर्मस्य पुरुषाधीनात्मलाभत्वं तर्हि भूतवस्तुन्यपि विकल्पसम्भवात्तस्यापि पुरुषाधीनात्मलाभत्वे तत्रापि प्रमाणान्तरानपेक्षास्या दित्याशङ्क्याह - नतु वस्त्वेवमिति। तथा च प्रमात्मकविकल्पविषयत्वं पुरुषाधीनात्मलाभत्वे तन्त्रम्। तादृशं च धर्मस्य साध्यस्यैव सम्भवति नतु सिद्धस्य ब्रह्मण इति भावः। तर्हि ब्रह्मणः कथमस्तित्वादिविकल्पा इत्यत आह विकल्पनास्त्विति। सवासनमनस्तन्त्रा इत्यर्थः। तथा च ब्रह्मणो भूतवस्तुत्वात् तद्विषयकयथार्थज्ञानं वस्तुतन्त्रमेव नतु पुरुषतन्त्रम्। तदुत्पत्तौ च मननादिकमप्युपयुज्यते। तथा च धर्मे इव ब्रह्मणि न केवलं श्रुत्यादयः प्रमाणम् किन्तु मननादयोऽपीत्यभिप्रायः। "ननु भूतवस्तुत्वे ब्रह्मण, इति" वेदान्ताः प्रमाणान्तरसिद्धार्थगोचरतयाऽनुवादका भवितुमर्हन्ति भूतार्थप्रतिपादकवाक्यत्वात् यथा नद्यास्तीरे पञ्च भूतानि सन्तीति वाक्यं तथा च मूलप्रमाणमनुमानमेव परीक्षणीयं नतु वेदान्ता इति कथं सूत्राणां वेदान्तवाक्यग्रथनार्थतेत्याशङ्काभिप्रायः। ब्रह्म वेदेतरप्रमाणगम्यं न भवति प्रत्यक्षादिप्रमाणजन्यज्ञानविषयत्वाभावकूटवत्त्वे

सति प्रमाणगम्यत्वात्। ब्रह्म अनुमानप्रमाणगम्यं न भवति व्याप्ति ज्ञानविषयत्वाभावात् । यत्कार्यं तद्ब्रह्मजमिति व्याप्तिग्रहो न सम्भवति। ब्रह्मण इन्द्रियाविषयत्वात्। यत्कार्यं तत्सकारणकमिति व्याप्त्या कारणसिद्धावपि तस्य ब्रह्मत्वं श्रुतित एवेति प्रदर्शयति कार्यमात्रमेव तु गृह्यमाणमिति। विषयं प्रदर्शयति भृगुर्वै वारुणिरित्यादिना। यतो वेत्यादि वाक्यं ब्रह्म लक्षयति नवेति संशयः। अस्याक्षेपसंगत्या प्रवृत्तेः पूर्वाधिकरणस्य यन्मुमुक्ष्वभिलषितमोक्षलाभरूपं प्रयोजनं तदेवास्यापि प्रयोजनम्। तत्र जगतस्सर्वस्याप्यनित्यजडदुःखपरिच्छिन्नरूप त्वात् तादृशं नित्यशुद्धबुद्धस्वभावस्य ब्रह्मणो लक्षणं न भवति। नित्यशुद्धबुद्धमुक्तस्वरूपत्वमेव लक्षणमिति वक्तुमपि न शक्यम्। तस्याप्रसिद्धत्वात्। तथा च लक्षणं न सम्भवतीति पूर्वपक्षः। जगतो ब्रह्मधर्मत्वासम्भवेपि जगत्कारणत्वं ब्रह्मलक्षणं भवितुमर्हति। कारणं ब्रह्मानूद्य तस्यानन्दत्वविधानात् स्वरूपलक्षणमपि सम्भवतीति सिद्धान्तः। आनन्दादयः प्रधानस्येति न्यायेन सत्यज्ञानानन्तत्वादीनामुपसंहारः।

सूत्रे जन्मादीति जन्मस्थितिभङ्गमुच्यते। एकैकहेतुत्वस्य लक्षणत्वस म्भवेऽप्यन्यतमस्यैवोक्तौ तदितरकारणवस्त्वन्तरशङ्कया वस्तुपरिच्छेदाद् ब्रह्मणो निरतिशयबृहत्वं न सिद्ध्येत्। अतस्समुदायोपादानम्। अस्येति कार्यस्येदन्तया निर्देशो वैचित्र्यज्ञापनार्थः। तस्य च प्रयोजनं ब्रह्मभिन्नस्य संसार्यादेः कारणत्वशङ्कानिराकरणम्। श्रुताविमानीति बहुवचनेन निर्दिष्टस्यास्येत्येकवचनेन निर्देशः। एकेनैककार्यवदनायासेन निर्मितत्वज्ञाप नार्थः। तस्यापि पूर्वोक्तमेव फलम्। यतो वेति श्रुतौ यच्छब्दः शुद्धधर्मिबोधकः। अत एव यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेति दीधितौ व्याख्यातम्। यत इत्यत्र यच्छब्दस्य ब्रह्मार्थः। पञ्चम्या उपादानत्वं निमित्तत्वं चार्थः। उपादानत्वमात्रस्वीकारे निमित्तमन्यदिति सम्भावनायां वस्तुपरिच्छेदशङ्का स्यात्। अत उभयपरत्वम्। येन जातानि यत्प्रयन्तीत्यस्याप्यर्थस्य संग्राह्यत्वादप्युभयपरत्वं वक्तव्यम्। तद्ब्रह्मेति वाक्यशेष इति। अत्र निर्णेयतात्पर्यकवाक्योपक्रमगत ब्रह्मेतरलिङ्गा

नभिभूतत्वस्य ब्रह्मलिङ्गे सत्वात् स्पष्टब्रह्मलिङ्गता। निर्णेयतात्पर्यकवाक्यो पक्रमगतसम्भाव्यमानस्वारस्यकब्रह्मेतरलिङ्गाभिभूत ब्रह्मलिङ्गकत्वमस्पष्टब्रह्म लिङ्गकत्वम्। ब्रह्मेतरलिङ्गे सम्भाव्यमानस्वारस्यकत्वं च ब्रह्मेतरोपस्थित्यज नक ब्रह्मोपस्थितिजनकलिङ्गानभिभूतत्वम्। ब्रह्मोपस्थित्यद्वारकब्रह्मेतरोप स्थितिजनकलिङ्गत्वं ब्रह्मेतरलिङ्गत्वम्। उभयत्रापि तदभिभूतत्वं तज्ज्ञानप्रतिबद्धज्ञानविषयत्वम्।

इति जन्माद्यधिकरणम्।

## शास्त्रयोनित्वात् १–१–३

अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद इत्यादि वाक्यं विषयः। किमिदं वाक्यं वेदकारणत्वेनेश्वरस्य सर्वज्ञत्वं साधयति नवेति संशयः। जगत्कारणत्वेनार्थात्सिद्धं सर्वज्ञत्वं शास्त्रयोनित्वेन समर्थ्यत इत्येकविषय कत्वं सङ्गतिः। पूर्वोक्तवाक्यं ब्रह्मणो वेदकारणत्वेन सर्वज्ञत्वं न साधयति वेदस्य पौरुषेयत्वापातात्। नापि वेदोपादानत्वेन, वेदस्य सर्वार्थप्रकाशनशक्तिमत्त्वेऽपि ब्रह्मणि तस्य सिद्ध्यसम्भवाद् घटस्य जलाहरणसमर्थत्वेऽपि मृदस्तदभावदर्शनात्। सिद्धावपि वेदवदचेतनस्यैव ब्रह्मणः प्रकाशकत्वापत्तिरिति पूर्वपक्षं मनसि निधाय समाधत्ते, महत ऋग्वेदादेरित्यादि, ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृत्वाद्यो यद्वाक्यप्रमा णकर्ता स तद्विषयादधिकविषयज्ञः, यथा पाणिनिरिति प्रयोगः। महतः इत्यादिकारणं ब्रह्मेत्यन्तेन वेदो ब्रह्मकार्यं, तथा च ब्रह्म वेदकर्तृ इति हेतुरुक्तः। नहीदृशस्येत्यनेन व्यतिरेकमुखेन प्रतिज्ञा, यद्यदित्याद्युदाहर णम्। विस्तरार्थमिति - अर्थशब्दो वस्तुसामान्यवाचकः, तस्य धर्म रूप वस्तुविशेषे लक्षणा। तथाच विस्तरोऽर्थो धर्मो यस्य शास्त्रस्येति विग्रहेण विस्तृतमिति पर्यवसितोऽर्थः। अतः 'प्रथने वाव' शब्दे इति घञिविस्तार इति शङ्काया नावकाशः। किमु वक्तव्यमित्याद्युपनयः, तस्य महतो भूतस्येत्यादिनिगमनम्। अत्र वेदकर्तृत्वं सकलवेदार्थज्ञानपूर्वकं वक्त्रन्तराधीनानुपूर्व्यनपेक्षस्वकर्तृकपूर्वपूर्वनियतानुपूर्वीकसकलवेदोच्चारण –

कर्तृत्वम्। एवञ्च वेदस्य सापेक्षत्वं नास्तीति वेदे पुरुषस्वातन्त्र्यलक्षणपौरुषेय त्वाभावान्न पूर्वपक्षोक्तदोषप्रसक्तिः। एतादृशकर्तृत्वं ब्रह्मणोऽतीतानन्तकल्प स्थवैदिकक्रमस्वरवर्णादिप्रतिसन्धानं विना नोपपद्यते। तच्चान्तःकरणादिर हितस्य ब्रह्मणः स्वरूपचैतन्येनैव वाच्यम्। तथाच स्वसंसृष्टसर्वावभासक त्वात् सर्वज्ञत्वं सिद्ध्यति।

वेदगतसर्वार्थप्रकाशकत्वशक्तिः स्वाश्रयोपादानगता तदुपादानब्रह्मगत शक्तिपूर्विका वा कार्यगतप्रकाशशक्तित्वाद्दीपगतप्रकाशशक्तिवदित्यनुमाने-नापि सार्वज्ञ्यसिद्धिः। इदं च प्रदीपवत्सर्वार्थावद्योतिन इत्यनेन सूचितम्।

अथ द्वितीयवर्णकम् ——— तत्त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुति विषयः। उक्तवाक्यं ब्रह्मण उपनिषदेकगम्यत्वं प्रतिपादयति नवेति संशयः। पूर्वसूत्रेण ब्रह्मणो लक्षणप्रदर्शनादनेन प्रमाणप्रदर्शनाल्लक्षणप्रमाणयो रेकब्रह्मज्ञानफलकत्वादेकफलकत्वं संगतिः। ब्रह्म वेदेतरप्रमाणागम्यं न, अनुमानगम्यत्वात्। ब्रह्म अनुमानगम्यं कार्यलिङ्गकानुमानविषयत्वादिति पूर्वपक्षं मनसि निधाय सिद्धान्तमाह – यथोक्तमृग्वेदादीति। ब्रह्म वेदेतरप्रमाणगम्यं न भवति शास्त्रयोनित्वात्। न चाप्रयोजकम्। यदि ब्रह्म वेदेतरप्रमाणगम्यं स्यात्तर्हि तत्प्रतिपादकशास्त्रस्य निरपेक्षप्रमाणत्वं न स्यादित्यनुकूलतर्कसत्वात्। निरपेक्षप्रमाणत्वं स्वानुपजीविप्रमाणान्तर जन्यप्रमितिविषयत्वायोग्यार्थबोधकत्वम्। पूर्वपक्षोक्तहेतुरसिद्धः। सर्वज्ञत्व विशिष्टकर्तरि कार्यलिङ्गकानुमितिविषयत्वाभावात्। अत्र पूर्वपक्षे अनुमानस्यैव विचार्यतासिद्धिः सिद्धान्ते वेदान्तानामिति फलभेदः। स्पष्टब्रह्मलिङ्गवाक्यस्य समन्वयप्रदर्शनात् श्रुत्यध्यायपादसंगतयः।

इति शास्त्रयोनित्वाधिकरणम्।

## तत्तु समन्वयात् १-१-४

भाः कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते —

तस्मान्न ब्रह्मणः शास्त्रप्रमाणकत्वमिति प्राप्ते इत्यन्तं भाष्यम्।

ब्रह्म शास्त्रप्रमाणकं न भवति क्रियाभिन्नत्वाद्वायुक्षेपिष्ठत्वादिवत् प्रत्यक्षादिविषयत्वाच्च। ब्रह्म प्रत्यक्षादिविषयः सिद्धत्वाद्घटवत्। ब्रह्म वेदान्तप्रमाणकं न भवति प्रयोजनरहितत्वात्। वेदान्ताः सिद्धब्रह्मपरा न भवन्ति निरपेक्षप्रमाणत्वात् सप्रयोजनत्वाच्च। तथा च वेदान्तानां कर्तृदेवतादिप्रकाशनार्थत्वेन क्रियाविधिशेषत्वमुपासनादिक्रियान्तरविधानार्थत्वं वेति पूर्वपक्षमाह कथं पुनरिति। वेदान्ताः विध्येकवाक्यत्वेनैवार्थवन्तः सिद्धार्थवेदत्वान्मन्त्रार्थवादादिवदित्याह न क्वचिदिति।

भाष्यम्— इदमुच्यते-----तस्मात्सिद्धं ब्रह्मणः शास्त्र प्रमाणकत्वम्।

सिद्धान्तयति इदमुच्यत इति। तत् - ब्रह्मेत्यादि जगदुत्पत्तिस्थितिलयकारणमित्यन्तं पक्षनिर्देशः, वेदान्तशास्त्रादेवावगम्यत इति साध्यं , समन्वयात् वेदान्ततात्पर्यविषयत्वात्। यो यद्वाक्यतात्पर्यविषयः स तत्प्रमाणकः, यथा कर्मवाक्यप्रमेयो धर्म इति प्रयोगः। तथा च वेदान्तानां क्रियार्थत्वं न सम्भवति यत्परश्शब्दस्स शब्दार्थ इति न्यायादित्याह नच तद्गतानामिति। वेदान्तानां कर्मशेष कर्त्रादि स्तावकत्वं न सम्भवति। किन्तु ज्ञानद्वारा क्रियातत्साधन नाशकत्वमेवेत्यर्थवादादिवत् क्रियार्थत्वं न सम्भवति। यदुक्तं निरपेक्षप्रमाणत्वहेतुकमनुमानं तदप्रयोजकम्। नच यदि वेदान्ताः सिद्धपराः स्युस्तर्हि सापेक्षप्रमाणानि स्युरित्यनुकूलतर्कसत्त्वान्नाप्रयोजकतेति वाच्यम्। तन्मूलभूतव्याप्तेः पौरुषेयत्वेन सोपाधिकत्वादित्यपि शब्देन सूचयन् सिद्धत्वलिङ्गकप्रत्यक्षादिविषयत्वानुमानं दूषयति नच परिनिष्ठितेति। ब्रह्म न वेदान्तप्रमाणकं निष्प्रयोजनत्वादित्यनुमानं दूषयति यत्तु हेयोपादेयेति। यत्तूक्तमुपासनापरत्वं वेदान्तानामिति तत्र किं प्राणादिवाक्यानामुत सर्वेषामिति।

तत्राद्यमङ्गीकरोति देवतादीति। द्वितीयं निराकरोति नतु तथेति। वेदान्ताः न ब्रह्मणि प्रमाणमक्रियार्थत्वात्। सोऽरोदीदित्यादिवाक्यवदित्यनुमानमानं आशङ्क्य निष्फलार्थकत्वमुपाधिरित्याह - यद्यपि - तथाप्यात्मज्ञानस्य फलपर्यन्तत्वादिति। अन्यत्र क्रियार्थस्यैव प्रामाण्यं दृष्टमिति वेदान्तानां क्रियार्थत्वाभावे तेषां प्रामाण्यं दुर्विज्ञेयमित्याशङ्क्याह नचानुमानगम्यमिति। चक्षुरादिवद्वेदस्य स्वतः प्रामाण्यज्ञानादनुमानापेक्षा नास्तीत्यर्थः। फलवदज्ञाताबाधितार्थबोधजनकत्वरूपं प्रामाण्यं विधीनां कार्य इव वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं वेदान्तानां ब्रह्मणि प्रामाण्यमन्यथा इन्द्रियान्तरं रूपप्रकाशकं नेति चक्षुषोऽपि रूपप्रकाशकत्वं न स्यादिति।

सदेव सोम्येदमित्यादिवाक्यानि विषयः। वेदान्ताः सिद्धब्रह्मपरा उत कार्यपरा इति संशयः। फलभावाभावाभ्यां सापेक्षत्वानपेक्षत्वाभ्यां वा संशयः। पूर्वाधिकरणद्वितीयवर्णकेनाक्षेपसंगतिः। आम्नायस्य क्रियार्थत्वनियमात् सिद्धार्थत्वे वेदान्तानामनुवादकत्वापत्तेः ब्रह्मस्वरूपमात्र बोधे हेयोपादेयरहितत्वाद्ब्रह्मबोधकत्वं न युक्तमिति पूर्वपक्षः। आम्नायस्य सप्रयोजनत्वमित्येवनियमो नतु क्रियार्थत्वमिति। सिद्धार्थत्वेऽपि वेदान्तानामपौरुषेयत्वेन प्रामाण्यसम्भवात् हेयोपादेयराहित्येऽपि ज्ञानमात्रेण पुरुषार्थोपयोगित्वाच्च सिद्धेऽपि वेदान्ताः प्रमाणमिति सिद्धान्तः सार्वात्म्यादि स्पष्टब्रह्मलिङ्गानां वाक्यानां समन्वयकथनात् पादसंगतिः। पूर्वपक्षे वेदान्तेषु प्रवृत्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलम्।

इति प्रथमवर्णकम्।

## अथ द्वितीयवर्णकम्

पौरुषेयवाक्यानां सिद्धेऽर्थेऽपि प्रामाण्यमस्ति। वेदान्तेषु परं तन्न सम्भवति। निरपेक्षत्वभङ्गापत्तेः निष्प्रयोजनत्वापत्तेश्चेति पूर्वमतं ब्रह्मात्मैक्यस्य प्रमाणान्तरागम्यत्वेन सापेक्षत्वाप्रसक्तेः, तदवगममात्रेण च सकलानर्थनिवृत्तिरूपप्रयोजनसम्भवाच्च निरस्तम्। इदानीं कार्यान्वित

एव शक्तिग्रहाद्वेदान्ताः केवलं सिद्धब्रह्मबोधका न किन्तु उपासनाविधिपराः, उपासनयाऽपूर्वद्वारा मोक्षः फलमिति मतमुपपाद्य खण्डयति अत्रापरे इति। ब्रह्म कार्यपरवेदान्तप्रमाणकं कार्यविषयतया प्रतीयमानत्वादित्यनुमानमभिप्रेत्ययद्यपीति। वेदान्ताः कार्यपराः सिद्धेऽज्ञातसंगतिकत्वात् शास्त्रत्वात् सप्रयोजनत्वादिति प्रयोगमभिप्रेत्य प्रवृत्तिनिवृत्तीत्यादिइतियुक्तमित्यन्तो ग्रन्थः। शास्त्रत्वहेतौ भव्यबोधकत्वमुपाधिं शङ्कते नन्विति। साधनाव्यापकत्वसन्देहेनोपाधिः, सन्दिग्ध इत्यभिप्रायेण समाधत्ते नार्हत्येवमिति। सप्रयोजनत्वहेतुमुपपादयति तदुपासनाच्चेति। यत्कार्यपरत्वाभाववत् तत् सप्रयोजनत्वाभाववदिति व्यतिरेकव्याप्तौ रज्जुरियं नायं सर्प इति वाक्ये व्यभिचारं शङ्कते ननु वस्त्विति। दर्शनयोग्यप्रयोजनाभावविशिष्टकार्यपरत्वाभाववत्त्वं यत्र तत्र प्रयोजनवत्त्वाभाव इति व्याप्तेः विवक्षितत्वान्न व्यभिचार इति समाधत्ते– स्यादेतदेवमिति। वेदान्ताः कार्यपराः मननादिनिधिघटितत्वादित्यनुमानमभिप्रेत्याह श्रोतव्यो मन्तव्य इत्यादि। तथा च मोक्षोऽदृष्टद्वारा कार्यसाध्यो वैदिकत्वादग्निहोत्रादिवदिति पूर्वपक्षः।

भाष्यम् — अत्राभिधीयत इत्यादि।

वेदान्ता न विधिपराः स्वार्थे फलवत्त्वे सति नियोज्यरहितत्वादिति सिद्धान्तयति अत्राभिधीयते। मोक्षो वेदान्तविधेयोपासनासाध्यो न भवति, कर्मफलविलक्षणत्वत्। तारतम्यरहितत्वं नित्यत्वञ्च वैलक्षण्यम् वेदान्ताः कार्यपरा न कर्मफलविलक्षणफलजनकज्ञानजनकत्वादित्याह कर्म ब्रह्मविद्येति। यदि मोक्ष उपासनासाध्यः स्यात्तर्हि तारतम्यवाननित्यश्च स्यात् कर्मफलवदित्यत्र दृष्टान्तमुपपादयति शारीरमित्यादिना। कर्म, तत्फल, तदधिकारि, तत्फलप्रापकमार्गतारतम्यमनेन ग्रन्थेन प्रदर्शितम्। मोक्षो न कर्मफलं, कर्मफलविरुद्धातीन्द्रियत्वविशोकत्वशरीराद्यभोग्यत्वादिधर्मवत्त्वात् व्यतिरेकेण स्वर्गादिवदिति न्यायानुग्राह्यां श्रुतिमाह अशरीरं वावसन्तमिति। अशरीरमित्यादिश्रुतिभिः शरीरत्रयराहित्यमुच्यते। तादृशा

शरीरत्वमेव मोक्ष इति अशरीरं वावसन्तमि... श्रुत्या उच्यते। तादृशमोक्षस्य कीदृशं नित्यत्वमिति विवेचयति। तत्र किञ्चिदिति – परिणामिनित्यतायाम पारमार्थिकत्वमेव स्यादिति दूषयित्वा कूटस्थ नित्यतां प्रतिपादयति। कूटस्थनित्यमित्यनेन निर्वर्त्यकर्मत्वं, सर्वव्यापीत्यनेन प्राप्यकर्मत्वं, सर्वविक्रियारहितमित्यनेन विकार्यकर्मतां, निरवयमित्यनेन संस्कार्यकर्मतां निषेधति। एतादृशस्य कर्मानधीनतायां प्रमाणमाह अन्यत्र धर्मादिति। मोक्षः उपासनासाध्यो न भवति व्यापाराद्वार कत्वेन प्रतीयमानत्वादित्याह अपि च ब्रह्म वेद इत्यादिना, मोक्षः उपासनासाध्यो न भवति अविद्यानिवृत्तिरूपत्वात् शुक्त्यज्ञाननिवृत्तिवदित्याह त्वं हि नः पितेत्यादिना। ब्रह्मात्मैक्य ज्ञानं प्रमा न भवति सम्पदाद्यन्यतमरूपत्वात् अतोऽविद्यानिवर्तकत्वं न सम्भवतीत्यभिप्रायं निरस्यति नचेदमित्यादिना। ब्रह्मात्मैक्यज्ञानं सम्पद्रूपं विरुद्धयोरेकत्वविषयकत्वान्मनो विश्वेदेवैक्यज्ञानवत्। अथवा विशिष्टक्रिया योगनिमित्तकज्ञानरूपं तादृशत्वेन श्रुत्युक्तत्वात्। वृद्धिक्रियायोगाज्जीवो ब्रह्मेति ज्ञानमित्यभिप्रायः। यद्वा जीवसंस्काररूपं तथैव श्रुत्या प्रतिपाद्यमानत्वात् पत्नीकर्तृकाज्यावेक्षणवत्। आरोप्यविशेष्यक (प्रधान) आलम्बनविशेषणकारोपस्सम्पत्। आरोप्यविशेषणकालम्बनविशे ष्यकारोपोऽध्यासः। इति पूर्वपक्षे, ब्रह्मात्मैक्यज्ञानं सम्पदादिरूपं न भवति वेदान्तमहातात्पर्यविषयीभूतजीवब्रह्मैक्यरूपतत्त्वविषयकत्वादिति निराकरणमभिप्रेत्य तत्रानुकूलतर्कप्रदर्शनपरं संपदादिरूपे हीत्यादि। अविद्यानिवृत्तिपरत्वेन श्रूयमाणत्वादिति हेत्वन्तरे अनुकूलतर्कप्रदर्शनपरं भिद्यत इत्यादिभाष्यम्। ब्रह्मभावापत्तिप्रयोजनकत्वादिति तृतीयहेतौ "ब्रह्म वेदेति" अनुकूलतर्कप्रदर्शनं क्रियते। ज्ञानक्रियाकर्मत्वं ब्रह्मणो बहुश्रुतिविरुद्ध मिति प्रदर्शयति नच विदिक्रियेति। विदिक्रियाकर्मत्वाभावे कथं शास्त्रयोनित्वमित्याशङ्क्य समाधत्ते अविषयत्वे इत्यादिना। वेदान्त जन्यवृत्तिकृताविद्यानिवृत्तिरूपफलशालित्वात्तत्प्रमाणकत्वं वृत्तिप्रतिफलितचै तन्याविषयत्वादविषयत्वमित्यविरोधः। अविद्यानिवृत्तिरूपमोक्षस्यात्मरूप त्वान्न मोक्षस्या नित्यत्वम्। एवं मोक्षः कार्यो न भवत्युत्पत्त्याद्यभाव

कूटवत्त्वादिति। परपक्षे मोक्षस्यानित्यतां प्रसञ्जयति यस्य तूत्पाद्य इत्यादिना। आत्मन्यविद्यामलस्य सत्त्वात्तदपनय उपासनादिक्रियया क्रियत इति शङ्कते स्वात्मधर्म इति। यदि संस्कारो मलनाशस्तर्हि मलः किं कल्पित उत सत्यः? कल्पितश्चेत् ज्ञानेनैव त्वस्य निवृत्तिः। सत्यश्चेत् क्रियया निवर्तते तर्हि सा क्रिया किमात्मनिष्ठा उतान्यनिष्ठा? आद्ये क्रिया स्वाश्रयविकारहेतुरिति ब्रह्मणो विकारित्वेनानित्यत्वापत्तिः। अन्याश्रया तु क्रिया अन्यस्य नोपकरोतीति समाध्याशयः। यदि मोक्षोऽसाध्यः तर्हि शास्त्रवैयर्थ्यमित्यत आह तस्माज्ज्ञानमिति। ज्ञानस्यापि क्रियात्वमाशङ्क्य निराचष्टे ननु ज्ञानं नामेति। तथाच ज्ञानं विधेयं क्रियात्वादित्याशङ्काभिप्रायः। पुरुषकृतिसाध्यत्वं विधेयत्वमुपाधिः। क्रियात्वं चासिद्धमिति निरस्यति वैलक्षण्यादिति। एतदेव विवृणोति क्रियाहीत्यादिना। यदपि केचिदित्यादिना पूर्वपक्षमाभाष्य खण्डयति– वेदान्तः प्रवृत्तिनिवृत्त्यसम्पृक्तवस्तुगृहीतसंगतिको न भवति वाक्यत्वादित्यनुमानस्य पुत्रस्ते जात इति वाक्ये व्यभिचारः। देवदत्तप्रमोदः पुत्रस्ते जातः इति वाक्यार्थज्ञानजन्यः, तदितराहेतुकत्वे सति सहेतुकत्वात्। पुत्रस्ते जात इति वाक्यार्थः पुत्रजन्मरूपः पुत्रजन्मेतराहेतुकदेवदत्तप्रमोदहेतुज्ञानविषयत्वादित्यनुमानाभ्यां भूतेऽप्यर्थे पदानां संगतिग्रहो भवतीति सिद्ध्यति। तथा च व्यभिचारः। सिद्धार्थबोधेऽपि हर्षादिफलदर्शनात्। प्रकृतेऽपि ब्रह्मस्वरूपज्ञानस्य परमपुरुषार्थहेतुत्वात् प्रयोजनवत्त्वं सिद्धपरस्याप्यस्तीति सोऽपि हेतुर्व्यभिचारी। तादृशहितशासनाच्छास्त्रत्वमपि वेदान्तानां सिद्धपरत्वेऽपि सम्भवति। किञ्च ब्रह्मणो नास्तित्वादेव कृत्स्नवेदस्य कार्यपरत्वमुत वेदान्तेषु तस्याभानात्, अथवा कार्यशेषत्वात्, किं वा लोकसिद्धत्वात्, उत मानान्तरविरोधात्? आद्यपक्षत्रयं निराचष्टे औपनिषदस्येति। अनन्यशेषत्वेऽसंसारित्वादिकं हेतुः। नास्तित्वाभावे वेदान्तमानसिद्धत्वमात्मत्वञ्च। लोकसिद्धत्वाभावे हेतुमाह– नन्वित्यादिना तत्साक्षित्वेनेति। मानान्तरानधिगतत्वाच्च न मानान्तरविरोधः। तथा च ब्रह्मणोऽनन्यशेषत्वादबाध्यत्वादपूर्वत्वाद्, वेदान्तेषु स्फुटं भानाच्च

वेदान्तैकवेद्यत्वमुक्तं, तत्र श्रुतिं प्रमाणयति। तन्त्वौपनिषदमिति। किञ्च वेदान्ताः सिद्धवस्तुपराः फलवद्भूतशब्दत्वात् दध्यादिशब्दवादित्याह अपि चेति, आम्नायस्येति। इदानीं निषेधवाक्यवदपि सिद्धार्थपरत्वमाह अपि च ब्राह्मणो नेति। ब्राह्मणो न हन्तव्य इत्यत्र नञः प्रकृत्यर्थेन सम्बन्धाद्धननाभावोऽर्थः, इष्टसाधनत्वं तव्यप्रत्ययार्थः इष्टश्चात्र नरकदुःखाभावः। तत्परिपालको हननाभाव इति वाक्यार्थबोधः। तथाच हननाभावो न क्रिया नवा तत्साधनं तद्बोधकत्वेऽपि निषेधशास्त्रस्य प्रामाण्यं विद्यत एवेत्यर्थः। ननु हननविरोधिसंकल्पक्रियैव हन्त्यर्थसम्बन्धेन नञा बोध्यते। सा च कार्यरूपत्वाद्विधातुमर्हैवेत्याशङ्कां निराचष्टे नच स्वभावप्राप्तेति। शास्त्रजन्येष्टसाधनताज्ञानाजन्यत्वं स्वभावप्राप्तत्वम्। मुख्यार्थस्यैव नञो वक्तुं शक्यत्वेन क्रियालक्षणाया अन्याय्यत्वात् सर्वस्यापि कार्यार्थत्वे विधिनिषेधभेदलोपापत्तेश्चेत्यर्थः। नञर्थाभावबुद्धिः हननादाविष्टसाधनत्वभ्रान्तिमूलं रागेन्धनं दग्ध्वा स्वयं शाम्यतीत्यर्थः। प्रजापतिव्रतादिभ्य इत्यत्रादिपदेन अगौः असुराः अधर्म इत्यादिपरिग्रहः। क्रियाऽबोधकत्वेऽपि वस्तुमात्रकथनेऽपि प्रयोजनस्य विद्यमानत्वान्न क्रियापरत्वं वेदान्तानामित्याक्षेपपूर्वकं सिद्धान्तयति। यत्तु पूर्वपक्षिणोक्तं श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनादिति। तदनूद्य खण्डयति नन्विति। श्रुतब्रह्मण इत्यनेन किं ब्रह्मसाक्षात्कारवत इति विवक्ष्यते उत श्रवणमात्रवत इति। आद्येऽसम्भव इत्याह नावगतात्मभावस्येति। देहाद्यभिमान एव सुखदुःखादौ हेतुः तदभावे न तदिति विवृणोति नहीत्यादिना। चिज्जडयोराध्यासिकतादात्म्यं विनान्यसम्बन्धो न सम्भवतीत्याह सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वादि त्यादिना। धर्माधर्मनिमित्तत्वमाशङ्क्य परिहरति तत्कृतेत्यदिना। बीजाङ्कुरयोरुभयोरपि प्रत्यक्षत्वात्तयोः कार्यकारणभावोऽनादिरिति युज्यते। इह तु धर्माधर्मयोरप्रत्यक्षत्वात्तयोः कार्यकारणभावग्रह एव प्रत्यक्षो न भवति, आगमेन त्वसंगत्व मात्मन उच्यत इत्यात्मनो धर्माधर्मादिकर्तृत्वमेव न सिद्धमिति अन्धपरम्परात्वोक्तिः। देहतादात्म्याध्यास

मूलकोऽहंकार इत्युक्ते देहादिष्वहंप्रत्ययो गौणो नतु मिथ्येति शङ्कते अत्राहुरिति। भेदज्ञानस्य गौणत्वव्यापक स्या भावान्न गौणत्वं किन्तु मिथ्यात्वमेवेत्युपपादयति नेत्यादिना। गृहीतभेदयोरभेदप्रत्ययो गौणः, अगृहीतभेदयोरभेदप्रत्ययो मिथ्येति व्यवस्था। मम शरीरमिति तु राहोः शिर इतिवद्भेदेऽप्युपपद्यत इति न भेदग्रह इति वक्तुं शक्यत इत्यभिप्रायः। ब्रह्मसाक्षात्कारवत इतरदृष्टचैव सशरीरत्वं न स्वदृष्टचेत्यत्र श्रुतिं प्रमाणयति सचक्षुरिति। अचक्षुः सचक्षुरिवेत्यादियोजना। श्रवणमनननिदिध्यासनैः सम्पन्न ब्रह्मसाक्षात्कारस्य संसाराभाव इति निगमयति तस्मादिति। श्रवणमात्रवतस्संसारोऽस्त्येवेति द्वितीयविकल्पे संसारित्वस्येष्टत्वमाह यस्य तु यथापूर्वमिति। मननादिविधिघटितत्वादिति हेतुं खण्डयति यत्पुनरुक्तमित्यादिना। श्रवणवन्मनननिदिध्यासनयोरपि साक्षात्कारार्थत्वात् साक्षात्कृतस्यान्यत्र विनियोगानुक्तेश्च ब्रह्मणः प्रतिपत्तिविधिशेषत्वं वक्तुं न शक्यमित्यर्थः। उक्तरीत्या विधिशेषत्वाभावे सत्येवाथातो ब्रह्म जिज्ञासेति पृथक् शास्त्रारम्भोऽप्युपपद्यते। ब्रह्मणः कार्यशेषत्वाभावे प्राचीनानां गाथामुदाहरति गौणमिथ्येति। अस्मिन्नधिकरणे उदाहृतानां श्रुतीनामर्थः। तदेतद्ब्रह्मापूर्वमिति। मायाभिः बहुरूपं तद् ब्रह्म एतत्=अपरोक्षम्, अपूर्वं कारणरहितमनपरं कार्यरहितमनन्तरं जात्यन्तर-शून्यमेकरसमित्यर्थः। अबाह्यमद्वितीयं, सर्वमनुभवतीति सर्वानुभूश्चिन्मात्रमित्यर्थः। ब्रह्मैवेदममृतं पुरस्तात् = यत् पुरस्तात् पूर्वदिग्वस्तुजातं तदमृतं ब्रह्मैव।

आत्मानमेव लोकम् — लोकं ज्ञानस्वरूपम्। यावत्सम्पातमुषित्वा सम्पतत्यस्माल्लोकादमुं लोकमनेनेति सम्पातः कर्म। यस्यामतं तस्य मतमित्यादि। यस्य ब्रह्मामतं चैतन्याविषय इति निश्चयस्तेन सम्यगवगतम्। यस्य त्वज्ञस्य ब्रह्मचैतन्यविषय इति मतं स न वेद। अविषयतया ब्रह्मविजानतामविज्ञातमदृश्यमिति पक्षः। अज्ञानान्तु ब्रह्म विज्ञातं दृश्यमिति पक्षः। गौणमिथ्यात्मनोऽसत्त्वे = सत् अबाधितं ब्रह्म अहमित्येवं बोधे ज्ञाने सति पुत्रदेहादेर्बाधनान्मिथ्यात्वनिश्चयात् पुत्रदारादेर्गौणात्मनोऽहं

कर्तेत्यादि मिथ्यात्माभिमानस्य चासत्त्वे कार्यं विधिनिषेधादि व्यवहारः कथं भवेत्।

इति समन्वयाधिकरणम्।

## ईक्षत्यधिकरणम्

पूर्वाधिकरणेनाक्षेपसंगतिं प्रदर्शयति एवं तावदिति। प्रधानपुरुषसंयोगा नित्यानुमेया इति। यत्कार्यं तज्जडप्रकृतिकं घटवत्। यज्जडं तच्चेतनसंयुक्तं रथादिवदित्यनुमानम्। काणादास्तु कार्यं कर्तृजन्यं कार्यत्वादित्यनुमानेन कर्तारमीश्वरं, कार्यद्रव्यं स्वन्यूनपरिमाणद्रव्यारब्धं कार्यत्वे सति द्रव्यत्वाद्घटवदित्यनुमानेन परमाणूंश्च समवायिकारणतयाऽनुमिमते। अन्येऽपि बौद्धादयः। असद्वा इदमग्र आसीदिति वाक्याभासः। यद्वस्तु तच्छून्यावसानमिति युक्त्याभासः।

### ईक्षतेर्नाशब्दम् १–१–५

सदेव सोम्येदमग्र असीदित्यादि वाक्यं विषयः। सच्छब्दप्रतिपाद्यं प्रधानं ब्रह्म वेति पूर्वपक्षयुक्तिसिद्धान्तयुक्तिबलाबलानवधारणात् संशयः। प्रधानं सर्वज्ञं, सर्वज्ञताकारपरिणामि– सत्त्वगुणात्मकत्वात्, सदादिशब्दप्रतिपाद्यं प्रधानं सर्वज्ञत्वात् सर्वशक्तिमत्त्वाज्जडप्रकृतित्वाच्चेति प्रयोगं मनसि निधाय पूर्वपक्षमारचयति तत्र सांख्या इत्यादिना। सर्वशक्तित्वसर्वज्ञत्वे प्रधानस्योपपादयति सर्वशक्तित्वमित्यादिना। ब्रह्मणस्सर्वज्ञत्वं न सम्भवतीत्याह न केवलस्येति। ब्रह्म न ज्ञातृ ज्ञानोपकरणरहितत्वाद्घटादिवदित्यभिप्रायः। सिद्धान्ते यज्ज्ञानोपकरणवत् तज्ज्ञातृ यथा जीव इति व्यतिरेकव्याप्तावनित्यज्ञानवत्त्वमुपाधिः। ब्रह्म नोपादानमेकत्वादित्याह अपि चेत्यादिना। सूत्रेण सिद्धान्तमाह ईक्षतेरिति। प्रधानं जगत्कारणं न भवति जगत्कारणबोधकसदादिशब्दप्रतिपाद्यत्वाभावात्। सदादिशब्दप्रतिपाद्यं प्रधानं न ईक्षितृत्वादित्यभिप्रायेणाह न सांख्येत्यादिना। प्रधानस्य सर्वज्ञत्वानुपपत्तिमाह यत्तूक्तमित्यादिना। ईश्वरस्सर्वज्ञो योगिगतसर्वज्ञत्वा-

नुकूलप्रसादवत्त्वादित्याह यत्प्रसादादिति। ईश्वरः कार्यकारणवान् ईक्षणवत्त्वादित्युक्तावनित्येक्षणवत्त्वमुपाधिरित्याह सवितृप्रकाशवदिति। अनित्येक्षणवत्त्वस्य हेतुतायामप्याह अपि चाविद्यादिमदिति। अविद्यादिमत्त्वमुपाधिरित्यर्थः। जीवेश्वरयोर्भेदेऽपसिद्धान्तमाशङ्क्य भेदस्यौपाधिकतया वास्तवत्वाभावेन निरस्यति ननु नास्ति तावदित्यादिना।

सूत्रे प्रधानमिति पक्षवाचकपदं, जगत्कारणवाचिवेदान्तप्रतिपाद्यमिति निषेध्यवाचकपदं चाध्याहार्यम्। तथाच प्रधानं जगत्कारणवाचिवेदान्तप्रतिपाद्यं न भवति। अशब्दमिति हेतुवाचकम्। सदादिशब्दप्रतिपाद्यत्वाभावादिति तदर्थः। अशब्दमित्यस्यावृत्तिः। अ शब्दमिति पदद्वयम्। शब्दमित्यस्य सदादिशब्दप्रतिपाद्यमित्यर्थः। अ इत्यस्य नेत्यर्थः। प्रधानमिति निषेध्यतयान्वयि। ईक्षतेरिति हेतुवाचकं पदम्। तथा च सदादिशब्द-प्रतिपाद्यं प्रधानं न, ईक्षितृत्वादित्यर्थः।

## गौणश्चेन्नात्मशब्दात् १–१–६

सच्छब्दप्रतिपाद्यं जडं प्रधानं न ईक्षितृत्वादिति सिद्धान्त्यनुमाने तेजआदौ व्यभिचारः। (गौणेक्षितृत्वं चेद्धेतुः स्वरूपासिद्धिः) तदैक्षतेत्यत्रेक्षणं गौणं गौणशब्दसमुदायमध्यपतितशब्दबोध्यत्वादिति सन्निधिहेतुना ईक्षणस्य गौणत्वम्। तथाच गौणेक्षणस्य प्रधानेऽपि सम्भवादीक्षितृत्वरूपहेतुः प्रधानभेदसाधको न भवतीत्यत्राहेत्यादि पूर्वपक्षभागार्थः। ईक्षणं मुख्यमनेन जीवेनात्मना स आत्मेत्यात्मशब्दसमानाधिकृतसदादिशब्दार्थनिष्ठत्वादिति संनिध्यपेक्षया वाक्यस्य बलीयस्त्वाभिप्रायेण समाधत्ते यदुक्तमित्यादिना। आत्मशब्दस्यापि गौणत्वशङ्कया उत्तरसूत्रमवतारयति अथोच्येतेत्यादिना। आत्मशब्दस्य नानार्थकत्वेन प्रधाने मुख्योऽपि भवतीति शङ्कते अथवेति।

3

## तन्निष्ठस्य मोक्षोपदेशात् १–१–७

आत्मशब्दो मुख्यो मोक्षसाधकज्ञानविषयत्वात्। यद्यात्मशब्दोऽत्र गौणः प्रधानपरश्च तदा चेतनस्य तदभेदज्ञानेन मोक्षोपदेशो न सम्भवति। चेतनाचेतनयोरैक्यज्ञानस्य भ्रमत्वेन तस्य मोक्षोपयोगित्वासम्भवादिति न प्रधानमित्यादि तस्मान्न सदणिमन्यात्मशब्दस्य गौणत्वमित्यन्त भाष्यार्थः। पूर्वपक्षं खण्डयति भृत्ये त्विति। नानार्थत्वपूर्वपक्षं खण्डयति यत्तूक्तं चेतनाचेतनयोरिति। अनेकार्थत्वमन्याय्यमिति। वस्तुतो ज्योतिश्शब्दोऽपि नानेकार्थ इत्याह ज्योतिश्शब्दोऽपीति। प्रधाननिराकरण स्वतन्त्रहेतुपरतया व्याख्यान्तरमाह अथवेति। सदादिशब्दप्रतिपाद्यं प्रधानं न मोक्षसाधकज्ञानविषयत्वात् सांख्योक्तपुरुषवत्। तस्मिन् सदात्मनि निष्ठाऽभेदज्ञानं यस्य तस्य मुक्तिश्रवणादिति सूत्रार्थः। तत्त्वमसीति सदात्मत्वोपदेशः स्थूलारुन्धतीन्यायेन। तथा च प्रधानस्य सच्छब्दार्थत्वेऽपि न दोष इति शङ्कानिराकरणाय—

## हेयत्व वचनाच्च १–१–८

सदादिशब्दप्रतिपाद्यं प्रधानं न हेयत्वेनानुक्तत्वात् तन्निष्ठस्येति सूत्रात् समासघटकतच्छब्दस्यानुषङ्गं कृत्वा षष्ठचन्ततया विपरिणामेन तस्य सदात्मत्वस्य हेयत्वानुक्तेरिति सूत्रार्थः सम्पद्यते। चकारः प्रतिज्ञाविरोधरूपाभ्युच्चयहेतुसमुच्चायकः। सदादिशब्दप्रतिपाद्यं प्रधानं न सर्वविज्ञानप्रयोजकज्ञानविषयत्वात्। प्रधानविज्ञानेन भोग्यविज्ञानेऽपि भोक्तृविज्ञानासम्भवात्।

## स्वाप्ययात् १–१–९

सदादिशब्दप्रतिपाद्यं प्रधानं न जीवसम्पत्तिमत्वेनोक्तत्वात् सतासोम्यतदा इत्यादि श्रुतौ। सम्पत्तिः कार्योपाधिप्रयुक्तभेदराहित्यम्।

कुतश्च न प्रधानं जगत्कारणमिति भाष्ये जगत्कारणं कुतश्च प्रधानं नेत्यन्वयः।

## गतिसामान्यात् १–१–१०

सदेव सोम्येदमिति वाक्यं चेतनविषयकावगतिजनकं सृष्टिवाक्यत्वात् इतरसृष्टि वाक्यवत्। सच्छब्दप्रतिपाद्यं चेतनत्वविशिष्टजगत्कारणं चेतनत्वेन जगत्कारणत्वेन श्रुत्यन्तरसम्प्रतिपन्नावगतिसमानावगति विषयत्वात्। आत्मविषयकत्वेन साम्यम्।

## श्रुतत्वाच्च १–१–११

सदादिशब्दप्रतिपाद्यं प्रधानं न चेतनत्वात्। सदादिशब्दप्रतिपाद्यं चेतनं जगत्कारणत्वेन श्रुत्युक्तत्वात्। श्रुत्युक्तजगत्कारणत्वं यत्र यत्र तत्र सर्वज्ञत्वमिति व्याप्तिः सूत्रेण सूच्यते। श्रुतिमुदाहरति सर्वज्ञं प्रकृत्य स कारणं कारणाधिपेत्यादि।

सदेव सोम्येदमित्यादि वाक्यं विषयः। सच्छब्दप्रतिपाद्यं प्रधानं ब्रह्म वेति संशयः। ईक्षणस्य गौणत्वमुख्यत्वाभ्यां संशयः। आक्षेपस्संगतिः। गौणत्वेन पूर्वपक्षः। मुख्यत्वोक्त्या ब्रह्मेति सिद्धान्तः। पूर्वपक्षे जीवस्य प्रधानैक्योपासना सिद्धान्ते ब्रह्मात्मैक्यज्ञानं फलम्। स्पष्टब्रह्मलिंगवाक्यानां ब्रह्मणि समन्वयप्रदर्शनात् पादसंगतिः। सप्त सूत्राणि ———

इतीक्षत्यधिकरणम्।

## आनन्दमयोऽभ्यासात् १–१–१२

यद्यपि तत्तु समन्वयादीक्षतेर्नाशब्दमित्यनेनैव सर्वेषां वेदान्तानां सामान्यतो ब्रह्मणि समन्वयः प्रदर्शितस्तथापि केषुचिद्वाक्येष्वन्यपरत्व शङ्कया शैथिल्यं स्यात्। एवं सगुणोपासनानामपि शुद्धप्रतिपत्त्युपायतया तद्वाक्यानामपि तात्पर्यनिर्णयः कार्य इत्युत्तरग्रन्थप्रवृत्तिरित्याक्षेपमुखेन प्रतिपादयति ज़न्माद्यस्य यत इत्यादिना। कानिचिदुपासनान्यभ्युदयार्था नीति– नामब्रह्मेत्युपासीतेत्यादीनि प्रतीकोपासनानि। क्रममुक्त्यर्थानि दहरादीनि। कर्मसमृद्ध्यर्थानि उद्गीथादीनि। यत्रोपाधिविशेषविवक्षा तत्र

सगुणोपासनानि। यत्र तु न तद्विवक्षा तत्र निर्गुणज्ञानमिति कुत्र विवक्षा कुत्र नेति निरूपणमुत्तरग्रन्थे क्रियत इत्यर्थः।

अन्योन्तर आत्मानन्दमय इत्यादिवाक्यं विषयः। आनन्दमयशब्दप्रतिपाद्यो जीवो ब्रह्म वेति संशयः। पूर्वाधिकरणे गौणमुख्येक्षणयोर्मुख्यपरिग्रहो न्याय्य इति (प्रायपाठमनादृत्य) सिद्धान्तः कृतः। अत्र मयटो विकारे प्राचुर्ये च मुख्यत्वात् प्रायपाठपरित्यागे विनिगमकाभावाद्विकारार्थक एव मयट् ग्राह्य इति प्रत्युदाहरण संगत्या पूर्वपक्षः। वृत्तिकारमतरीत्या पूर्वपक्षे जीवोपास्त्या प्रियादिप्राप्तिः फलम्। आनन्दमयशब्दप्रतिपाद्यो जीवो विकारार्थकमयडन्तशब्दप्रतिपाद्यत्वात् प्रियाद्यवयवयोगित्वाच्छारीरत्वाच्चेत्यभिप्रायेण पूर्वपक्षं रचयति किं तावत् प्राप्तमित्यादिना। आनन्दमयशब्दप्रतिपाद्यं ब्रह्म अभ्यस्यमानानन्दशब्दप्रतिपाद्यत्वात्। ज्योतिष्टोमाधिकारे ज्योतिश्शब्दस्येवानन्दमयाधिकारे आनन्दशब्दस्याप्यानन्दमयपरत्वमिति समाधत्ते। यत्तु अमुख्यात्मसन्निधिनानन्दमयस्यामुख्यत्वमिति पूर्वपक्षे उक्तं तत्तु लिङ्गाद्बाधितमित्याह नासौ दोष आनन्दमयस्य सर्वान्तरत्वात्। प्रियाद्यवयवयोगित्वहेतुरसिद्धः उपाधिसम्बन्धकृतत्वात्। शरीरे ज्ञायमानत्वाच्छारीरत्वमिति सोऽप्यसिद्ध इत्यर्थकं यत्तु ब्रूषे प्रियादीनामित्यादि भाष्यम्। विकारार्थकमयडन्तशब्दप्रतिपाद्यत्वहेतुमाशङ्क्य सूत्रकृदेव निराचष्टे।

### विकारशब्दान्नेति चेन्न प्राचुर्यात् १–१–१३

प्राचुर्यार्थ एव मयडिति साधनार्थं सूत्रम्।

### तद्धेतुव्यपदेशाच्च १–१–१४

आनन्दमयशब्दप्रतिपाद्यः प्रचुरानन्दवान् एष ह्येवानन्दयातीति आनन्दहेतुत्वेनोक्तत्वात्।

## मान्त्रवर्णिकमेव च गीयते १–१–१५

आनन्दमयशब्दप्रतिपाद्यं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रप्रतिपाद्यार्थाभिन्नत्वात्। मन्त्रब्राह्मणयोरिति। तयोरुपायोपेयभावेनाविरोधादित्यर्थः।

## नेतरोऽनुपपत्तेः १–१–१६

आनन्दमयशब्दप्रतिपाद्यो जीवो न जगत्स्रष्टृत्वात्। यदि जीवभेदो न स्यात्तदा जगत्स्रष्टृत्वमनुपपन्नं स्यात् जीवस्य स्रष्टृत्वाभावात्। शरीराद्युत्पत्तेः पूर्वं कामस्य जीवेऽसम्भवाच्चेत्यनुकूलतर्कोऽनुपपत्तेरित्यनेन उच्यते।

## भेदव्यपदेशाच्च। १–१–१७

आनन्दमयशब्दप्रतिपाद्यो जीवो न जीवभिन्नत्वेन व्यपदिश्यमानत्वात्। जीवबोधकप्रथमान्तपदभिन्नद्वितीयान्तपदबोध्यत्वात्। रसँ ह्येवायं लब्ध्वानन्दीभवति। यदि लब्धृलब्धव्ययोर्भेदः कथं तर्हि तयोरभेदबोधक श्रुतीनां संगतिरित्याशङ्क्योपाधितादात्म्याभिमाननिमित्तको भेदो न वास्तव इति समाधत्ते कथं तर्हीत्यादिना।

## कामाच्च नानुमानापेक्षा १–१–१८

"सोऽकामयत" आनन्दमयशब्दप्रतिपाद्यं प्रधानं न कामयितृत्वात्। ईक्षत्यधिकरणे निरस्तमपि प्रधानं गतिसामान्यादिति प्रपञ्चनाय निराक्रियत इत्याह ईक्षतेरित्यादिना।

## अस्मिन्नस्य च तद्योगं शास्ति १–१–१९

"यदा ह्येवैष एतस्मिन्नदृश्ये" इत्यादि श्रुतिः। आनन्दमयशब्दप्रतिपाद्यो जीवः प्रधानं वा न अभयप्राप्तिप्रयोजकज्ञानविषयत्वेनोक्तत्वात्।

एवमानन्दमयशब्दप्रतिपाद्यो न जीवः किन्तु ब्रह्मेति वृत्तिकारसिद्धान्तः। आनन्दमयो जीव एव न ब्रह्मेति भाष्यकारसिद्धान्तः। तत्र हेतून् प्रदर्शयति स वा एष इत्यादिना। विकारार्थकमयडन्तशब्दप्रतिपाद्यत्वादिति हेतुर्विवक्षितः। आनन्दमयादन्तरस्यानुक्त्या आनन्दमयस्य ब्रह्मत्वं वक्तव्यं, तथाच प्राचुर्यार्थे मयडत्र स्वीकार्य इत्याशङ्क्यानन्दमयस्य ब्रह्मत्वं न सम्भवति प्रियाद्यवयवयोगित्वादिति द्वितीयहेतुमाह। तथापि नानन्दमयस्य ब्रह्मत्वमिति। यद्यप्यन्नमयादिभ्य इवानन्दमयादन्योन्तर आत्मेति न श्रूयत इति ग्रन्थेन विद्यमानान्तरकत्वादिति हेतुस्सूचितः। नन्वानन्दमयावय वत्वेनापीत्यादि ग्रन्थेन पुच्छत्वेन निर्दिष्टब्रह्मभिन्नत्वादिति हेतुरुच्यते। ब्रह्मपरत्वेन निश्चीयमान स्वपर्यायगतनिगमनश्लोकाप्रतिपाद्यत्वादिति हेतुमभिप्रेत्य "अपि च ब्रह्मपुच्छं प्रतिष्ठेत्यादि भाष्यम्। पुच्छवाक्यनिर्दिष्टब्रह्मणः स्वप्रधानत्वे कथं तस्यानन्दमयपुच्छत्वेन निर्देश इत्याशङ्क्याधारत्वमेवात्र विवक्षितं न त्ववयवत्वमिति समाधत्ते कथं पुनरित्यादिना। यतो वाचो निवर्तन्त इति श्रुत्याऽत्र निर्विशेषब्रह्मण एव प्रतिपिपादयिषितत्वज्ञानादानन्दमयस्य ब्रह्मत्वे तु सविशेषत्वं स्यादितिवाक्यशेषविरोधोऽपीत्याह– अपि चानन्दमयस्येत्यादि। मयटः प्राचुर्यार्थाश्रयणे दुःखाल्पत्वमपि प्रतीयेत। तच्च यत्र नान्यत्पश्यतीत्यादि श्रुतिविरुद्धमित्याह अपि चानन्दप्रचुर इत्युक्ते इति। आनन्दमय पदाभ्यासोऽपि नास्तीत्याह नचानन्दमयस्याभ्यासः श्रूयत इत्यादि। तथाचानन्दमयस्याब्रह्मत्वे पञ्च भाष्योक्ता हेतवः। तेच १) विकारार्थकमय डन्तशब्दप्रतिपाद्यत्वात् २) विद्यमानान्तरकत्वात् ३) प्रियाद्यवयवयोगि त्वात् ४) पुच्छत्वेन निर्दिष्टब्रह्मभिन्नत्वात् ५) ब्रह्मपरत्वेन निश्चीयमान स्वपर्यायगतनिगमनश्लोकाप्रतिपाद्यत्वादिति। अन्नमयानन्दमया मे शुध्यन्तामिति शोध्यत्वादित्यपि हेतुः। भाष्यकारसिद्धान्तानुसारेणाधिकरणं सूत्रार्थश्चैवम् —— आनन्दमयोऽभ्यासात्। आनन्दवल्लीविषयः। संशयः किमिह प्रियमोदादिकल्पितशिरःपक्षाद्यवयवयुक्ततया उपास्यानन्द मयो जीवः प्राधान्येन प्रतिपाद्यो ब्रह्म तु पुच्छरूपतदवयवतया निर्दिश्यते

उत शुद्धं ब्रह्मैव पुच्छशब्देनानन्दमयस्याप्याधारतया स्वप्राधान्येन प्रतिपाद्यते आनन्दमयस्त्वन्नमयादिवत्प्रतिपत्त्युपायतामात्रेण निरूप्यत इति संशयः। पुच्छपदस्याधारावयवयोर्लक्षणासाम्यात् संशयः। उभयत्रापि लक्षणासाम्ये ऽवयवप्रायपाठो निश्चायक इति पूर्वाधिकरणसिद्धान्तयुक्त्यभावात् प्रत्युदाहरणसंगतिः। पूर्वपक्षे सगुणोपास्तिः सिद्धान्ते निर्गुणविद्येति फलभेदः। अवयवप्रायपाठाद्ब्रह्मणोऽवयवभूतस्य न प्राधान्यं किन्त्वानमयस्यैवेति पूर्वपक्षः।

सिद्धान्तः— आनन्दमयोऽभ्यासात्। आनन्दमयशब्दस्यानन्दमयपर्यायाम्नाते पुच्छब्रह्मणि लक्षणा। स्वप्राधान्येन प्रतिपाद्यमित्यध्याहारः। असन्नेव स भवतीति निगमनश्लोकस्थ ब्रह्मशब्दाभ्यासविषयत्वादिति हेतुः। पूर्वपर्यायेषु निगमनश्लोकानां पुच्छविषयत्वादर्शनादिहापि पुच्छविषयत्वं निगमनश्लोकस्य न किन्त्वानन्दमयविषयकत्वमेवेति शङ्कायामिदमेव सूत्रं समाधानम्। आनन्दमयो न निगमनश्लोकप्रतिपाद्योऽभ्यस्यमानब्रह्मशब्दप्रतिपाद्यत्वाभावादिति ईक्षतेर्नाशब्दमिति सूत्रान्नञनुवर्तनेन निषेध्याध्याहारेण च सूत्रार्थो वर्णनीयः। एतादृशार्थलाभायैव ब्रह्मपुच्छमभ्यासादिति सूत्रणं विहायानन्दमयोऽभ्यासादिति सूत्रं कृतम्।

विकारशब्दान्नेति चेन्न प्राचुर्यात्। विकारपदेनावयवो लक्ष्यते। अवयववाचिशब्दात्तस्य स्वार्थत्यागेन लक्षणीयार्थाभावेनानर्थक्यप्रसङ्गाच्च ब्रह्म न स्वप्राधान्येन प्रतिपाद्यमिति शङ्कार्थः। नच पुच्छपदस्याधारे लक्षणेति वाच्यम्। प्रतिष्ठापदेनैव तल्लाभादिति शङ्काभागार्थःप्राचुर्यादित्यनेन निराक्रियते। अवयवप्राये वचनादित्यर्थः। ब्रह्म स्वप्राधान्येन प्रतिपाद्यमेव। पुच्छपदं त्वाधारलक्षकम्। नच पौनरुक्त्यम्। पुच्छपदेन प्रतिष्ठासाधनत्वं प्रतिष्ठापदेन च तदधिकरणत्वमुच्यत इति सार्थक्यात्।

नन्वन्नमयादिपर्यायेष्वन्नमयादीनामिवानन्दमयस्यैव प्राधान्यं तद्वाक्याज्ज्ञायत इति तदनुरोधेन निगमनवाक्यस्थब्रह्मशब्दस्यैवानन्दमये लक्षणा कल्पयितव्येत्याशङ्कायां तद्धेतुव्यपदेशाच्च। ब्रह्म स्वप्राधान्येन प्रतिपाद्यम्।

इदँ सर्वमसृजत इति सानन्दमयविकारजातस्रष्टृत्वेन व्यपदिश्यमानत्वात्।

मान्त्रवर्णिकमेव च गीयते। ब्रह्म पुच्छमिति ब्रह्म स्वप्रधान्येन प्रतिपाद्यं सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रे स्वप्रधानतया प्रकृतत्वात्। ब्रह्मण एवोपक्रान्तत्वेन प्रधान्यं वक्तव्यं न जीवस्येति सूचनाय एवकारः।

नेतरोऽनुपपत्तेः। आनन्दमयः (इतरः) न स्वप्राधान्येन प्रतिपाद्यः अनुपपद्यमानजगत्स्रष्टृत्वादिकत्वात्। (जगत्स्रष्टृत्वाद्यभावात्)। भेद व्यपदेशाच्च। आनन्दमयो न स्वप्राधान्येन प्रतिपाद्यः रसँ ह्येवायं लब्ध्वेति प्रकृतब्रह्मभेदेन व्यपदिश्यमानत्वात्।

आनन्दमयः स्वप्राधान्येन प्रतिपाद्यः तैत्तिरीयकपञ्चमस्थानस्थत्वात् भृगुवल्लीस्थानन्दवदित्याशङ्क्याह——— कामाच्च नानुमानापेक्षा॥ काम्यत इति काम आनन्दः। आनन्ददृष्टान्तबलेनानन्दमयस्य स्वप्राधान्यानुमाना पेक्षा न कार्या। ब्रह्मशब्दसमानाधिकृतशब्दप्रतिपाद्यत्वस्याप्रतिपादिततदितर कत्वस्य चोपाधित्वात्।

सगुणनन्दमयोपासनमेवास्त्वित्याशङ्कायामाह—— अस्मिन्नन्यस्य च तद्योगं शास्ति। अस्मिन्नेव प्रकरणे "रसो वै सः, रसँ ह्येवायं लब्ध्वानन्दीभवति" इति शास्त्रं रसो वै सः इति पुच्छब्रह्मणः आनन्दत्वमुक्त्वा एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरसिद्धमानन्दमयस्तत्तद्विषयानुभवजन्यसुखवृत्तिषु प्रतिबिम्बितमान न्दलेशं लब्ध्वा निर्वृतो भवतीत्यमुमेवार्थं शास्ति। अतस्तत्रानन्दमयपरा मर्शस्य निरतिशयानन्दरूपपुच्छब्रह्मप्रतिपत्तिशेषत्वं क्लृप्तमित्यानन्दमयवाक्ये ऽपि तदुपन्यासस्य पुच्छब्रह्मप्रतिपत्तिशेषत्वमेव युक्तं, न तूपासनाविधानार्थ त्वम्॥ यत्र हि द्वैतमिव—— यत्र यस्यामज्ञानावस्थायां द्वैतमिवभवति कल्पितं भवति तदेतरस्सन्नितरं पश्यति। यत्र ज्ञानकाले विदुषः सर्वं जगदात्ममात्रमभूत् तदा केन कं पश्येदित्याक्षेपान्निरुपाधिकं तत्त्वं भाति। यत्र नान्यत् पश्यति– यत्र भूम्नि स्थितो विद्वान् द्वितीयं

किमपि न वेत्ति सोऽद्वितीयो भूमा परमात्मा निर्गुणः। यत्र सगुणे स्थितो द्वितीयं वेत्ति तदल्पं परिच्छिन्नम्। यस्तु भूमा तदमृतं नित्यम्। सर्वाणि रूपाणि धीरः परमात्मैव सर्वाणि रूपाणि विचित्य सृष्ट्वा नामानि च कृत्वा बुद्ध्यादौ प्रविश्य जीवसंज्ञो व्यवहरन् यो वर्तते सगुणस्तं निर्गुणत्वेन विद्वानमृतो भवति। निष्कलं निष्क्रियं निर्गताः कला अंशा यस्मात्तं निरंशत्वान्निरवयवं शान्तमपरिणामि निरवद्यं रागादिदोषशून्यमञ्जनं मूलतमः सम्बन्धो धर्मादिकं वा तच्छून्यममृतस्य मोक्षस्य परमुत्कृष्टं सेतुं प्रापकं यथा दग्धेन्धनोऽनलः शाम्यति तमिवाविद्या तज्जं दग्ध्वा प्रशान्तं निर्गुणमात्मानं विद्यादित्यर्थः। न्यूनमन्यत् द्वैतं स्थानं न्यूनमल्पं सगुणरूपं निर्गुणादन्यत्। सम्पूर्णं निर्गुणं सगुणादन्यत्। यथा क्रतुः- क्रतुः संकल्पो ध्यानमिह यादृशध्यानवान् भवति मृत्वा तादृशोपास्यरूपो भवति। एतमानन्दमयमुप संक्रामति प्राप्नोतीत्येकदेशिनामर्थः। सिद्धान्ते प्रत्यङ्मात्रत्वेन विलापनमर्थः

अष्टौ सूत्राणि

इत्यानन्दमयाधिकरणम्।

## अन्तस्तद्धर्मोपदेशात् १-१-२०

अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते इत्यादि छान्दोग्यवाक्यं विषयः। हिरण्मयो ज्योतिर्विकारः पुरुषः पूर्णोऽपि मूर्तिमानुपासकैःदृश्यते। हिरण्यश्मश्रुरित्यादि। प्रणखो नखाग्रं तस्य यथा कपेर्मर्कटस्यासः पुच्छभागः तत्तुल्यं पुण्डरीकं यथा दीप्तिमत् एवं तस्य पुरुषस्याक्षिणी। सद्योविकसितरक्ताम्भोजनयन इत्यर्थः। उपासनार्थमादित्यमण्डलं स्थानं रूपञ्चोक्त्वा नाम करोति तस्योदितिनामेति नाम निर्वक्ति स इति उदित उद्गतः। सर्वपाप्माऽसंसृष्ट इत्यर्थः। देवतास्थानमादित्यमधिकृत्योपास्त्यनन्तरमात्मानं देहमधिकृत्योपासनं उच्यते अथेति। गेष्णौ = पर्वणी। धनसनयः = धनस्य सनिर्लाभो येषां ते धनसनय ऐश्वर्यवन्त इत्यर्थः। आदित्यान्तरक्ष्यन्तश्च श्रूयमाणः

पुरुषः आदित्यरूपः किं संसारी उतेश्वर इति पूर्वपक्षयुक्तिसिन्तयुक्तिबलाबलानवधारणात् संशयः। (रूपवत्त्व-सर्वपाप्मविरहाभ्यां संशयः ) पूर्वत्र ब्रह्मपदं, आनन्दमयपदं आनन्दपदाभ्यासश्चेति मुख्यत्रितयात्मकबहुप्रमाणवशाद्यथा निर्विशेषब्रह्मनिर्णयः, एवं रूपवत्त्वादिबहुप्रमाणवशात् संसारी हिरण्मयः पुरुषोऽस्त्विति पूर्वसिद्धान्तयुक्त्या पूर्वपक्षोत्थानात्तेनास्य दृष्टान्तसंगतिः। पूर्वपक्षेऽपरब्रह्मोपासनं सिद्धान्ते परब्रह्मोपासनं फलम्। आदित्यान्तरक्ष्यन्तश्च श्रूयमाणः संसारी, रूपवत्त्वादाधारवत्त्वात् सावधिकैश्वर्यवत्वाच्चेति पूर्वपक्षमाह किं तावत् प्राप्तमिति। रूपवत्त्वहेतुमुपपादयति रूपवत्त्वश्रवणादिति। द्वितीयहेतुं प्रदर्शयत्याधारेति। तृतीयमुपपादयत्यैश्वर्येति। अशब्दमस्पर्शमरूपमव्ययम्, स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि 'एष सर्वेश्वरः' इत्यादिश्रुत्या ईश्वरस्य रूपादिरहितत्वश्रवणात्।

सिद्धान्तस्तु - अन्तस्तद्धर्मोपदेशात् अन्तः श्रूयमाणः परमेश्वर एव तस्य ब्रह्मणो धर्मौ सर्वपाप्मापगमः सार्वात्म्यं च तयोरुपदेशादिति सूत्रार्थः।

ऋक्सामगेष्णत्वं सर्वगानगेयत्वं च हेतू। लोककामेशितृत्वं च। सर्वपाप्मोदितत्वात् सर्वात्मत्वाच्चेति प्रयोगः। रूपवत्त्वाधारवत्त्वसावधिकैश्वर्याणामुपासनार्थतयोपदिश्यमानत्वात् पूर्वपक्षहेतवोऽप्रयोजकाः।

अन्तः श्रूयमाणः आदित्याद्भिन्नः आदित्यान्तरत्वात्॥ आदित्यान्य उपास्यः आदित्यान्तस्थो न भवत्यन्यतः प्रसिद्धत्वाभावादित्याशङ्कायाम्

## भेदव्यपदेशाच्चान्यः १–१–२१

अन्तर्यामी आदित्याद्भिन्नोऽन्तर्यामिब्राह्मणे भेदेन व्यपदिश्यमानत्वात्। धर्मोपदेशादित्येव वक्तव्ये तत्पदं तस्यैवेत्यवधारणगर्भतया सर्वपाप्मापगमस्यानन्यथासिद्धत्वं द्योतयितुम्। तद्धर्मादित्येव सिद्धे उपदेशग्रहणं तात्पर्येण प्रतिपादनादित्यर्थतात्पर्यग्राहकम्। इदं वाक्यं सगुणोपासनपरम्।

इत्यन्तरधिकरणम्।

## आकाशस्तल्लिङ्गात् १–१–२२

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानीत्यादिवाक्यं विषयः। आकाशशब्दप्रतिपाद्यं भूताकाशमुत ब्रह्मेत्याकाशपदस्योभयत्र प्रयोगदर्शनात् संशयः। अनन्यथासिद्धसर्वपाप्मापगमादिलिङ्गेन दुर्बलानां रूपवत्त्वादिलिङ्गानां बाधेऽपि आकाशपद श्रुतेर्लिङ्गाद्बलीयस्त्वमिति प्रत्युदाहरणसंगत्या पूर्वपक्षमाह– किं पुनरत्र युक्तमित्यादिना। आकाशशब्दप्रतिपाद्यो भूताकाशः शक्तिसंबन्धेनाकाश शब्दवत्त्वात्। सर्वभूतकारणत्वज्यायस्त्वपरायणत्वानि च भूताकाशेऽपि योजयति ननु भूताकाशेत्यादिना। सिद्धान्तमाह आकाशस्तल्लिङ्गात्। अन्तवत् किल ते साम इत्यन्तवत्त्वदोषेण शालावत्यपक्षं निन्दित्वा जैवलिनोच्यमानः आकाशोऽनन्त एव भवितुमर्हति। अनन्तश्च ब्रह्म। स एष परोवरीयानुद्गीथः स एषोऽनन्त इत्यनन्तत्वमुक्तम् अनन्तविषयकप्रश्नप्रतिवचनविषयत्वात्। नामरूपयोर्निर्वहिता - उत्पत्तिस्थितिहेतुः। ते नामरूपे यदन्तरा यद्भिन्ने यत्र कल्पितत्वेन मध्ये स्त इति वाऽर्थः । परो रसतमत्वादिगुणैरुत्कृष्टो वरीयान् वरेभ्योऽतिशयेन वरः। एवञ्चानन्तत्वभूताकाशघटितसर्वभूतकारणत्वज्याय स्त्वपरायणत्वरूपबहुलिङ्गविरोधेनैकस्याः श्रुतेर्बाध एवोचितः 'त्यजेदेकं कुलस्यार्थे' इति न्यायात् भूताकाशपरिग्रहे सर्वाणीत्याकाशादेवेति च नोपपद्यते। तथा चाकाशशब्दप्रतिपाद्यं ब्रह्म अनन्तत्वादनन्तत्वोपपादनार्थमेव सर्वाणि हवेत्यादि। पूर्वपक्षे भूताकाशात्मनोद्गीथोपास्तिः फलम्। सिद्धान्ते ब्रह्मात्मनेति। यत्रोपक्रमानुगुण्येन वाक्यशेषो योजयितुं शक्यते तत्रैव तथा। यत्र तु न शक्यते तत्रोत्तरानुगुण्येन पूर्वमेव योजयितव्यमित्याह वाक्योपक्रमेऽपीति।

इत्यष्टममाकाशाधिकरणम्।

## अत एव प्राणः १-१-२३

अतिदेशत्वात् सैव संगतिः। प्रस्तोतर्यादेवता– प्राण इति होवाचेत्यादिवाक्यं विषयः। अत्र प्राणशब्दप्रतिपाद्यो मुख्यप्राण ईश्वरो वेति पूर्ववत् संशयः। प्राणशब्दप्रतिपाद्यो मुख्यप्राणः शक्तिसम्बन्धेन प्राणशब्दवत्त्वादिति पूर्वपक्षः। प्राणशब्दप्रतिपाद्य ईश्वर एव देवतात्वात्। सैषा देवतेत्यनेन चेतनत्वलाभः, सेन्द्रियसशरीरजीवाविष्ट सकलभूत संवेशनोद्गमनवत्त्वात् इति सिद्धान्तः। अतिदेशबीजभूतामधिकाशङ्कां प्रदर्शयति अपि चादित्योऽन्नमिति। प्राणशब्दप्रतिपाद्यं ब्रह्म न अन्नादित्यरूपाब्रह्मप्रतिपादकशब्दमध्यपतितशब्दप्रतिपाद्यत्वात् विकारार्थक मयडन्तशब्दमध्यपतितानन्दमयशब्दवत्। आकाशश्रुत्यनुगृहीतसंनिधिरा शङ्काबीजम्। तत्प्रायपठितस्य तत्त्वमिति नियमः। तस्य ब्रह्मपुच्छमिति प्रतिपाद्ये व्यभिचारः। असति बाधके तत्प्रायपठितस्य तज्जातीयत्वमितिनि यमे तु तत्र ब्रह्मशब्दश्रुतेर्बाधिकायाः सत्वान्न व्यभिचार इति चेदत्रापि तात्पर्यवल्लिङ्गस्य बाधकस्य सत्वाद्ब्रह्मपरत्वमिति सिद्धान्तः। देवतात्वहेतु कानुमानेऽन्नादिषु व्यभिचार इति द्वितीयाशङ्का। अन्नादिष्वन्यत्र विद्यमानस्य देवतात्वस्यारोपादन्नादिषु देवतात्वमेव नास्तीति न व्यभिचारः। पूर्वपक्षे प्राणदृष्ट्या सिद्धान्ते ब्रह्मदृष्ट्या प्रस्तावोपासनमिति विशेषः। वाक्यान्तरगतप्रायपाठरूपस्थानप्रमाणानुरोधिन्याः चरमपठितायाः प्राणश्रुतेः दुर्बलत्वं स्ववाक्यगतलिङ्गप्रमाणानुरोधिन्या प्रथमपठितया देवताश्रुत्या ब्रह्मपरत्वमेव निरूढ्या स्वीकर्तव्यमिति। (ब्रह्मविद्याभरणम्)

अभिसंविशन्ति = प्राणमभिलक्ष्य सम्यग्विशन्ति लीयन्ते। तमभिलक्ष्य, उज्जिहते उत्पद्यन्त इत्यर्थः। इन्द्रियाण्यपञ्चीकृतभूतानां सारभूतानि तेषां लयोक्त्या भूतानामपि प्राणे लयादिसिद्धेः वाक्यशेषोपपत्तिरिति पूर्वपक्षे। विषयवाक्यान्तरं मतान्तरंतया प्रदर्श्य तत्र संशयाभाव इत्याह अत्र केचिदिति।

इति नवमं प्राणाधिकरणम्।

## ज्योतिश्चरणाभिधानात् १—१—२४

अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यादि वाक्यं विषयः। गायत्र्युपाधिक ब्रह्मोपास्त्यनन्तरमिति अथशब्दार्थः। अतो दिवो द्युलोकात् परः परस्तात् यत् ज्योतिर्दीप्यते तदिदमिति जाठराग्नावध्यस्यते। कुत्र दीप्यते तत्राह विश्वतः = विश्वस्मात् प्राणिवर्गादुपरि सर्वस्माद्भूरादिलोकादुपरि ये लोकाः तेषूत्तमेषु न विद्यन्ते उत्तमा येभ्य इत्यनुत्तमेषु सर्वसंसारमण्डलातीतं परं ज्योतिरिदमेव यद्देहस्थमित्यर्थः। तस्यैषा दृष्टिः यद्देहस्पर्शनेनौष्ण्यज्ञानं प्रसिद्धं सैवा तस्य जाठराग्नेर्दृष्टिः। यत्कर्णपिधानेन घोषश्रवणं सैषा तस्य श्रुतिरित्यर्थः। ज्योतिश्शब्दप्रतिपाद्यं आदित्यादिकार्यज्योतिर्ब्रह्म वेति संशयः। तात्पर्यवल्लिङ्गात् प्राणशब्दप्रति पाद्यं ब्रह्मेति निर्धारितम्। अत्र तादृशलिङ्गाभावात् प्रत्युदाहरणसंगत्या पूर्वपक्षं प्रदर्शयति आदित्यादिकमेवेत्यादिना। ज्योतिश्शब्दप्रतिपाद्यं कार्यज्योतिः प्रसिद्धत्वाद्दीप्तिमत्त्वात्। ब्रह्म न द्युमर्यादत्वात्, बह्वाधारकत्वात् कौक्षेयज्योतिष्यध्यस्यमानत्वात् (सादृश्यनिबन्धनत्वादध्या सस्य) चक्षुष्यत्वादिरूपाल्पफलजनकोपासनाविषयत्वादिति पूर्वपक्षसंग्रहः। ज्योतिश्शब्दप्रतिपाद्यं ब्रह्म त्रिपाद्ब्रह्मपरामर्शकयच्छब्दाभिधेयत्वादिति सिद्धान्तमाह ज्योतिरिहेत्यादिना। पूर्वस्मिन् गायत्रीवाक्ये उत्तरत्र शाण्डिल्यविद्यायाश्च ब्रह्मण एव प्रतिपाद्यमानत्वात् संदंशन्यायेनात्रापि ब्रह्मैवोच्यत इत्याह न केवलमित्यादिना। प्रकरणादित्यस्य प्रकृतपरामर्शक यच्छब्दादित्यर्थः। ज्योतिश्शब्दवत्त्वं व्यभिचरितमित्याह यद्वा नायं इत्यादिना। द्युमर्यादत्वहेतुरप्रयोजक इत्याह-यदप्युक्तं द्युमर्यादत्वमिति। बह्वाधारकत्वमप्यप्रयोजकमित्याह एतेनेति। कार्यपदार्थाध्यस्यमानत्वं यत्र तत्र कार्यत्वमित्यनुमाने नामाद्यध्यस्यमाने ब्रह्मणि व्यभिचार इत्याह परस्यापि ब्रह्मण इति। अल्पफलत्वहेतुरप्रयोजक इत्याह यदप्युक्तमित्यादिना।

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथाहि दर्शनम् १.१.२५

पूर्वत्र गायत्रीपदेन छन्द एवाभिहितं न ब्रह्म , अतस्सिद्धान्त हेतुः स्वरूपासिद्ध इति पूर्वपक्षभागार्थः। भूतवाक्पृथिवीशरीरहृदयप्राणात्मिका षड्विधा षड्भिरक्षरैश्चतुष्पदा गायत्री। तथा चेतोर्पणनिगदाद्गायत्र्युपहितस्य गायत्रीप्रतीकस्य वा ब्रह्मण उपास्यत्वप्रतिपादनात्। तथाऽन्यत्रापि दर्शनम् - एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते इत्यादि।

चतुष्पदत्वरूपसंख्यासामान्याद्गायत्रीति गौणः प्रयोग इति मतान्तरेण समर्थयति अपर आहेति। ते वा एते पञ्चान्ये इत्यादि। अधिदैवतं वायुरग्निः सूर्यश्चन्द्रमा आपः। अध्यात्मं प्राणो वाक् चक्षुः श्रोत्रं मन इति दश। संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्राम्भांसि वायौ लीयन्ते। अध्यात्मं वाक् चक्षुः श्रोत्रमनांसि प्राणे लीयन्ते। ते वा एते पञ्चान्ये आधिदैविकाः पञ्चान्ये आध्यात्मिकाः, ते मिलित्वा दशसंख्याकाः कृतमित्युच्यन्ते। कृतत्रेताद्वापरकलिसंख्याकानि चत्वारि द्यूतानि क्रमेण चतुरङ्कत्र्यङ्कद्व्यङ्कैकाङ्कानि। तत्र कृतं दशाङ्कं भवति। चतुर्ष्वङ्केषु त्रयाणां त्रिषु द्वयोर्द्वयोरेकस्य चान्तर्भावात्। तथाच दशत्वगुणयोगेन वाय्वादयः कृतशब्देनोच्यन्ते। सैषा विराडन्नादी– दशत्वसाम्येन वाय्वादयो विराडित्युच्यन्ते। 'दशाक्षरा विराडि'ति श्रुतेः। दशत्वद्वारा वाय्वादिषु कृतत्वं विराट्त्वञ्च ध्येयम्। कृतत्वध्यानादन्नादो भवति। कृतं हि स्वीयचतुरङ्केषु त्र्यङ्कादिकमन्तर्भावयदन्नमत्तीव। अत एव कृतजयादितरद्यूतजयः श्रुत्युक्तः। 'कृतायविजितायाधरेऽयाः संयन्ति' इति। कृतसंज्ञको यः अयः स विजितो येन कृतायविजितः, 'वाहिताग्न्यायादिष्वि'ति विजितशब्दस्य परनिपातः। तस्मै अधरे अयाः त्र्यङ्कादयोऽयाः संयन्ति उपनमन्ते , तेन जिता भवन्तीत्यर्थः। साक्षात्सम्बन्धेन गायत्रीशब्दस्य ब्रह्मणि लक्षणासम्भवे गौणी लक्षणा न स्वीकार्येत्यस्वरसः।

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् १–१–२६

गायत्रीशब्दप्रतिपाद्यं ब्रह्म भूतादिपादत्वेन व्यपदिश्यमानत्वात्। अत्र सूत्रभाष्यकारयोः भूतपृथिवीशरीरहृदयैः चतुष्पदा गायत्रीति मतम्। षडक्षरैश्चतुष्पात्त्वं वृत्तिकारोक्तमप्रसिद्धम्। ब्रह्मपरत्वेन निर्णीतऋक्प्रतिपाद्यत्वात्, यद्वैतद्ब्रह्मेति ब्रह्मपदेन निर्दिश्यमानत्वात्, ब्रह्म पुरुषस्वामित्वेनोक्तत्वात्। हृदयस्य चतुर्दिक्षूर्ध्वञ्च पञ्च सुषयस्सन्ति। तेषु ब्रह्मस्थानहृन्नगरस्य प्रागादिद्वारेषु प्राणव्यानापानसमानोदानाः पञ्च द्वारपाला इति ध्यानार्थं श्रुत्या कल्पितम्। सप्तम्या गङ्गायां घोष इतिवत् सामीप्यलक्षणया अपर आहेत्यादि व्याख्यानम्। सप्तम्या आधाराधेयभावे मुख्यत्वात् सामीप्येऽमुख्यत्वमस्वरसः इत्यभिप्रायेणाह इतश्चैवमित्यादिना। अपि चेति चकारसूचितं युक्त्यन्तरम्।

नन्वस्तु प्रकृतं ब्रह्म तथापि दिवि दिव इति निर्देश भेदान्न ज्योतिर्वाक्ये पूर्वप्रकृतं ब्रह्म प्रत्यभिज्ञायत इत्याशङ्क्य निराचष्टे—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् १–१–२७

उभयस्मिन्नप्युपदेशे प्रत्यभिज्ञानविरोधाभावात्। प्रधानप्रकृति प्रत्यभिज्ञानानुरोधेन प्रत्ययार्थवैषम्यं नेयमिति भावः। तथा च ज्योतिर्वाक्यमुपास्ये ब्रह्मणि समन्वितम्।

इति ज्योतिश्चरणाधिकरणम्।

## प्राणस्तथानुगमात् १–१–२८

प्रतर्दनो ह वै दैवोदासिरिन्द्रस्येत्यादिकौषीतकिब्राह्मणोपनिषद्वाक्यं विषयः। इदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गम्, मामुपास्व, मामेव विजानीहि' इतीन्द्रलिङ्गम्, न वाचं विजिज्ञासीत वक्तारं विद्यादिति जीवलिङ्गम्, आनन्दोऽजरोमृत इति [illegible]लिङ्गम्। अनेकलिङ्गदर्शनादत एव प्राण इत्यनेनागतार्थता। प्राणशब्दप्रतिपाद्यो

वायुर्वा इन्द्रो वा जीवो वा परं ब्रह्म वेति संशयः। अत्रानेकलिङ्गसत्त्वेन निश्चयकाभावात् पूर्ववज्ज्योतिः श्रुतिबाधासम्भवात् प्रत्युदाहरणसंगत्या प्राणशब्दप्रतिपाद्यो वायुः शक्तिसम्बन्धेन प्राणशब्दवत्त्वादिति पूर्वपक्षयति- तत्र प्रसिद्धेरिति। प्राणशब्दप्रतिपाद्यं ब्रह्म हिततमत्वात्, सर्वकर्मक्षयजनकज्ञानविषयत्वात्, कर्मप्रयुक्तभूयस्त्वाद्यभावात् ।

प्राणो ब्रह्म – अनुगमात् – प्रकरणस्योपक्रमोपसंहारपरामर्शैः परमात्मपरत्वेनानुगमात् - समन्वितत्वादिति सूत्रार्थः। त्वमेव मे वरं वृणीष्व - यं त्वं मनुष्याय हिततमं मन्यसे इति परमपुरुषार्थत्वेनोपक्रमः। मध्ये तज्ज्ञस्य सकलपापास्पर्शः। उपसंहारे आनन्दोऽजरोमृत इति ब्रह्ममात्रवृत्तीनीति।

न वक्तुरात्मोपदेशादिति चेत्
अध्यात्मसम्बन्धभूमाह्यस्मिन् १-१-२९

प्राणशब्दप्रतिपाद्य इन्द्रो वक्तृत्वेन ज्ञायमानत्वात् 'मामेव विजानीही'ति। त्रिशीर्षहन्तृत्वात्, यतिकर्मकसालावृकसंप्रदानकप्रदानकर्तृत्वात् इति पूर्वपक्षः। अस्मिन् प्रकरणे प्रत्यगात्मसम्बन्धिनां लिङ्गानां बहुत्वात् तेषां पराचि इन्द्रेऽसम्भवादिन्द्रो नेत्यर्थः। इन्द्रस्य प्रत्यगात्मत्वाभावात् प्राणशब्दप्रतिपाद्य इन्द्रो नेति यावत्। आयुःप्रदातृत्वं, इन्द्रियनिःश्रेयसहेतुत्वं, शरीरोत्थापकत्वमिति प्रत्यगात्मलिङ्गानि स म आत्मेति विद्यादिति, वेदितुरात्मत्वं, लोकाधिपतित्वमानन्दत्वादिकञ्च देवतात्मनि न सम्भवति। अयमात्मा ब्रह्मसर्वानुभूरिति श्रुते ब्रह्मणि सम्भवात् ब्रह्मैवेति सिद्धान्तः। तद्यथा रथस्यारेषु ----- तत् तत्र नानाप्रपञ्चस्यात्मनि कल्पनायां यथा दृष्टान्तः एवं भूतानि पञ्च पृथिव्यादीनि, मीयन्ते आभिरिति मात्राः भोग्याः शब्दादयः पञ्चेति दशभूतमात्राः, प्रज्ञामात्रासु इन्द्रियजाः पञ्च शब्दादिविषयप्रज्ञाः मीयन्ते आभिरिति मात्राः पञ्चेन्द्रियाणि तेषु दशस्वर्पिताः। ग्राह्यं ग्राहकेषु कल्पितम्। सर्वमपि नाभिस्थानीये प्राणे कल्पितम्। इति श्रुत्यर्थः।

कथं तर्हि वक्तुरात्मोपदेश इति शङ्कायामाह———

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् १–१–३०

इन्द्रोऽहमेव परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन् मामुपास्वेत्युपदिदेश वामदेववत् (तद्धैतत्पश्यन्नित्यादि) त्वाष्ट्रवधादिभिरिन्द्रस्य पापांस्पर्शकीर्तनमपि ब्रह्मज्ञानस्तुत्यर्थमित्याह यत्पुनरुक्तमित्यादिना।

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्। १–१–३१

प्राणशब्दप्रतिपाद्यो जीवो वक्तृत्वात् (न वाचमित्यादि ) वायुः शरीरोत्थापकत्वादिति पूर्वपक्षः, एवञ्च जीवप्राणयोरेकैकं वा उभयं वाऽत्र प्रतिपाद्यम्, न ब्रह्ममात्रम्। तथा च त्रयाणां प्रतिपाद्यत्वं यदीदं प्रकरणं जीवमुख्यप्राणपरं न स्यात्तदाऽनुपपन्नसहवृत्तित्वप्रयुक्तप्रज्ञाप्राणाभेदप्रतिपादनपरवाक्यकं स्यादिति तर्क एवं जीवमुख्यप्राणपरिग्रहे चेत्यादिनोच्यते। इदं प्रकरणं जीवब्रह्मप्राणपरं न भवत्येकवाक्यत्वात्। यदि त्रितयपरं स्यात्तर्हि त्रिविधोपासनापरं स्यात्। ओमित्युक्ते एकवाक्यं न स्यात्। तत्राप्योमित्युक्ते बाधितोपक्रमोपसंहारकं स्यादिति तर्कः। इदं प्रकरणं ब्रह्मपरं ब्रह्मेतरापरत्वे सति यत्किञ्चिदर्थपरत्वात्। इदं ब्रह्मेतरपरं न भवति ब्रह्मलिङ्गप्रतिपादकशब्दघटितत्वात्। सर्वेन्द्रियप्रपञ्चभूतप्रपञ्चसम्बन्धवत्त्वं जीवलिङ्गं वागेवास्या इत्यादिवाक्योक्तम्।

सकलप्रपञ्चाधारत्वं ब्रह्मलिङ्गं तावा एता इति इति वाक्येनोक्तम्।

आश्रितत्वात् - प्राणशब्दस्य ब्रह्मणि प्रवृत्तेराश्रितत्वात्। इह तद्योगात् - ब्रह्मलिङ्गयोगात्। प्राणलिंगं परमात्मनि योजयति यत्तु मुख्यप्राणलिङ्गमिति। जीवलिङ्गं योजयति यदपि न वाचमिति। अथ यथास्या इत्यादि।अथ बुद्धिप्राणयोः सहस्थित्युत्क्रान्त्युक्त्यनन्तरम्, अत्र प्रज्ञापदेन साभासा जीवाख्या बुद्धिरुच्यते तस्याः सम्बन्धीनि दृश्यानि सर्वाणि भूतानि यथैकं भवन्त्यधिष्ठानचिदात्मना तथा व्याख्यास्यामः।

उत्पन्नाया असत्कल्पायाः साभासबुद्धेर्नामप्रपञ्चविषयत्वमर्धशरीरम्। अर्थात्मकरूपप्रपञ्चविषयित्वमर्धशरीरमिति मिलित्वा विषयित्वाख्यं पूर्णं शरीरमिन्द्रियसाध्यम्। तत्र कर्मेन्द्रियेषु वागेवास्याः प्रज्ञाया एकमङ्गं देहार्धमदूदुहत् पूरयामास। वागिन्द्रियद्वारा नामप्रपञ्चविषयित्वं बुद्धिर्लेभत इत्यर्थः। तस्यै तस्याः नाम किल चक्षुरादिना प्रतिविहिता ज्ञापिता भूतमात्रा रूपाद्यर्थरूपा परस्तादपरार्धे कारणं भवति। ज्ञानकरणद्वाराऽर्थप्रपञ्चविषयित्वं बुद्धिः प्राप्नोतीत्यर्थः। एवं बुद्धेः सर्वार्थद्रष्टृत्वमुपपाद्य तन्निष्ठचित्प्रतिबिम्बद्वारा साक्षिणि द्रष्टृत्वाध्यासमाह प्रज्ञया बुद्धिद्वारा चिदात्मा वाचमिन्द्रियं समारुह्य तस्याः प्रेरको भूत्वा वाचा करणेन सर्वाणि नामानि वक्तव्यत्वेनाप्नोति। चक्षुषा सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टा भवति। प्रज्ञा इन्द्रियजाः ता अधिकृत्य ग्राह्या भूतमात्रा वर्तन्ते। प्रज्ञामात्रा इन्द्रियाणि ग्राह्यं भूतजातमधिकृत्य वर्तन्त इति ग्राह्यग्राहकयोर्मिथः सापेक्षत्वमुक्तम्। तदेव साधयति यदिति। न ह्यन्यतरतो ग्राह्यग्राहकमुभयं परस्परसापेक्षम्। अतो वस्तुतो न भिन्नम्। किन्तु चिदात्मन्यारोपितमित्याह - नो एतान्नानेति।

अथवेत्यादिवृत्तिकारमतं वाक्यभेददोषान्न भाष्यकाराभिमतम्। ज्ञेयब्रह्मपरमिदं वाक्यम्।

इति प्रतर्दनाधिकरणम्।

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां प्रथमाध्यायस्य प्रथमः पादः ॥



# अथ प्रथमाध्यायस्य द्वितीयः पादः

## १. अधिकरणम्

### सर्वत्रप्रसिद्धोपदेशात् १–२–१

पूर्वत्र ब्रह्मणो जगत्कारणत्वोक्त्या तस्य व्यापित्वनित्यत्व सर्वज्ञत्व सर्वशक्तित्व - सार्वात्म्यानि - असाधारणधर्मा उक्ता एव भवन्ति। एतैरेवास्पष्टब्रह्मलिङ्गेषु वाक्येषु ब्रह्मपरतानिर्णयः क्रियते। सर्वं खल्विदं ब्रह्म सक्रतुं कुर्वीत - मनोमयः इत्यादिवाक्यं विषयः। अत्र किं जीव उपास्य आहोस्वित् परं ब्रह्मेति संशयः। पूर्वत्र ब्रह्मलिङ्गैरब्रह्मलिङ्गबाध उक्तः। अत्र ब्रह्मलिङ्गमेव नास्तीति प्रत्युदाहरणसंगत्या पूर्वपक्षमाह शारीर इति। मनोमयत्वादिविशिष्टतया श्रूयमाणः पुरुषो जीवो मनोमयत्त्वात् प्राणशरीरत्वादणीयस्त्वादिति पूर्वपक्षः। ज्यायस्त्वश्रुतिं जीवे उपपादयति नन्वित्यादिना। सिद्धान्तस्तु ब्रह्म मनोमयत्वादिगुणविशिष्टतयो पास्यं सर्वेषु वेदान्तेषूपास्यत्वेन प्रसिद्धत्वात् , मनोमयत्वादिविशिष्टतयो पास्यं ब्रह्म सर्वं खल्विदं ब्रह्मेति वाक्योपक्रमश्रुतब्रह्माभिन्नत्वेन प्रतीयमानत्वात्। वाक्योपक्रमश्रुतब्रह्मपरामर्शिप्राणशरीरमिति समासविग्रहघ टकसर्वनामार्थाभिन्नत्वात्। सर्वत्र सर्वं खल्विदं ब्रह्मेति वाक्ये प्रसिद्धोपदेशात्, प्रसिद्धस्य ब्रह्मणः प्रकृतपरामर्शिप्राणशरीर इति सर्वनामार्थेन बहुव्रीहिणा परामृश्योपास्यगुणविशिष्टतयोपदेशादित्यर्थः।

### विवक्षितगुणोपपत्तेश्च १–२–२

विवक्षिता वेदतात्पर्यविषयीभूता ये सत्यसंकल्पत्वाकाशात्मत्वादि गुणाः तेषां ब्रह्मण्युपपत्तेरित्यनुकूलतर्कप्रदर्शनं मनोमयत्वप्राणशरीरत्वादि कञ्च सोपाधिकब्रह्मविवक्षयोपपद्यते। पूर्वसूत्रे सर्वनामार्थबहुव्रीह्यनुसारेण ब्रह्मनिर्णयो दर्शितः। स ज्योतिरधिकरणेन पुनरुक्तः। अस्मिन् सूत्रे ब्रह्मधर्माणामनन्यथासिद्धत्वमुक्तम्। तच्चान्तरादित्यप्रतर्दनाधिकरणाभ्यां सिद्धमित्याशङ्का। समाधानन्तु अत्र स इति पदेन जीवस्यैवातिसन्निहित

तया न ब्रह्मपरामर्शकतेत्यधिकाशङ्का न सन्निहितमात्रपरामर्शकता सर्वनाम्नोऽपि तु योग्यसन्निहितपरामर्शकतेति विवक्षया परिहर्तव्या। योग्यत्वञ्च सत्यसङ्कल्पादिगुणपर्यालोचनया ब्रह्मण एव। अनन्यथासिद्ध त्वन्तु ब्रह्मधर्माणां तात्पर्यलिङ्गोपेततयाऽन्तस्तद्धर्मोपदेशादित्यत्र व्युत्पाद्यम्। प्राणस्तथानुगमादित्यत्र तु सर्वकारणस्य ब्रह्मणः कार्येष्वनुवृत्तेः कार्यलिङ्गानि ब्रह्मणि योजयितुं शक्यानि। कार्यान्तरेष्वप्यनुवृत्तस्य ब्रह्मणो लिङ्गानि तु कार्येषु योजयितुं न शक्यन्ते। अतः प्राणादिलिङ्गानामन्यथासिद्धत्वं ब्रह्मलिङ्गानामनन्यथासिद्धत्वमिति व्युत्पाद्यम्। विवक्षितगुणोपपत्तेश्चेत्यत्र तु उपमर्दानुपमर्दाभ्यामित्यनन्यथासिद्धिप्रकारभेदादपुनरुक्तता।(ब्रह्मविद्या)

## अनुपपत्तेस्तु न शारीरः १-२-३

पूर्वपक्ष्यनुमाने प्रतिकूलतर्कः प्रदर्श्यते। सत्यसङ्कल्पत्वाकाशात्मत्वावाकित्वानादरत्वज्यायस्त्वादिगुणा जीवे कथमपि नोपपद्यन्ते। जीवधर्मास्तु ब्रह्मण्युपपादयितुं शक्यन्ते।

## कर्मकर्तृव्यपदेशाच्च १-२-४

मनोमयत्वादिविशिष्टः परमात्मा उपासकबोधकप्रथमान्तशब्द-भिन्नद्वितीयान्तशब्दबोध्यत्वात्। एतमितः प्रेत्याभिसंभवितास्मीति। प्राप्तास्मीत्यर्थः।

## शब्दविशेषात् १-२-५

मनोमयत्वादिविशिष्टः परमात्मा शाण्डिल्यविद्याविषयत्वात्। बृहदारण्यकस्थ शाण्डिल्यविद्याविषयवत्। बृहदारणयकस्थशाण्डिल्यविद्याविषयः परमात्मा उपासकबोधकसप्तम्यन्तशब्दभिन्नप्रथमान्तशब्दबोध्यत्वात्। शब्दविशिष्टशब्दबोध्यत्वादित्यर्थः। वैशिष्टयञ्च स्वसमभिव्याहृतत्व स्वप्रकृतिक विभक्तिविरुद्धविभक्तिप्रकृतित्वसम्बन्धद्वयेन।

## स्मृतेश्च १–२–६

मनोमयत्वादिगुणविशिष्टो जीवो न जीवहृदयस्थत्वेनोपदिश्यमानत्वात्। ईश्वरः सर्वेंत्यादिस्मृत्युक्तेश्वरवत्।

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च १–२–७

मनोमयत्वादिगुणविशिष्ट ईश्वरो न परिच्छिन्नायतनत्वादणीयस्त्वेन व्यपदिश्यमानत्वात्। यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मय इति पूर्वपक्षभागार्थः। अप्रयोजको हेतुर्ब्रह्मण एवमुपास्यत्वसम्भवात्। आकाशवद्ब्रह्मणोऽप्युपाध्यपेक्षयाल्पत्व मुपपद्यत इत्यर्थः

भा. - तत्रास्य बुद्धिविज्ञानं ग्राहकम्। तत्र हृदयेऽस्य परमात्मनो बुद्धिवृत्तिर्ग्राहिका भवति। इह जीवब्रह्मणोरुभयोर्गुणानामुपदिष्टत्वात् तत्र ब्रह्मगुणानां जीवे उपपादयितुमशक्यत्वाज्जीवगुणानां तु ब्रह्मण्युपपादयितुं शक्यत्वात् ब्रह्मण उपास्यत्वं समारोप्यस्य रूपेण विषयो रूपवान् भवेत्। विषयस्य तु रूपेण समारोप्यं न रूपवदिति न्यायात्।

ब्रह्म परिच्छिन्नमल्पश्च परिच्छिन्नायतनत्वात् पक्षिवदित्याशङ्कते तत्र यदाशङ्क्यते - अकल्पितायतनकत्वमुपाधिरिति परिहाराशयः।

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् १–२–८

ब्रह्म भोक्ता जीवाभिन्नत्वाज्जीववत् ब्रह्म जीवाभिन्नो जीवाधारहृदयस्थत्वात् चिद्रूपत्वाच्च जीववदिति पूर्वपक्षः। वैशेष्यादित्यनेन धर्माधर्मादिमत्त्वमुपाधिरुच्यते।

आकाशो दाहवानग्निसम्बन्धवत्त्वादित्याभास साम्यमाह-यदि च सन्निधानमात्रेणेति। आभासे दाहयोग्यत्वमुपाधिः।

सर्वगतानेकात्मवादिनामिति भाष्यम्। चैत्रात्मा मैत्रभोगेन भोगवान् मैत्रहृदयसम्बन्धवत्त्वात् मैत्रात्मवदिति चोद्यम्। मैत्रीयमनोऽवच्छिन्न भोगहेतुधर्मवत्त्वमुपाधिरिति परिहारः।

जीवब्रह्मणोरेकत्वाद्ब्रह्मणो भोक्तृत्वमिति शङ्कामनूद्य खण्डयति यथाशास्त्रमिति। भोक्तृत्वानुमाने दृष्टान्ते साध्यवैकल्यम्। स्वरूपासिद्धिरपि वैशेष्यपदार्थः। मिथ्याज्ञानवत्त्वमुपाधिः। मिथ्याज्ञानवज्जीवाभेदस्येश्वरेऽभावात्। अस्मिन् सूत्रे हृदयसम्बन्धित्वादीश्वरस्य सुखदुःखानुभवाख्यसम्भोग प्राप्तिराशङ्क्यते भोक्त्रापत्तेरित्यत्र तु सर्वात्मतयेति भेदः। (ब्र.वि.) अत्र मनोमयत्व प्राणशरीरत्वाल्पायतनत्वाणीयस्त्वानि हि प्रथमपाठादिना बलवन्ति जीवलिङ्गानि स्पष्टानि। तैरभिभूतत्वात् सत्यसङ्कल्पत्वादिब्रह्मलिङ्गम स्पष्टमिति पादसंगतिः। उपास्ये ब्रह्मणि समन्वयः। पूर्वपक्षे जीवोपास्तिः सिद्धान्ते ब्रह्मण इति फलभेदः। (यत्र फलं नोच्यते तत्र पूर्वोत्तरपक्षसिद्धिः फलम्)

इति सर्वत्र प्रसिद्ध्यधिकरणम्।

## २.अधिकरणम्

### अत्ता चराचरग्रहणात् १–२–९

यस्य ब्रह्म च क्षत्रं चेत्यादि कठवल्लीवाक्यं विषयः। अत्र यच्छब्दप्रतिपाद्यः किं जीव उतेश्वर इत्यत्तृत्वस्य भोक्तृत्वसंहर्तृत्वाभ्यां संशयः। पूर्वाधिकरणे ब्रह्मणो भोक्तृत्वाभाव उक्त इति दृष्टान्तसंगत्या पूर्वपक्षमाह-जीवो वाऽत्ता स्यादिति। अग्निपूर्वपक्षः सम्भवमात्रेण। यच्छब्दप्रतिपाद्यो जीवो भोक्तृत्वात् यच्छब्दप्रतिपाद्यो भोक्ता ओदनप्रतिसम्बन्धित्वेन श्रूयमाणत्वादिति पूर्वपक्षः। यच्छब्दप्रतिपाद्यः परमेश्वरः (चराचर) सर्वसंहर्तृत्वात्। ब्रह्मक्षत्रपदार्थश्चराचरात्मको मृत्यूपसेचनसम्बन्धित्वेन श्रूयमाणत्वात्। यत्पदप्रतिपाद्यः चराचरसंहर्ता मृत्यूपसेचनसम्बन्धिप्रतिसम्बन्धित्वं यत्र यत्र तत्र सर्वचराचरसंहर्तृत्वम्।

स्वयमद्यमानत्वे सति अन्यादनसाधनत्वमुपसेचनत्वम्। यत्र स इति वाक्येन जीवस्य ईश्वरे कल्पितत्वेन श्रवणमस्ति। तथाच मृत्यूपसेचनप्रतिसंम्बन्धी ईश्वरो न यच्छब्दार्थकल्पितत्वेनोक्तत्वादिति शङ्कायाम्–

## प्रकरणाच्च १–२–१०

हेतुरप्रयोजकः स्वरूपसिद्धो ब्रह्मणः प्रकृतत्वात्। जगत्संहर्ता सगुणेश्वरो यत्र निर्विशेषे कल्पितः तमात्मानं को वेदेति दुर्विज्ञेयत्वं ब्रह्मलिङ्गम्। अत्र प्रथमप्रतीतभोग्यत्वलक्षणापवादेन विनाश्यत्वलक्षणां व्युत्पाद्य ब्रह्मलिङ्गस्योन्मेषणीयत्वादस्पष्टब्रह्मलिङ्गता। ज्ञेयब्रह्मणि समन्वयः प्रदर्शितः। पूर्वपक्षे जीवोपास्तिः सिद्धान्ते निर्विशेष ब्रह्मज्ञानमिति फलभेदः।

इति अत्रधिकरणम्

# ३. अधिकरणम्

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १–२–११

ऋतं पिबन्तौ सुकृतस्य लोके इत्यादिकठवल्लीवाक्यं विषयः। अस्मिन् वाक्ये प्रतीयमानं जीवभिन्नं वस्तु किं बुद्धिरुत परमात्मेति संशयः। उभयोः पातृत्वासम्भवेन संशयमाक्षिप्य छत्रिन्यायेन पातृत्वमिति संशयं समर्थयति-अत्राहाक्षेप्रैत्यादिना। नियतपूर्वभाविकृतिमत्त्वरूपं पानानुकूलत्वं कर्तृकारयित्रोस्साधारणमिति यद्वेति। उपचार आहार्यारोपः। कर्तृत्वोपचारादित्यत्रोपचारो विवक्षा। श्रुत्यर्थः ऋतमवश्यम्भावि कर्मफलं पिबन्तौ भुञ्जानौ सुकृतस्य कर्मणो लोके कार्ये देहे परस्य ब्रह्मणोऽर्ध स्थानमर्हतीति परार्ध्यं हृदयं परमं श्रेष्ठं तस्मिन् या गुहा नभोरूपा बुद्धिरूपा वा तां प्रविश्यस्थितौ छायातपवन्मिथो विरुद्धौ तौ च ब्रह्मविदः कर्मिणश्च वदन्ति। त्रिर्नाचिकेतोऽग्निश्चितो यैः तेऽपि वदन्तीत्यर्थः। गुहायां बुद्धौ स्थितम्। गह्वरेष्ठमनेकानर्थसङ्कुले देहे स्थितम्।

जुष्टं ध्यानादिना सेवितं यदा ध्यानपरिपाकदशायामीशमन्यं विशिष्टरूपाद्भिन्नं शोधितचिन्मात्रं प्रत्यक्त्वेन पश्यति तदाऽस्य महिमानं स्वरूपमिति प्राप्नोतीव, ततो वीतशोको भवति। पूर्वं ब्रह्मक्षत्रपदस्य मृत्युपदादनित्यवस्तुपरत्ववत् गुहाप्रविष्टपदादत्र बुद्धिजीवपरत्वमिति दृष्टान्तसंगत्या पूर्वपक्षयति। विमतं बुद्धिर्नत्वीश्वरो जीवभिन्नत्वे सति गुहाप्रविष्टत्वेनोक्तत्वात्। सुकृतसम्बन्धिलोकवर्तित्वात्। सिद्धान्तस्तु– विमतः ईश्वर एव जीवभिन्नत्वे सति चेतनत्वात्। विमतश्चेतनश्चेतनत्वावच्छिन्नविशेष्यतानिरूपितैकत्वाम्यसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतावत्त्वात्। यो यद्धर्मावच्छिन्नविशेष्यतानिरूपितैकत्वान्यसंख्यानिष्ठप्रकारतानिरूपित विशेष्यतावान् सः तद्धर्मवानिति व्याप्तेर्दर्शनादित्यर्थः। दर्शनादित्यस्य परमात्मनो गुहाप्रवेशस्य श्रुतिषु दर्शनादिति द्वितीयोऽर्थः। जीवेश्वराविति साध्यमध्याहर्तव्यम्। आत्मानौ हि इति हेतुश्चेतनत्वादित्यर्थः। तदुपपादको हेतुस्तद्दर्शनादिति।

## विशेषणाच्च १–२–१२

ऋतं पिबन्ताविति मन्त्रो जीवेश्वरबोधको जीवेश्वर बोधकपूर्वोत्तरमन्त्र संदष्टत्वात्। गन्तृगन्तव्यभावेन विशेषितत्वात्। अस्मिन् वाक्ये प्रतीयमानं जीवभिन्न वस्त्वीश्वरः प्रकृतत्वात् ब्रह्मविदुच्यमानत्वात्।द्वासुपर्णा इत्यादिवाक्यं तु नास्य विषयः। तत्र बुद्धिजीवयोरेव ग्रहणमिति पैंगिरहस्य ब्राह्मणे उक्तत्वात्। अनेनाप्यधिकरणेन ज्ञेयब्रह्मणि समन्वयः प्रदर्शितः। पूर्वपक्षे बुद्धिभिन्नजीवज्ञानं सिद्धान्ते जीवविलक्षणपरमात्मज्ञानमिति फलभेदः।

इति गुहाप्रविष्टाधिकरणम्

# ४. अधिकरणम्

## अन्तर उपपत्तेः १–२–१३

य एषोऽन्तरक्षिणि पुरुषो दृश्यते इत्यादिवाक्यं विषयः। अत्र दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां छायात्मा परमात्मा वेति संशयः। जीवदेवतयोः सम्भवमात्रेणोपन्यासः, अन्तरधिकरणेन निरस्तत्वात्। पूर्वत्र पिबन्तावित्युपक्रमानुरोधेनोत्तरेषां नयनदृष्टान्तेन अत्रापि दृश्यत इत्युपक्रमानुरोधे नोत्तरत्र श्रूयमाणानां योजनं कार्यमिति पूर्वपक्षमाह अक्ष्यन्तः श्रूयमाणः पुरुषः छायात्मा चाक्षुषत्वेन श्रूयमाणत्वात्। सिद्धान्तस्तु अक्ष्यन्तः श्रूयमाणः पुरुषः छायात्मा चाक्षुषत्वेन श्रूयमाणत्वात् सिद्धान्तस्तु अक्ष्यन्तः श्रूयमाणः पुरुषः परमेश्वरः संयद्वामत्वात् आत्मत्वादमृतत्वादभयत्वादुपपद्यमाननिर्लेपचक्षुः स्थानकत्वात्, वामनीत्वात् भामनीत्वात्। चरमश्रुतानामल्पत्वे प्रथमानुगुण्येन नेतुंशक्यत्वे तथा नीयन्ते। अत्र तु बहुत्वात् प्रथमानुगुण्येन, नेतुमशक्यत्वाच्चोत्तरानुगुणयेन प्रथमस्यैव नयनम्। संयद्वामत्वं फलोत्पादकत्वम्। वामनीत्वं फलप्रापकत्वम्। ब्रह्मणः कथमल्पं स्थानमित्यतो ब्रह्म नाल्पस्थानकत्वादिति शङ्कायां सूत्रम्—

## स्थानादिव्यपदेशाच्च १–२–१४

अन्यत्राप्युपासनार्थं स्थाननामरूपाणां व्यपदिश्यमानत्वादत्राप्युपासनार्थं स्थानोपदेश इत्यदोषः। शङ्काहेतुरप्रयोजक इति भावः। प्रकरणमपि दर्शयति—

## सुखविशिष्टाभिधानादेव च १–२–१५

अक्ष्यन्तः श्रूयमाणः पुरुषः परमात्मा, अनवच्छिन्न सुखात्मकत्वात् ब्रह्मविद्याविषयत्वात् (एषा ते सोम्यास्मद्विद्या आत्मविद्या चेति) पापकर्माश्लेषप्रयोजकज्ञानविषयत्वात् (यथा पुष्करपलाश इत्यादि) उपकोसलविद्याऽग्न्युक्तात्मविद्यातो भिन्ना तद्वक्तृभिन्नवक्तृकत्वादग्निविद्यया विच्छिन्नप्रकरणकत्वादिति शङ्कायामाह—

### श्रुतोपनिषत्कगत्यभिधानाच्च १-२-१६

उपकोसलविद्याऽग्न्युक्तात्मविद्यातोऽभिन्ना अब्रह्मविषयकत्वेना निश्चितत्वे सत्यर्चिरादिमार्गप्रापकत्वादग्नि प्रतिपादितब्रह्मविद्याफलमात्रप्रतिपादकवाक्योक्तत्वात्, ब्रह्मविद्याफलभूतार्चिरादिमार्गप्रापकत्वात्।

### अनवस्थितेरसम्भवाच्च नेतरः १-२-१७

छायात्मैतद्वाक्यप्रतिपाद्यो न भवति नित्यसन्निहितत्वाभावादमृतत्वाद्य भावाच्च। अत्रात्मश्रुतेरिति शिरस्कत्वेनाविवक्षितार्थकत्वमित्यङ्गीकृत्य पूर्वपक्षप्रवर्तनादस्पष्टब्रह्मलिङ्गता। उपास्ये ब्रह्मणि समन्वयः। पञ्च सूत्राणि।

इति अन्तराधिकरणम्

## ५. अधिकरणम्

### अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् १-२-१८

य इमं लोकं परञ्च लोकमित्यादिवाक्यं विषयः। अत्र यमयितृत्वेन श्रूयमाणः किं देवतात्मा, योगी वा, किं परमात्मा किमर्थान्तरमिति संशयः। अशरीरस्य नियन्तृत्वासम्भवसम्भवाभ्यां संशयः। पूर्वत्र स्थानव्यपदेशाच्चेत्यत्र स्थाननिर्देशोपपादनाय पृथिव्यादिस्थाननिर्देशो दृष्टस्तस्याक्षेपादाक्षेपसंगत्या पूर्वपक्षः।

ईश्वरो न नियन्ता अशरीरत्वाद्घटवदिति पूर्वपक्षः। अन्तर्यामिशब्दप्रतिपाद्यः प्रसिद्धार्थभिन्नोऽप्रसिद्धसंज्ञकत्वात्। देवतात्मा पृथिव्यादिनियामकत्वेनोक्तत्वात्। योगी - एकत्वे सति पृथिव्यादिनियामकत्वेनोक्तत्वात्। ईश्वरो न कार्यकरणसंघातरहितत्वादिति पूर्वपक्षः।

सिद्धान्तस्तु - अशरीरत्वं किं नियम्यातिरिक्त देहरहितत्वं, देहसम्बन्धाभावः, देहे भोक्तृत्वाभावो वा। आद्ये स्वशरीरनियमने देहान्तररहिते तस्मिन् व्यभिचारः, द्वितीयेऽसिद्धिः। ईश्वरस्याविद्यार्जितत्वात्

शरीरासम्बन्धासिद्धेः। तृतीये परमात्मा न नियन्ताऽभोक्तृत्वादिति पर्यवस्यति। तत्राचेतनत्वमेवोपाधिरिति आगमबाधश्च। दैवयज्ञभूतादिसर्व नियामकत्वेन श्रूयमाणः परमात्मा सर्वान्तर्यमयितृत्वेन श्रूयमाणत्वान्निरङ्कुश यमयितृत्वादात्मत्वादमृतत्वाच्च।

अन्तर्यामी देवतात्मा न देवताया अवेद्यत्वात्। ईश्वरः स्वान्यनियम्यो नियामकत्वाज्जीववदिति शङ्कायां स्वान्यवस्तुमत्त्वमुपाधिरित्याह भेदाभावा दिति। योगिनो नियामकत्वपक्षं खण्डयति-तस्याप्यन्य इत्यनवस्थादोषश्चेति।

## नच स्मार्तमतद्धर्माभिलापात् १-२-१९

प्रधानमन्तर्यामिशब्दप्रतिपाद्यंमदृष्टत्वादिमत्त्वात्, सर्वविकारकारणत्व प्रयुक्तविकारनियन्तृत्वात्। आत्मत्वं तु ममात्मा भद्रसेन इतिवदौपचारिक मिति शङ्काभागार्थः। तत्प्रधानमचेतनं तद्भिन्नं चेतनं तद्धर्माभिलापात् - अदृष्टो द्रष्टेत्यादिना द्रष्टृत्वश्रोतृत्वादीनां प्रधानेऽभावान्न प्रधानमन्तर्यामि शब्दप्रतिपाद्यमित्यर्थः। जीवे चेतनधर्माणां सम्भवात्। दर्शनादिक्रियाया इति। आत्मकर्तृकदर्शनादिक्रियाया अनात्मा विषयो नत्वात्मा क्रियायाः कर्तृविषयत्वायोगात्। क्रियायां गुणः कर्ता प्रधानं कर्म एकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयो र्विरोधान्न कर्तुः कर्मत्वम्। अदृष्टद्वारा सर्वनियामकत्वाच्च जीवोऽन्तर्यामिशब्दप्रतिपाद्योऽस्त्विति शङ्कायां सूत्रम्

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते १-२-२०

जीवोऽन्तर्यामी न परिच्छिन्नत्वात्। अपि चोभयेऽपि काण्वा माध्यन्दिनाश्चैनं शारीरं भेदेनान्तर्यामिणो भिन्नत्वेनाधीयते। तथाच जीवोऽन्तर्यामी न नियम्यत्वेन श्रूयमाणत्वात्। जीवान्तर्यामिणोर्भेदेऽप सिद्धान्तं शङ्कते कथं पुनरिति। विद्याविद्यावस्थाभेदेन परिहरति-अत्रोच्यत इति। द्रष्टृत्वादिव्यपदेशः परमात्मनि प्रत्यगभेदाभिप्रायः। शास्त्रीयदर्शन पक्षे अदृष्टत्वादिव्यपदेशः तत्तद्वृत्त्यभिव्यक्तचैतन्याविषयत्वाभिप्रायः।

(ब्र.वि.) योगिपूर्वपक्षनिराकरणार्थं यमयितृत्वस्य साधननिरपेक्षस्य ग्रहणमौत्सर्गिकमिति रीत्या ब्रह्मलिङ्गतायाः साधनीयत्वात्, जीवपूर्वपक्ष निराकरणार्थं भेदेनाधीयत इति स्थानप्रमाणादिभिर्निर्णेयत्वादस्पष्टब्रह्म-लिङ्गता। ज्ञेये ब्रह्मणि समन्वयः।

इति अन्तर्याम्यधिकरणम्।

## ६. अधिकरणम्

### अदृश्यत्वादिगुणको धर्मोक्तेः १-२-२१

अथापरा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमित्यादिवाक्यंविषयः। अदृश्यत्वादिसाधारणधर्मदर्शनात् प्रधानं जीव इश्वरो वेति संशयः। पूर्वाधिकरणसिद्धान्तयुक्तिद्रष्टृत्वाद्यभावात् प्रत्युदाहरणसंगत्या पूर्वपक्षः। भूतयोनिशब्दप्रतिपाद्यं प्रधानमचेतनदृष्टान्तदृष्टान्तितत्वात्। (यथोर्ण नाभिः) सर्वज्ञत्वादीनाञ्च भूतयोनेरक्षरात्परो यो वक्ष्यमाणस्तस्यैव गुणत्वसम्भवात्। भूतयोनिमित्यत्र योनिपदस्य निमित्तपरत्वे जीवोऽपि भूतयोनिः स्यादिति पूर्वपक्षः। भूतयोनिशब्दप्रतिपाद्यं ब्रह्म सर्वज्ञत्वात् (धर्मोक्तेः) परविद्याविषयत्वाद्ब्रह्मविद्याविषयत्वात्। (सब्रह्मविद्यामिति) भूतयोनिर्जडः परिणममानत्वाद्विवर्तमानत्वाद्वा हेमरज्ज्वादिवत् (अप्रयोजकः) इति पूर्वपक्षः।

### विशेषणभेदव्यपदेशाभ्यां च नेतरौ १-२-२२

अदृश्यत्वादिगुणकोऽव्याकृतं न (अक्षरात्परतः परः) भेदेन व्यपदिश्यमानत्वात्। शारीरो न अमूर्तत्वादिविशेषणवत्त्वात्। (दिव्यो ह्यमूर्तः) विवर्तमानत्वहेतुः देहात्मत्वाद्यारोपाधिष्ठाने जीवेऽनैकान्तिक इति सिद्धान्ते। अक्षरमव्याकृतमश्नोति व्याप्नोति स्वविकारजातमित्यक्षरम्। अव्याकृतम्=अनादिनामरूपयोर्बीजमीश्वरस्तस्य शक्तिरूपं परतन्त्रत्वादुपा दानमपि शक्तिरित्युक्तम्। भूतानां सूक्ष्माः संस्काराः यत्र ईश्वरः चिन्मात्रमाश्रयो यस्य तस्यैव चिन्मात्रस्य जीवेश्वरोपाधिभूतम्।

## रूपोपन्यासाच्च १–२–२३

अदृश्यत्वादिगुणकः परमेश्वरो द्युमूर्धत्वादिरूपवत्त्वात्। जीवस्याग्नि मूर्धादिमत्त्वं, प्रधानस्य सर्वभूतान्तरात्मत्वं च न सम्भवतीति तद्धारणम्। अस्य वाक्यस्य हिरण्यगर्भपरत्वे पुरुष एवेदं विश्वं कर्मेति वाक्यमुदाहरणम्। अन्येत्वित्यादिमतं न भाष्यकृन्मतम्। वैश्वानराधिकरणे द्युमूर्धत्वादेः परमात्मन्येव कल्पनाया वक्ष्यमाणत्वात्। ज्ञेये ब्रह्मणि समन्वयः।

इति अदृश्यत्वाधिकरणम् ॥

# ७. अधिकरणम्

## वैश्वानरः साधारणशब्दविशेषात् १–२–२४

को न आत्मा किं ब्रह्म। आत्मानमेवेमं वैश्वानरमित्यादिवाक्यं विषयः। वैश्वानरशब्दो जाठराग्निभूताग्नितदभिमानिदेवतानामात्मशब्दश्च जीवेश्वरयोः साधारण इति पूर्वपक्षयुक्ति सिद्धान्तयुक्तिबलाबलानवधारणात् संशयः। पूर्वमुपक्रमस्थादृश्यत्वादिसाधारणधर्माणामुपसंहारस्थ सर्वज्ञत्वादि धर्मैर्यथा व्यवस्था एवमत्राप्युपक्रमस्थसाधारणवैश्वानरशब्दस्योपसंहारस्थ होमाधारत्वादिभिरग्निपरत्वमिति दृष्टान्तसंगत्या पूर्वपक्षमाह जाठरोऽग्नि रिति। चतुर्ष्वन्यतम इति पूर्वपक्षः। वैश्वानर शब्दप्रतिपाद्यः परमेश्वरो द्युमूर्धत्वादिमत्त्वात्। सर्वलोकाश्रयफलजनकोपासनाविषयत्वात्। सर्वपापप्र दाहकज्ञानविषयत्वादुपक्रमस्थब्रह्मात्मशब्दाभिधेयत्वात्।

(स सर्वेषु लोकेषु। एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते)

द्युमूर्धत्वादिमत्वहेतोर्हिरण्यगर्भेव्यभिचारशङ्कायां सूत्रम् -

## स्मर्यमाणमनुमानं स्यादिति १–२–२५

यस्याग्निरिति स्मृतिद्वयं तस्य हवा इत्यादिश्रुतिमूलकम्। तदन्यामूलकत्वे सति श्रुतिमूलकत्वात्।

पूर्वोक्तस्मृतिद्वयं श्रुतिमूलकं शिष्टपरिगृहीतस्मृतित्वात् हिरण्यगर्भस्य द्युमूर्धत्वादि प्रतिपादिका स्मृतिः यस्याग्निरितिस्मृतिमूलश्रुतिमूलिका तदन्यामूलकत्वे सति श्रुतिमूलकत्वात्।

तथाच हिरण्यगर्भे साध्यस्यैव द्युमूर्धत्वादेस्सत्त्वेन सिद्धस्य तस्य हेतूकरणे न व्यभिचार इति भावः।

परमेश्वरे स्मर्यमाणं द्युमूर्धत्वादिरूपम् - अनुमानं श्रुत्यनुमापकं सत् हिरण्यगर्भपरत्वेनाभिमतस्मृतिमूलाकांक्षापूरकं (अस्य पदस्याध्याहारः) स्यात् - भवितुमर्हतीति हेतोः परमात्मनः स्मर्यमाणं रूपं वैश्वानरशब्दबोध्यस्य परमेश्वरत्वेलिङ्गं भवतीति सूत्रार्थः।

शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न———

**तथा दृष्टचुपदेशादसम्भवात्पुरुषमपि चैनमधीयते १–२–२६**

शब्दादिभ्यः शब्दो वैश्वानरशब्दो हृदयं गार्हपत्य इत्याद्यग्नित्रेताप्रकल्पनं प्राणाहुत्याधारत्वमेभ्योऽन्तःप्रतिष्ठानाच्च जाठरोऽग्निरिति पूर्वपक्षानुवादः। अत्राग्निवैश्वानरशब्दाभ्यां जीवेश्वरयोर्निरासः। अन्तः प्रतिष्ठितत्वोक्त्या भूतदेवतानिरासः त्रेताग्नित्वकल्पन प्राणाहुत्याधारत्व हेत्वोः पक्षचतुष्टयनिराकरणपूर्वकं जाठरत्वसाधने उपयोगः। निराचष्टे तथा दृष्टयुपदेशादिति। पूर्वपक्ष हेतवोऽप्रयोजकाः जाठरप्रतीकस्य, जाठरोपाधिकस्य परमेश्वरस्योपास्यत्वात्, केवले जाठरे द्युमूर्धत्वादेरुपपादयितुमशक्यत्वात्। (असम्भवात्) जाठरे पुरुषेऽन्तः प्रतिष्ठितत्वसम्भवेऽपि पुरुषत्वस्य पुरुषविधत्वस्य वोपपादयितुमशक्यत्वात्।

जाठरस्य द्युमूर्धत्वाद्यसम्भवेऽपि देवताया ऐश्वर्यवत्त्वेन सम्भवतीत्यधिकाशङ्कानिराकरणार्थं सूत्रम्—

## अत एव न देवता भूतं च १–२–२७

निरपेक्षैश्वर्यं परमेश्वरस्यैव द्युलोकाद्यधिष्ठातृत्वमिति तस्यैव द्युमूर्धत्वादिकं ग्राह्यं नतु सापेक्षैश्वर्यदेवतामवयवसंपत्त्या न ग्राह्येति सिद्धान्तः। भूतस्य तु चेतनत्वमेव नास्तीति तत्पक्षो निराकृतः।

## साक्षादप्यविरोधं जैमिनिः १–२–२८

प्रतीकोपाधित्वकल्पने विनैवान्तःप्रतिष्ठितत्वमग्नित्रेतात्वकल्पनमग्नि वैश्वानरशब्दश्रुतिरेतत्सर्वमपि साक्षात् परमेश्वरोपासनापरिग्रहेऽपि न विरुद्ध्यत इति जैमिनिः। पुरुषावयवमूर्धादिचुबुकान्तः प्रतिष्ठितत्वादन्तः प्रतिष्ठितत्वमवयवसम्पत्त्या पुरुषविधत्वं, सर्वात्मत्वात्प्राणाहुत्यधिकरणत्वं, अग्रणीत्वादग्नित्वं, विश्वनरात्मकत्वाद्वैश्वानरत्वमुपपाद्यम्। प्रादेशमात्रत्वो पपादने मतत्रयं प्रदर्शयति––

## अभिव्यक्तेरित्याश्मरथ्यः १–२–२९

उपासकानां कृते प्रादेशमात्रतयाऽभिव्यक्तत्वात् प्रदेशेषु हृदयादिषूपलभ्यमानत्वाद्वा परमेश्वरः ·प्रादेशमात्र इति आश्मरथ्य उपपादयति।

## अनुस्मृतेर्बादरिः १–२–३०

प्रादेशमात्रहृदयप्रतिष्ठेन मनसानुस्मर्यमाणत्वादिति बादरिः। प्रादेश मात्रत्वेन स्मरणीय इति।—

## सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति १–२–३१

समानप्रकरणे वाजसनेयिब्राह्मणे त्रैलोक्यात्मनो वैश्वानरस्यावयवानाम ध्यात्मं मूर्धादिचुबुकान्तावयवेषु सम्पादनाद्रूढ्यपरित्यागेन तदवच्छेदकृतमा ञ्जसं प्रादेशमात्रत्वमिति जैमिनिः।

## आमनन्ति चैनमस्मिन् १–२–३२

एनं परमेश्वरमस्मिन् मूर्धादिचुबुकान्तराले जाबाला आमनन्ति स एषोऽनन्तोऽव्यक्त आत्मेत्यादिना। प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इत्यभिविमानम्। अत्र द्युमूर्धत्वादि रूपस्य ब्रह्मलिङ्गस्य कल्पनामात्रसिद्धत्वं प्रादेशमात्रत्वश्रवणेनोपासकमूर्धादिषूपसंहृतत्वप्रतीतेर्वेदि बर्हि गार्हपत्यादिकल्पनाप्रतिरुद्धत्वेन चास्पष्टता। तथा च वैश्वानरवाक्यमुपास्य ब्रह्मणि समन्वितम्।

| | |
|---|---|
| 1. सर्वत्र प्रसिद्ध्यधिकरणम् | उपास्यब्रह्मपरम् |
| 4. अन्तराधिकरणम् | ,, |
| 7. वैश्वानराधिकरणम् | ,, |
| 2. अत्त्रधिकरणम् | ज्ञेयब्रह्मपरम् |
| 3. गुहां प्रविष्टाधिकरणम् | ,, |
| 5. अन्तर्याम्यधिकरणम् | ,, |
| 6. अदृश्यत्वाधिकरणम् | ,, |

यद्यप्यस्मिन् पादे ज्ञेयब्रह्मणि समन्वयप्रदर्शकानामेवाधिकरणानामाधिक्यं तथाप्याद्यान्त्ययोः सविशेषपरत्वात् सविशेषप्रधानोऽयं पाद इत्युच्यते।

इति वैश्वानराधिकरणम्

इति श्रीगोडासुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः।



# अथ प्रथमाध्यायस्य तृतीयः पादः

## १. अधिकरणम्

### द्युभ्वाद्यायतनं स्वशब्दात् १-३-१

"यस्मिन् द्यौः पृथिवी"त्यादिमुण्डकवाक्यं विषयः। प्रधानं ब्रह्म वेति संशयः। यथा पूर्ववाक्ये उपसंहारस्थद्युमूर्धत्वादिलिङ्गेनब्रह्मपरत्वमेवमुपसंहारस्थसेतुश्रुत्या प्रधानादिपरत्वमिति दृष्टान्तसङ्गत्या पूर्वपक्षः। द्युभ्वाद्यायतनं न ब्रह्म पारवत्त्वादमृतसम्बन्धित्वेन श्रूयमाणत्वात्। द्युभ्वाद्यायतनं प्रधानं द्युभ्वादिकारणत्वादिति पूर्वपक्षः।

द्युभ्वाद्यायतनं ब्रह्म आत्मशब्दवत्त्वात्, सच्छब्दप्रतिपाद्यप्रजाद्यायतनाभिन्नत्वात् (स्वशब्दात्) ब्रह्मप्रतिपादकपूर्वोत्तरमन्त्रसन्दष्टवाक्यप्रतिपाद्यत्वात्। (पुरुष एवेदं विश्वं कर्म इति पुरस्तात्, ब्रह्मैवेदममृतं पुरस्तादित्युपरिष्टात्) प्रधानं माभूत् हिरण्यगर्भः स्यादित्यभिप्रायेणाक्षिप्य परिहरति तत्र त्विति। तमेवैकं जानथ आत्मानमिति- तदन्य निष्ठविषयत्वानिरुपकतन्निष्ठविषयताशालिज्ञानवन्तोभवतेत्यर्थः। सर्वं ब्रह्मेति बाधायां सामानाधिकरण्यम्। तत्त्वं च बाध्यमानतादात्म्योपलक्षितव्यक्तिपर समानविभक्तिक-नाना नामत्वम् (1)

अध्यासे सामानाधिकरण्यम् — अध्यस्यमानतादात्म्यविशिष्टव्यक्ति पर समानविभक्तिकनानानामत्वं यथा इदं रजतमित्यत्र। (2)

पूर्वोक्तोभयतादात्म्यातिरिक्ततादात्म्यविशिष्टव्यक्तिपर समानविभक्तिक नानानामत्वं विशेषणविशेष्यभावे सामानाधिकरण्यं यथा नीलो घट इत्यत्र। (3)

व्यक्तिमात्रबोधकसमानविभक्तिकनानानामत्वमेकत्वे सामानाधिकरण्यम्। यथा सोऽयं देवदत्त इति। सेतुशब्दस्य पारवत्वेऽपि लक्षणाया एव कल्पनीयत्वेन विधारकत्व एव सा कल्प्यते। विधारकत्वन्तु

ब्रह्मणि सम्भवत्येव। अमृतशब्दश्च भावप्रधाननिर्देशतया मोक्षार्थकामृतत्वपरस्तस्य धारक इत्यर्थः।

## मुक्तोपसृप्यव्यपदेशात् १—३—२

द्युभ्वाद्यायतनं ब्रह्म अविद्यादिदोषमुक्तैरुपसृप्यत्वात् मुक्तेन=वाग्विमोकेन द्वारा उपसृप्यत्वात्।

## नानुमानमतच्छब्दात् १—३—३

द्युभ्वाद्यायतनं न प्रधानं प्रधानप्रतिपादकशब्दाप्रतिपाद्यत्वात्। प्रधानं न द्युभ्वाद्यायतनमचेतनत्वात्। ब्रह्मपरमेवेदं प्रकरणम्। आत्मश्रुतेः निरपेक्षद्युभ्वाद्यायतनत्वलिङ्गाच्च।

## प्राणभृच्च १—३—४

चकारान्नेति अतच्छब्दादितिचानुवर्तते। जीवो द्युभ्वाद्यायतनं न सर्वज्ञत्वाभावात् , परिच्छिन्नत्वात्।

## भेदव्यपदेशात् १—३—५

भिद्यते अनेनेति भेदः, भेदकमित्यर्थः। द्युभ्वाद्यायतनं जीवो न जीवज्ञेयत्वात् (तमेवैकं जानथात्मानम्)

अरा इव रथनाभौसंहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमान इति मन्त्रे श्रूयमाणनाडीसम्बन्धनाड्यन्तश्चारित्व जायमानत्वलिङ्गैर्जीवपूर्वपक्षोत्थितौ परिहारसूत्रम् ——

## प्रकरणाच्च १—३—६

द्युभ्वाद्यायतनं ब्रह्म, सकलविज्ञानप्रयोजकज्ञानविषयत्वात् ब्रह्मणो हृदयायतनत्वेन तद्द्वारा नाडीसम्बन्धोऽभिव्यक्तिविशेषवत्त्वरूपं जायमानत्वं, जीववदन्तःकरणोपहितरूपेण नाड्यन्तः संचारित्वं च ब्रह्मण्युत्पादयितुं शक्यन्ते।

## स्थित्यदनाभ्यां च १–३–७

द्युभ्वाद्यायतनं ब्रह्मेत्यनुमाने साध्याप्रसिद्धिशङ्कायामिदं सूत्रम्। द्वासुपर्णेति मन्त्रतृतीयपादबोध्यो जीवो भोक्तृत्वात्, चतुर्थपादप्रतिपाद्यः शुद्धचेतनोऽभोक्तृत्वे सति प्रकाशत्वात् । द्वासुपर्णेति मन्त्रः शुद्धचेतनमात्रपरो जीवपरत्वाभाववत्त्वे सति जीवब्रह्मोभयबोधकत्वात् जीवः एतन्मन्त्रप्रतिपाद्यो न भवति, लोकप्रसिद्धत्वात् द्युभ्वाद्यायतनं ब्रह्म द्वासुपर्णेतिमन्त्रप्रतिपाद्यार्थाभिन्नत्वात्। ज्ञेयब्रह्मणि समन्वितम्। अदृश्यत्वादि गुणको धर्मोक्तेरित्यनेन गतार्थमपि तत्प्रकरणेऽपठितमितिकृत्वा चिन्तितम्। अत्र प्रकरणं पिधाय कृत्वाचिन्तारूपेणाधिकरणप्रवृत्तेः विषयवाक्यस्थात्मशब्दस्य स्वभावाद्धिसाधारण्याच्चास्पष्टब्रह्मलिङ्गता। पूर्वपक्षे प्रधानाद्युपास्तिः सिद्धान्ते ब्रह्मज्ञानं फलम्।

इति द्युभ्वाद्यधिकरणम् ।

## २.अधिकरणम्

## भूमासंप्रसादादध्युपदेशात् १–३–८

भूमात्वेव विजिज्ञासितव्य इति। यत्र नान्यत्पश्यतीत्यादिवाक्यं विषयः। भूमा बहुत्वं तस्य चात्र धर्मिपरता, विपुलइत्यर्थः स किं प्राण उत परमात्मेति संशयः, पूर्वमात्मशब्दात् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तं तन्न युज्यते। अब्रह्मण्यपि तरतिशोकमात्मविदित्यत्रात्मशब्दप्रयोगादित्याक्षेपसंगत्या पूर्वपक्षः। भूमशब्दप्रतिपाद्यः प्राणाभिन्नः प्राणनिरूपितभूयस्त्वप्रश्नप्रतिवचनाविषयत्वात् प्राणवत् छान्दोग्यसप्तमाध्यायस्ययत्पदार्थपरत्वं यत्र तत्र तन्निरूपिभूयस्त्वप्रश्नप्रतिवचनविषयत्वं यथा नामभिन्नायां वाचि। यत्र नान्यत्पश्यतीत्यादिविशेषविज्ञानाभावरूपलक्षणं भूम्नः अमृतत्वसुखत्वात्मत्वानि प्राणे उपपादितानि। सिद्धान्तस्तु भूमशब्दप्रतिपाद्यः प्राणो न प्राणप्रतिपादकवाक्यविलक्षणवाक्यप्रतिपाद्यत्वात्, द्रव्यदेवतान्तराभावेनाग्निहोत्रान्तराप्रतीतेः एष तु वा अगिनहोत्रीत्यत्र

तुशब्दस्वारस्यभङ्गः, अत्र तु प्रणातिरिक्त सत्यब्रह्मरूपातिवादनिमित्तस्य सत्वान्न तु शब्द स्वारस्यभङ्गः। अविद्यानिवर्तकज्ञानविषयत्वादिति द्वितीयहेतुमाह = नचान्यत्र परमात्मज्ञानादिति। पूर्वपक्ष्यनुमाने प्राणसमानाधिकृतत्वमुपाधिः। नानुमानमतच्छब्दादिति सूत्रान्नेत्यनुवर्तते। प्राणभृच्चेत्यतः प्राण इत्येकदेशानुवृत्तिः तथा च पूर्वोक्तानुमानलाभ इति पूर्वपक्षनिरासानुमानम्। भूमाब्रह्म सत्यशब्दवत्त्वात् सिद्धान्तानुमानम्।

## धर्मोपपत्तेश्च १—३—९

यदि भूमाब्रह्म न स्यात्तदा(भूम्नि) अनुपपन्न दर्शनादिविशेषाभावनिरुपाधिकसुखत्वामृतत्व स्वमहिमप्रतिष्ठितत्व सर्वगतत्व सर्वात्मत्वादिधर्मकः स्यादित्यनुकूलतर्क प्रदर्शनपरं सूत्रम्। चात्प्रकरणमपि हेतुस्समुच्चीयते। संप्रसादादध्युपदेशस्य सौत्रहेतोः प्राणव्रतानुकर्षण, प्रश्नोत्तराभाव लिङ्गाभिभूतत्वेनास्पष्टब्रह्मलिङ्गता। निर्गुणब्रह्मणि समन्वयः। पूर्वपक्षे प्राणाद्युपास्तिः सिद्धान्ते ब्रह्मज्ञानं फलम्।

इति भूमाधिकरणम्।

## ३. अधिकरणम्

## अक्षरमम्बरान्तधृतेः १—३—१०

कस्मिन्नु खल्वाकाश इत्यादि सहोवाचैतद्वैतदक्षरं गार्ग्यस्थूलमित्यादि बृहदारण्यकवाक्यं विषयः। अक्षरपदप्रतिपाद्योवर्ण उत ब्रह्मेति संशयः। सत्यशब्दस्य ब्रह्मणिरूढत्वात् ब्रह्मपरत्वमिवाक्षरशब्दस्य वर्णेरूढत्वाद्वर्णपरत्वमितिदृष्टान्तसंगत्या पूर्वपक्षः। अक्षरशब्दप्रतिपाद्य ओंकारात्मकवर्णःशक्तिसम्बन्धेनाक्षरशब्दवत्त्वात्। ओंकार एवेदं सर्वमिति सर्वात्मकत्वेनोपास्यत्वादिति। अक्षरशब्दप्रतिपाद्यं परं ब्रह्मैव अम्बरान्तधारणानुकूलप्रशासनवत्त्वादिति सिद्धान्तः। अम्बरान्त धारणमात्रस्य हेतुत्वे प्रधाने व्यभिचारः स्यादित्यतः प्रशासनमेव हेतुः करणीय इति सूत्रम्।

## साच प्रशासनात् १-३-११

एतस्य वाऽक्षरस्य प्रशासने गार्गिसूर्याचन्द्रमसौ विधृतौतिष्ठत इति। प्रशासनं चेतनधर्म इति तद्व्यावृत्तिः।

## अन्यभावव्यावृत्तेश्च १-३-१२

अन्यभावस्य प्रधानभावस्य व्यावृत्तेश्च। अक्षरशब्दप्रतिपाद्यं प्रधानं न प्रधानावृत्तिद्रष्टृत्वादिना श्रूयमाणत्वात्। न जीवः उपाधिशून्यत्वेन श्रूयमाणत्वात् (अचक्षुष्कमित्यादिना)। अम्बरान्तधृतिरूपः सौत्रो हेतुः, अम्बरं ब्रह्मेति शङ्कया धृतिर्न श्रुतेति शङ्कयाचाभिभूतेत्यस्पष्टब्रह्मलिङ्गता। शङ्काद्वयं परिमले स्पष्टम्। ज्ञेयब्रह्मणि समन्वयः।

इत्यक्षराधिकरणम्।

# ४. अधिकरणम्

## ईक्षति कर्मव्यपदेशात् सः १-३-१३

एतद्वैसत्यकामपरंचापरंचब्रह्मेति प्रश्नोपनिषद्वाक्यंविषयः। प्रश्नोपनिषत्पश्चमाध्याये -ध्यातव्यत्वेनोपदिश्यमानमपरब्रह्मपरब्रह्म वेति संशयः। पूर्वमोंकारस्याम्बरान्तविधारणत्वे निरस्ते ध्येयस्य बुध्दिस्थत्वाद्ध्येयं किमिति निश्चीयत इति प्रसङ्गसंगतिः। ध्यातव्येत्वेनोपदिश्यमानमपरब्रह्म कार्यब्रह्मप्राप्तिफलकज्ञानविषयत्वात्। सिध्दान्तः दर्शनविशयत्वेन वेदान्तबोध्यत्वं यत्र यत्र तत्र परमार्थत्वमिति व्याप्तिः। ईक्षतिकर्म परं ब्रह्म ईक्षतिकर्मत्वेन व्यपदिश्यमानत्वात्। ईक्षतिकर्म हिरण्यगर्भो न तन्निरूपितपरत्वेन व्यपदिश्यमानत्वात्। ईक्षतिकर्म ध्यायतिकर्म असति बाधके ध्यानविषयान्यविषयकत्वाभावात्। प्रतीकोपासनत्वाच्च देशविशेषफलकत्वम्। ब्रह्मलोकप्राप्त्यनन्तरं सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायम्। ईक्षतिकर्मत्वहेतौ ब्रह्मैकान्त्यमस्पष्टमित्यस्पष्टब्रह्मलिङ्गता। उपास्ये समन्वयः। इतीक्षतिकर्माधिकरणम्।

## ५. अधिकरणम् – दहरउत्तरेभ्यः १–३–१४

अथ यदिदमस्मिन्ब्रह्मपुरेदहरंपुण्डरीकंवेश्मदहरोऽस्मिन्नतराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यादिछान्दोग्यवाक्यं विषयः। दहराकाशः किं भूताकाश उत जीवोऽथवा परमात्मेति-संशयः। पूर्ववाक्ये परपुरुषशब्दस्य ब्रह्मणि प्रसिद्धिवदाकाशशब्दस्य भूताकाशे रूढत्वमिति दृष्टान्तसंगत्या पूर्वपक्षः। दहरत्वेनाकाशशब्दप्रतिपाद्यो भूताकाशः आकाशशब्दवत्त्वादथवा जीवो ब्रह्मपुर (देह) स्वाम्यभिन्नत्वादिति पूर्वपक्षः। दहरत्वेनाकाशशब्दप्रतिपाद्यः परमात्मा आकाशोपमितत्वात्, द्यावापृथिव्याधारत्वात्, अपहतपाप्मत्वादिगुणाष्टकवत्त्वादनन्तफलवत्त्वात्। आकाशौपम्येन पारमार्थिकवैपुल्यसम्पादनेऽप्यौपाधिकं दहरत्वमुपपद्यते जीवत्वसाधकहेतुरप्रयोजकः स्वरूपासिद्धः, ब्रह्मपुरे उपलभ्यमानत्वस्यैवोक्तत्वात्। स्वामित्वस्यानुक्तेः। उत्तरहेतूनेव प्रपञ्चयति———

### गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च १–३–१५

इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति। दहरत्वेनाकाशशब्दप्रतिपाद्यं ब्रह्म सुषुप्तिकालावच्छिन्नजीवगत्याधारत्वारत् ब्रह्मलोकशब्दवत्वात्। तथाहि अन्यत्र सता सोम्य तदा सम्पन्नो भवति' इति ब्रह्मविषयं गमनं दृष्टं यद्वर्तते. एतदेव ब्रह्मलोकशब्दस्य कर्मधारयसमासपरिग्रहे लिङ्गम्।

### धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १.३.१६

"अथ य आत्मा स सेतुर्विधृतिरेषांलोकानामसंभेदाय" दहराकाशपदप्रतिपाद्यो ब्रह्म विधारयितृत्वात्। अस्य महिम्नो विधारणलक्षणस्यास्मिन् ब्रह्मण्येतस्य वाक्षरस्यैषसर्वेश्वरः एष सेतुर्विधारण" इत्यादिश्रुत्यन्तरे उपलब्धेः।

## प्रसिद्धेश्च १.३.१७

आकाशशब्दस्य ब्रह्मणि प्रसिद्धत्वादित्यर्थः

## इतरपशमर्शात्सइति चेन्नासम्भवात् १.३.१८

आकाशशब्दप्रतिपाद्यो जीवोऽवस्थावत्त्वेन श्रूयमाणत्वादिति पूर्वपक्षः। न, जीवपरिग्रहे आकाशोपमितत्वादीनामसम्भवात्। (पूर्वपक्षहेतुरुत्तरसूत्रे समाधीयते)

## उत्तराच्चेदाविर्भूतस्वरूपस्तु १.३.१९

दहराकाशपदप्रतिपाद्यः कार्यकारणसंघाताभिमानी जीवः तच्छेषभूत प्रजापतिवाक्यप्रतिपाद्याभिन्नत्वात् । प्रजापतिवाक्यप्रतिपाद्यो जीवो जाग्रदाद्यवस्थावत्त्वेन प्रतिपाद्यमानत्वात् इति पूर्वपक्षः। प्रजापतिवाक्यप्रति पाद्यः शुद्धजीवः कार्यकारणसंघातरहितत्वेनप्रतिपाद्यत्वात्। अवस्थात्रय वत्त्वेन प्रतिपादितत्वं स्वरूपासिद्धं निषेधार्थं तासामनुवादात्। जीवस्वरूपस्य संसारावस्थायामभानं कथमसङ्गस्य तस्याभिभावकद्रब्यान्तर संसर्गाभावात्दृष्ट्यादिरूपतत्स्वरूपस्य भासमानत्त्वाच्चेत्याङ्कते। कथं पुनः स्वंचेत्यादिना। यद्यपि वस्तुतोऽयमसंसर्गः तथाप्यविद्यावशाद्देहेन्द्रियादिभि रविद्याकल्पितैः संसृष्टमिव विविक्तमप्यविविक्तमिव जीवस्य स्वरूपं भासते। विवेकविज्ञाने जाते तु विविक्तमिव (स्वेन रूपेणाभिनिष्पन्नमिव) भवतीत्याह-अत्रोच्यत इत्यादिना। एष संप्रसादाइत्यादिवाक्यस्यायमर्थः। अस्माच्छरीरात्समुत्थाय शरीरेन्द्रियादिभ्यो वीविच्य -विवेकविज्ञानं श्रवण मननिदिध्यासनरूपं परोक्षज्ञानं, स्वरूपेणाभिनिष्पद्य पूर्वोक्त परोक्षज्ञानफलं केवलात्मस्वरूपसाक्षात्कारो वृत्तिरूपोऽभिनिष्पत्तिपदेनो च्यते, तस्य च प्रपञ्चबाधकत्वं प्रपञ्चान्तर्गत स्वस्यापि बाधकत्वमिति तन्नाशे पर ज्योतिरूपसम्पद्यते स्वयंप्रकाशज्योतिरवशिष्यत इत्येकोऽर्थः। यदातु शरीरात् समुत्थानं साक्षत्काररूपं तदा परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति परज्योतिरुपसम्पत्तिर्नान्या किन्तु

स्वरूपाभिनिष्पत्तिरेवेति तद्व्याख्यानरूपमेव (ज्योतिरूपसम्पत्ति व्याख्यानं) नार्थान्तरं विवक्षितम्। मुखं व्यादाय स्वपितीतिवत् समानकाले क्त्वाप्रत्ययः।

परमात्मनि धीनिवेशाय केचित्त्वित्यादिना स्वप्नसुषुप्तिपर्यायजीव एवोपास्यत्वेनोच्यते चतुर्थपर्याये तु परमात्मेति मतं प्रदर्श्य दृष्टे सम्भवत्यदृष्टकल्पना अन्याय्येति जीवानुवादेन ब्रह्मता बोध्यते नोपास्तिरित्याशयेन परिहरति तेषामित्यादिना। एतं त्वेव ते इति प्रतिज्ञायेति। अस्मिन् मते औपाधिको जीवः तादृशे चापहत पाप्मत्वादीनामसम्भव इति। पारमार्थिकजीवब्रह्मभेदमतमाह अपरे तु वादिन इति। जीवानामविद्याकल्पितत्वात्तस्मिन् वास्तव ब्रह्मधर्मा न सम्भवन्ति, समारोप्यस्य रूपेणेत्यादिन्यायादिति नासम्भवादिति सूत्रविरोधो नास्ति। अविद्याकल्पित कर्तृत्वभोक्तृत्वादिमुपाश्रित्य कर्मविधयोऽप्युपपद्यन्त इति तदुपपादनाय जीवस्य पारमार्थिकत्वाभ्युपगमः श्रुतिसूत्राननुगुण इति।

## अन्यार्थश्च परामर्शः १.३.२०

जीवस्य संप्रसादशब्देन कथनं ब्रह्मणः परिश्रान्तजीव शरणत्वप्रतिपादनार्थम्। जविस्यावस्थात्रयविलयेन ब्रह्मभावोपदेशार्थः।

## अल्पश्रुतेरिति चेत्तदुक्तम् १.३.२१

दहराकाशो ब्रह्म न परिच्छिन्नायतनत्वादिति पूर्वपक्ष भागार्थः। अप्रयोजको हेतुः। ब्रह्मण एवमुपास्यत्वात् आकाशवत् ब्रह्मणोऽप्युपाधिकृतं परिच्छिन्नत्वमित्यर्थः। अत्र ब्रह्मलिङ्गानां प्रजापतिविद्यानुसारेण जीवलिङ्गत्वशङ्काकलुषितत्वादस्पष्टब्रह्मलिङ्गत्वम्। तस्य स्पष्टत्वेऽप्यन्तर्वर्त्य न्वयित्वेन भानात् दहराकाशान्वयित्वं न स्पष्टम्। पूर्वमणीयस्त्वं नोपक्रमगतमत्र तूपक्रमगतमित्यधिकाशङ्का। वाक्यशेषगतबहुश्रुतिलिङ्गविरो धादेकमुपक्रमगतमपि नादरणीयमिति परिहारः। उपास्ये समन्वयः।

इति दहराधिकरणम्।

# ६. अधिकरणम्

## अनुकृतेस्तस्य च १.३.२२

'न तत्र सूर्यो भाति - सर्वमिदं विभाति' इति वाक्यं विषयः। तत्रेति सतिसप्तम्यां सूर्यादिभानप्रतिबन्धक भानविषयत्वमर्थः। विषयसप्तम्यां सूर्याद्यभास्यमित्यर्थः पर्यवस्यति। सप्तम्या उभयत्र साधरण्यात् संशयः। तच्छब्दप्रतिपाद्यः किं तेजोविशेष उत परमेश्वर इति। पूर्वमेतंत्वेवत इत्यत्रैतच्छब्दस्य प्रकृतार्थत्वाद् दहरस्य जीवता निरस्ता तद्युक्तम्। न तत्रेत्यादौ तच्छब्दस्याप्रकृतार्थत्वादित्याक्षिप्य शङ्काप्रवृत्त्या आक्षेप-संगतिः। तच्छब्दप्रतिपाद्यः सूर्यादिज्योतिर्जातीयकः तद्भानप्रतिबन्धक-भानकत्वात्, तद्भानानुकार्यभानकत्वादिति पूर्वपक्षः। तच्छब्दप्रतिपाद्यः ईश्वरः, सूर्यादिभानविशिष्टभानकत्वात्। वै.चाधेयतासम्बन्धेन। आधेयता च स्वातिरिक्तत्वसम्बन्धावच्छिन्न स्वनिष्ठवच्छेदकताक प्रतियोगिताकभेदवत्त्वसम्बन्धेन। तस्य भासेतिपदस्य तद्भानाभिन्नभानकत्वमर्थः। सूर्यादिभासकत्वादिति द्वितीयो हेतुः। यद्धर्मावच्छिन्न कार्यानुकार्यकार्यकत्वं यत्र तत्र तद्धर्मवत्त्वमित्यस्याव्याप्तेर्व्यभिचारः, यथा सुतप्तेऽयः पिण्ड इत्यादि भाष्येण प्रदर्श्यते। प्रकृतत्वादिति तृतीयो हेतुः। सूत्रे अनुभानादिति वक्तव्ये अनुकृतेरिति वचनं ब्रह्माध्यस्तं सूर्यादिब्रह्मसत्तयैवास्तीतिवत् ब्रह्मस्फुरणेनैव स्फुरति प्रतिवस्तु अनुभवव्यक्त्यन्तरमकल्पनीयमित्युपपत्तिसूचनाय। तस्येति मन्त्रगतचतुर्थपादग्रहणं तदर्थसर्वविभासकत्वस्य हेत्वन्तरस्य प्रदर्शनाय। तस्यैव स्फुटीकरणाय चकारः।

विमतं तेजः प्रकाशकत्वे सति तेजोऽभिभावकत्वात् सूर्यवदिति पूर्वपक्ष्यनुमानम्। (शा-दर्पणे) अभिभावकत्वमसिद्धं वाक्ये सूर्याद्यभास्यत्वस्यैवोच्यमानत्वादिति। भातीत्यस्य भासयतीत्यर्थः। तत्रेति विषयसप्तमी नतु सतिसप्तमी। उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वात् सूर्याद्यभास्यत्वं पर्यवस्यति। तथाचाभिभावकत्वस्यासिद्धिः।

## अपि च स्मर्यते १.३.२३

न तद्भासयते सूर्यो न शशाङ्क इति स्मृतावपि पूर्वोक्तहेत्वोरीश्वरधर्मतयैवोक्तत्वादत्रापीश्वर एव ग्राह्य इत्यर्थः। अत्रानुभानस्य तेजोलिङ्गत्वं निरस्य ब्रह्मलिङ्गत्वे समर्थनीयमित्यस्पष्टता। ज्ञेये ब्रह्मणि समन्वयः।

इत्यनुकृत्यधिकरणम्।

## ७.अधिकरणम्

## शब्दादेव प्रमितः १.३.२४

अङ्गुष्ठमात्रःपुरुषो मध्य आत्मनि तिष्ठति - तथाङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ----एतद्वैतत्''इति च विषयः। पूर्वपक्षयुक्ति सिद्धान्तयुक्ति बलाबलानवधारणात् संशयः। अङ्गुष्ठपरिच्छिन्नः किं जीव उत ईश्वर इति। प्राक् सति विषये च सप्तम्याः साधारणत्वेऽपि न तद्भासयते इत्यादिस्मृत्या विषयत्वे निर्णयवदङ्गुष्ठमात्रं निश्चकर्षेति स्मृत्या जीव एवेति दृष्टान्तसङ्गत्या पूर्वपक्षः।

अङ्गुष्ठपरिमाणपरिच्छिन्नो जीवः परिमाणवत्त्वादिति पूर्वपक्षः। अङ्गुष्ठपरिमाण ईश्वरः ईशानो भूतभव्यस्येति शब्दवत्त्वात्, एतद्वैतदिति पृष्टप्रतिवचनवाक्यप्रतिपाद्यत्वात्।

परमात्मनः सर्वगतस्याङ्गुष्ठपरिमाणत्वं कथमिति शङ्कायाम् -

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् १-२-२५

ननु हृदयापेक्षमप्यङ्गुष्ठपरिमाणमनुपपन्नं प्राणिभेदेन हृदयपरिमाणभेदादित्याशङ्कायां मनुष्याधिकारत्वादिति। मनुष्याधिकारं शास्त्रं मनुष्यान् प्रति जीवस्य ब्रह्मभावमुपदिशति। पूर्वं केवलतत्पदार्थपर एवायं मन्त्र इति स्वीकृत्य सिद्धान्तः प्रवृत्तः। अधुना तु तत्त्वमसिवाक्यसमानार्थक

इति पक्षमादाय. यदप्युक्तमित्यादिशङ्कासमाधानादिकम्।अस्मिन् पक्षे अधिकरणम् अङ्गुष्ठमात्र इत्यादि मन्त्रो जीवस्येशानत्वेनोपासनापरः तत्त्वमस्यादिवाक्यसमानार्थको वेति संशयः। तत्राभेदपरत्वे जीवस्य विशिष्याङ्गुष्ठमात्रत्वेनोपादानं व्यर्थं स्यादिति पूर्वपक्षः। अङ्गुष्ठमात्रत्वेनानुवादः परिच्छिन्नपरिमाणताया अपवादार्थं इति जीवब्रह्माभेदपरमेवेति सिद्धान्तः।

(ब्र.वि.) हृद्यपेक्षयेति सूत्रमपि जीव एवौपाधिकाङ्गुष्ठमात्रतोपपादन परम्। अङ्गुष्ठमात्रत्वेन जीवमनूद्य ईशान इति ब्रह्माभेदो बोध्यते। प्रतिपाद्याभेदविरोधादङ्गुष्ठमात्रत्वं बाध्यम्। तात्पर्यार्थस्य बलवत्त्वात्। मनुष्याणां च हृदयं तदङ्गुष्ठपरिमितमिति तदवच्छिन्नजीवस्य तथात्वेनानुवादो युज्यत एवेति पूर्वपक्षिसत्प्रतिपक्षहेतोर्ब्रह्मण्युपपत्तेर प्रयोजकता। अत्र सिद्धान्तेप्यप्रत्याख्येयेनं जीवलिङ्गेनाभिभूतं ब्रह्मलिङ्गं ब्रह्मलिङ्गनिर्वाहकमहावाक्यतारूपोपायकथानात् प्राक् नोन्मिषतीत्यस्पष्ट ब्रह्मलिङ्गता। ज्ञेये ब्रह्मणि समन्वयः।

## ८. आधिकरणम्

### तदुपर्यपि बादरायणः सम्भवात् १–३–२६

तदिति लुप्तषष्ठीकं भिन्नं पदं नतु तदुपरीति समस्तं पूरणगुणेत्यादि सूत्रेणाव्ययेन सह षष्ठीसमासप्रतिषेधात्। प्रसङ्गसंगतिमाह- अङ्गुष्ठमात्रश्रुतिरित्यादिना। तस्माद्यो यो देवानां प्रत्यबुद्ध्यत स एवेत्यादिवाक्यं विषयः। वेदान्तशास्त्रं देवाधिकारिकं नवेति संशयः। पूर्वपक्षे क्रममुक्तिफलोपास्तिषु मोक्षकामस्याप्रवृत्तिः सिद्धान्ते प्रवृत्तिरिति फलभेदः। वेदान्तशास्त्रं देवाधिकारिकं न शास्त्रत्वात् कर्मकाण्डवदिति पूर्वपक्षः। देवा ब्रह्मविद्याधिकारिणोऽधिकारिकारणवत्त्वात्। अर्थित्वमप्रतिषिद्धत्वं सामर्थ्यं च। तेषामपि विग्रहादिमत्त्वेन सामर्थ्यंअस्ति विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता। फलप्रदानमित्येते पंचकं विग्रहादिकम्।

ब्रह्मविद्याधिकारो नाम ब्रह्मविद्यासम्पादक शास्त्रश्रवणाधिकारः। पूर्वपक्षहेतुः देवानुष्ठानाशक्यकर्मप्रतिपादकत्वेन सोपाधिकः।

देवानामशरीरत्वाद्वेदाध्ययनवर्जनात्। दृष्टशास्त्रीयसामर्थ्यहानेर्विद्या न विद्यते। पूर्वपक्षहेतवः

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् १–३–२७

देवो यदि ब्रह्मविद्याधिकारी स्यात्तर्हि विग्रहवान् स्यात् ओमित्युक्ते, यदि विग्रहवान् स्यात्तर्हि द्रव्यत्यागोद्देश्यो न स्यात् कर्मदेशसन्निहितत्वा भावादिति प्रतिकूलतर्कः। विग्रहवत्त्वे सति यागाङ्गत्वं यत्र यत्र तत्र यागानुष्ठानदेशसन्निहितत्वमिति (यथा ऋत्विगादौ) व्याप्तेरिति पूर्वपक्षभागार्थः। कर्मदेशसन्निहितत्वमेवास्तीति विग्रहवत्त्वाभावो न सिद्ध्यति। देवानामाजानसिद्धानामितरालक्ष्यानेकशरीर परिग्रहेण युगपदने कदेशसन्निधानसम्भवादिति। श्रुतिस्मृत्योः महिम विशेषवतां कायव्यूहदर्शना दित्यनेकप्रतिपत्तेर्दर्शनादित्यस्यार्थः। द्वितीयव्याख्यायामनेकेषु कर्मस्वेकस्य प्रतिपत्तेरङ्गभावस्य लोके दर्शनादित्यर्थः। द्वितीयव्याख्यायां योविग्रहवत्त्वे सति यत्क्रियोद्देश्यः स तत्क्रियादेशसन्निहित इति व्याप्तेरनेकनमस्कार्ये व्यभिचारः।

नानादेशे नैकंदेवैकदेवो यागानां स्यात् सम्प्रदानं विरोधात्। देहध्वंसे ध्वंसमापद्यमानः शब्दैर्नित्यैर्नैषशक्योऽभिधातुम्। पूर्वपक्षसङ्ग्रहः।

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यां १–१–२८

देवो यदि विग्रहवान् स्यात्तर्हि अनित्यः स्यात् ओमित्युक्ते तत्प्रतिपादकवेदस्यानित्यत्वं स्यात्। निरपेक्षप्रमाणवेदप्रतिपाद्यो न स्यादिति प्रतिकूलतर्कः पूर्वपक्षभागेन प्रदर्श्यते। अर्थनिर्धारणानुकूलानुसन्धानविषय शब्दत्वं यत्र तत्र नित्यार्थबोधकत्वम्। इन्द्रादिशब्दाः निरपेक्षप्रमाणान्येव जातिप्रवृत्तिनिमित्तकशब्दत्वात्। इन्द्रादिशब्दाः जातिप्रवृत्तिनिमित्तकशब्दाः

इन्द्रत्वादिजात्यवच्छिन्नव्यक्त्युत्पादकानुसन्धानविषयत्वात् घटशब्दवत्। अथवा इन्द्रादिस्थाननिमित्तकशब्दत्वं साध्यम्। या या जात्यभिव्यङ्ग्यभूता व्यक्तयः ताःशब्दानुसन्धानपूर्वीका इति प्रत्यक्षमूलकानुमानात्।

शब्दप्रभवत्वमित्युक्ते वर्णात्मकात् स्फोटात्मकाच्च शब्दादुत्पत्तिर्न सम्भवति वर्णानामनित्यत्वात् स्फोटस्याप्रामाणिकत्वादित्याक्षेपः। तत्र स्फोटस्तावदुपपाद्यते। वर्णानां प्रत्युच्चारणं भेदेनोत्पन्नप्रध्वंसित्वादेकैकवर्ण स्यार्थप्रत्यायकत्वाभावात्, तेषां च क्रमभावित्वेन समुदायविषयकैकप्रत्य यासम्भवात् संस्काराणामप्रत्यक्षत्वेन शब्दज्ञानस्यैवार्थप्रत्यायकत्वेन पूर्वपूर्ववर्णानुभवजनितसंस्कारप्रत्यक्षासम्भवेन च सम्बन्धग्रहणापेक्षो हि शब्द इति भाष्यम्। अत्रेदमनुमानं विवक्षितम्। यद्धि मानविभाजकोपाध्य वच्छेदेन सम्बन्धग्रहमपेक्ष्य बोधकं, तत्र मानविभाजकोपाध्यवच्छेदेन भावरूपयावत्सहकारिविशिष्टमेव ज्ञातं बोधकं धूमादिवत्। ततश्च संस्कारस्य सहकारित्वे सोऽपि ज्ञातव्यः स्यात्। शब्दस्य शाब्दत्वरूपमानविभाजकोपा ध्यवच्छेदेन सम्बन्धग्रहमपेक्ष्य बोधकत्वात्। (ब्र.वि.) तादृशसंस्कारसंहित चरमवर्णानुभवस्यार्थप्रत्यायकत्वमित्यस्यापि वक्तुमशक्यत्वात् स्मृतिलिङ्गक संस्कारानुमितिसहितान्त्यवर्णप्रतीतेरर्थप्रत्यायकत्वोक्तेरपि स्मरणस्य क्रमव र्तित्वेन क्रमेणैव तादृशानुमितीनामपि उत्पत्त्या असम्भवाद्वर्णानामर्था नुभावकताया वक्तुमशक्यत्वेन स्फोटात्मक एव शब्दोऽर्थप्रत्यायक इति वाच्यम्। सचान्त्यवर्णप्रत्यक्षानन्तरमेव चित्ते स्फुटतीति तादृशात् स्फोटरूपान्नित्याच्छब्दाज्जगदुत्पद्यत इति।

वर्णातिरिक्तस्फोटोऽप्रामाणिक इति वर्णा एव तु शब्द इत्यादिना - सोऽयं गकार इति रीत्या वर्णानां प्रत्यभिज्ञायमानत्वात् क्षणिकत्वासम्भवात्, अभिव्यञ्जकवैचित्यादेव वर्णविषयकप्रत्ययवैचित्र्यो पपत्तेः, वर्णक्षणिकत्ववादिनापि प्रत्यभिज्ञोपपादनायाकृतीः प्रकल्प्यतासु च व्यञ्जकवैचित्र्यादेव भेदस्योपपादनीयत्वेन वर्ण-व्यक्तिष्वेवौपाधिको भेदप्रत्ययः, स्वरूपापेक्षं च प्रत्यभिज्ञानमिति कल्पनायां लाघवात्,

प्रत्येकवर्णानुभवाहितसंस्कारैर्जायमानायां युगपन्निखिलवर्णविषयकस्मृतौ वर्णानां क्रमवत्पूर्वानुभवविषयतया क्रमवैशिष्ट्येन विषयत्वसम्भवाद्वर्णशब्द वादे उक्तदोषासम्भवाद्वर्णा नित्या एव शब्दाः। तेभ्यश्च नित्येभ्यो देवादिव्यक्तिप्रभवः सम्भवतीति सिद्धान्तः।

वर्णानामनित्यत्वेऽपि गत्वाद्यवच्छेदेनैव शक्तिग्रहादनादिव्यवहारः सम्भवतीति सर्वथा देवादीनां शब्दप्रभवत्वमुपपद्यते।

विध्येकवाक्यतायां तु थोऽर्थः शब्दैरतत्परैः।
अविरुद्धः प्रतीयेत स तैरेव प्रमीयते।। शा.द।

## अत एव च नित्यत्वम् १–३–२९

वेदोनित्यो जगदुत्पत्तिहेतुत्वादीश्वरवत्।

## समाननामरुपत्वाच्चावृत्तावप्यविरोधो दर्शनास्मृतेश्च १–३–३०

महाप्रलये निराश्रयाणामिन्द्रत्वादिजातीनामवस्थानासम्भवेन तत्पूर्वापरकल्पसम्भवेन्द्राद्यनुगतेन्द्रत्वादिजात्यसम्भवादिन्द्रादिशब्दानां व्यक्तिवाचकत्व इव जातिवाचकत्वेऽपि ऐकार्थ्यासम्भवेनानेकत्र साङ्केतिकत्वस्य वक्तव्यत्वेन शब्दविरोधस्तदवस्थ इत्याशङ्का। महाप्रलयव्यवधानेऽपि पूर्वोत्तरकल्पसम्भवेन्द्रादीनां श्रुतिस्मृतिभ्यां समाननामरूपत्वावश्यम्भावेन तदनुगतानां महाप्रलयावस्थायिनीनामिन्द्रत्वादि जातीनामवश्याङ्गीकर्तव्यत्वात् सर्वपदार्थानां च शक्त्यात्मना सूक्ष्मरूपेण महाप्रलयेऽवस्थानसत्वेन निराश्रयत्वाप्रसक्तेर्जातिवाचकत्वं संभवतीति परिहारः। अस्मिन्नर्थे अनुमानानि एतत्कल्पीया सृष्टिः पूर्वकल्पीयसृष्टिसदृशी पूर्वकल्पीय सुखदुःखजातीयसुखदुःखजनकत्वात्।

प्रलयः सूक्ष्मरूपशक्तिमान् प्रलयत्वात् दैनन्दिनप्रलयवत्। प्रलयो यदि शक्त्यभाववान् स्यात् तर्ह्याकस्मिकोत्तरसृष्टिकः स्यादित्यनुकूलतर्कः।

एतत्कल्पीयवेदः सापेक्षप्रमाणभूतो न भवति पूर्वकल्पीयवेदार्थसमान नामरूपार्थप्रतिपादकत्वात्।

## मध्वादिष्वसंभवादनधिकारं जैमिनिः १–३–३१

वेदान्तश्रवणादिकं देवाधिकारिकं न भवति वेदान्तोक्तविद्यात्वात् मधुविद्यावत्।

## ज्योतिषि भावाच्च १–३–३२

सूर्यादयो विद्याधिकारिणो न भवन्त्यचेतनत्वात्।

## भावं तु बादरायणोऽस्ति हि १–३–३३

देवादयो ब्रह्मविद्यायामधिकारिणः सामर्थ्यात्। पूर्वपक्ष्यनुमाने देवताध्येयकत्वं देवताप्राप्तिफलकत्वंचोपाधिः।

दर्शादिकं ब्राह्मणं नाधिकरोति कर्मत्वात् राजसूयवदित्याभाससाम्यम्। अत्र राजाधिकारिकत्वमुपाधिः। अचेतनत्वरूपहेतुः स्वरूपासिद्धः।

मन्त्रार्थवादा नार्थप्रत्यायका अन्यार्थत्वादिति तु गमने व्यभिचारान्न साधु। यत्र यत्रान्यशेषप्रतीतिजनकत्वं तत्र स्वार्थप्रत्ययजनकत्वाभाव इति व्याप्तिः विषम उपन्यासः तत्र हीत्यादिग्रन्थेन विवक्षिता। सिद्धान्ती - अन्यप्रतीत्युपयोग्यर्थप्रतीतिजनकत्वं यत्र तत्र स्वार्थपरत्वं नास्तीत्येव व्याप्तिः। यथा न सुरां पिबेदिति वाक्यघटकसुरां पिबेदित्येकदेशे। प्रकृते तु स्वप्रयोजनाकांक्षानिवर्तकान्यार्थप्रतीत्युपयोगिस्वार्थप्रतीतिजनकत्वं यत्र यत्र तत्रासति बाधके स्वार्थपरत्वमिति व्याप्त्या देवादीनां विग्रहवत्त्वं सिद्ध्यतीति। अपि च विधिभिरेवेति भाष्यम् ऐन्द्रं चरुं निर्वपेदित्यादिविधयो देवताविग्रहबोधका देवतोद्देश्यकत्यागबोधकत्वात्।

इति देवताधिकरणम्।

## ९. अधिकरणम्

### शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि १-३-३४

अह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति वाक्यंविषयः। शूद्रो ब्रह्मविद्याधिकारी नवेति संशयः। पूर्वमत्रैवर्णिकानां देवानां तद्यो यो देवानामिति लिङ्गादधिकार उक्तः। तद्वद्विद्यधिकारिणः शूद्रशब्देन परामर्शलिङ्गाच्छूद्रस्याप्यधिकार इति दृष्टान्तसंगत्या पूर्वपक्षः। शूद्रो ब्रह्मविद्यायामधिकारी सामग्रीमत्त्वात्। वेदान्तविद्या शूद्रमधिकरोति विद्यात्वात् संसर्गविद्यावदिति पूर्वपक्ष;। असम्प्रतिपन्नरूढितः सम्प्रति पन्नयोगो बलवानित्याशयेन समाधानम्। पूर्वपक्षहेतुः स्वरुपासिद्धो वेदाध्ययनाभावात्।

### क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् १-३-३५

जानश्रुतिः शूद्रो न क्षत्रियत्वात्। जानश्रुतिः क्षत्रियो व्यवहारे क्षत्रियचैत्ररथेन समभिव्याहारात्। चैत्ररथः क्षत्रियः चित्ररथरूपक्षत्रियकुलो त्पन्नत्वात्, अभिप्रतारी चैत्ररथः कापेयसम्बन्धवत्त्वात्। (सम्बन्धः सहभोजनरूपः) जानश्रुतिः क्षत्रियो विद्यायामभिप्रतार्याख्यक्षत्रियसमभि व्याहारात्।

राजयाजककापेययाज्यस्याभिप्रतारिणः। प्रायेऽपाठि यतो जानश्रुती राजा ततो भवेत्। (शा.द.)

### संस्कारपरामर्शात्तदभावाभिलापाच्च १-३-३६

शूद्रो वेदार्थाधिकारी न भवति विद्यार्थोपगमनरूपसंस्काररहितत्वात्। (न शूद्रे पातकं क्रिञ्चिदित्यादिना शूद्रस्य संस्काराभावोक्तेः।)

## तदभावनिर्धारणे च प्रवृत्तेः १–३–३७

ब्रह्मविद्या शूद्राधिकारिकं न भवति शूद्रत्वाभाव निर्धारणप्रयोज्योपदेश कत्वात् जावालविद्यावत्।

## श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च १–३–३८-

शूद्रो ब्रह्मविद्याधिकारी न स्मृतिनिषिद्धवेदश्रवणवेदाध्ययनतदर्थज्ञान तदर्थानुष्ठानकत्वात्।

इति अपशूद्राधिकरणम्।

# १०. अधिकरणम्

## कम्पनात् १–३–३९

यदिदं किं च जगत्सर्वं प्राणएजति निःसृतम्।महद्भयं वज्रमुद्यतमित्यादि काठकवाक्यं विषयः। अत्र प्राण शब्दप्रतिपाद्यः किं प्राणः उत परमात्मेति संशयः। शब्दादेव प्रमित इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मैक्यबोधायेत्युक्तम्। इह तु प्राणस्य स्वरूपेण कल्पितस्य ब्रह्मैक्यं न सम्भवतीति तस्यानुवाद इति न युज्यते। अतस्तदुपास्तिर्विधिरिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। सर्वजगत् कम्पननिमित्तत्वं वज्रोद्यमनकारणत्वं च पर्जन्यभावापन्नस्य संभवतीति पूर्वपक्षः। प्राणो ब्रह्म कम्पनात् (जगच्चालकत्वात्, अग्निसूर्यादिभय हेतुत्वाच्च)

अयं मन्त्रो ब्रह्मपरो ब्रह्मपरपूर्व (तदेव शुक्रं तद्ब्रह्म)उत्तरमन्त्र (भयादस्याग्निस्तपति) संदष्टत्वात्। अयं मन्त्रो वायुपरो न भवत्यग्निजीवब्रह्मातिरिक्ताप्रतिपादककठवल्लीघटकत्वात् अयं द्वितीयहेतुः प्रकरणादप्यत्रेति भाष्येणोक्तः। कम्पनस्य प्राणासाधारण्यशङ्काभिभूतत्वा दस्पष्टब्रह्मलिङ्गता। ज्ञेये ब्रह्मणि समन्वितम्। श्रुत्यर्थः - इदं सर्वं जगत् प्राणान्निःसृतं प्राणे चिदात्मनि प्रेरके सति एजति चेष्टते।

तच्च प्राणाख्यं कारणं महद्भयं बिभेत्यस्मादिति भयम्। तस्मिन् भयहेतौ दृष्टान्तमाह वज्रमुद्यतमिति। उद्यतं वज्रमिव भय हेतुरित्यर्थः। एतत् प्राणाख्यं ब्रह्म निर्विशेषं ये विदुस्ते मुक्ता भवन्ति। व्यष्टिः विशेषो विविधा अष्टिः व्याप्तिः अस्येति व्यष्टिः। साकल्येनाष्टिः अस्येति समष्टिः। प्राणवायुरूपेण तत्तच्छरीरसंयोगरूपा व्याप्तिर्विविधोच्यते। देवतात्मना स्थितस्य सर्वेषु प्राणेषु अभिमानरूपा व्याप्तिः साकल्येन व्याप्तिः।

सूत्रे कम्पनं चालनं भावव्युत्पत्त्या, करणव्युत्पत्त्या कम्पनहेतुभूंत भयं विवक्षितम्।

प्राणमेवाभिसंविशन्तीत्यत्र निरपेक्षकारणत्वपरैर्वकारणश्रवणाद्ब्रह्मपरत्वं, इह तदभावादत एव प्राण इत्यगतार्थत्व मुपक्रमोपसंहारैकरूप्यस्यास्पष्टत्वाच्च प्रातर्दनविचारेणापीति।

इति कम्पनाधिकरणम्।

## ११. अधिकरणम्

### ज्योतिर्दर्शनात् १–३–४०

एष संप्रसादोऽस्माच्छरीरात् समुत्थायेत्यादिछान्दोग्यवाक्यं विषयः। अत्र ज्योतिःशब्दप्रतिपाद्यं किमादित्यादिज्योतिः उत परब्रह्मेति संशयः। पूर्वं सर्वशब्दश्रुतिसंकोचानुपपत्त्या प्राणशब्दप्रतिपाद्यं ब्रह्मेति निर्धारितम्। इह तु निर्धारकाभावात् प्रत्युदाहरणसंगत्या पूर्वपक्षः। ज्योतिश्शब्दप्रतिपाद्यः आदित्यः शरीरोत्क्रमणपूर्वकरश्मिद्वारकप्राप्तिविषयत्वात्। नाडीखण्डोक्त ज्योतिश्शब्दप्रतिपाद्यवदिति पूर्वपक्षः। ज्योतिश्शब्दप्रतिपाद्यो ब्रह्म अपहतपाप्मत्वादिगुणकब्रह्माभिन्नत्वात् (१)। ज्योतिश्शब्दो ब्रह्मपरो ब्रह्मपरोपक्रमोपसंहारमध्यपतितवाक्यघटकत्वात् (२)। ज्योतिश्शब्दप्रतिपाद्यं ब्रह्म अशरीरताप्रयोजकोपसम्पत्तिविषयत्वात् (३)। परत्वेनोत्तम-

पुरुषत्वेन श्रूयमाणत्वात् (४)। पूर्वपक्षहेतुः स्वरूपासिद्धः। अत्र प्रजापतिविद्यायाः सगुणोपासनविषयत्वशङ्कया जीवाभिन्ननिर्विशेषब्रह्म-प्रकरणानुवृत्तिः सूत्रे दर्शनादिति हेतुकृता न स्पष्टेत्यस्पष्टब्रह्मलिङ्गता। ज्ञेये ब्रह्मणि समन्वयः।

सूत्रे दर्शनादित्यस्य निर्विशेषप्रकरणानुवृत्तेर्दर्शनादित्यर्थः।अत्रानर्थक्य प्रतिहतानां विपरीतं बलाबलमिति श्रुत्यपेक्षया प्रकरणप्राबल्यं तेन च निर्गुणविद्याप्रकरणत्वाज्ज्योतिश्शब्दंपरं ब्रह्मेति।

शरीरात् समुत्थायेत्यत्र परोक्षशरीरादिविवेकज्ञानमुक्तम्। स्वरूपाभिनिष्पत्तिः साक्षात्कारः। परं ज्योतिरुपसंपत्तिरित्यविद्यानिवृत्तौ ब्रह्मभावः। साक्षात्कारपूर्वकत्वेऽप्यविद्यानिवृत्तेर्मुखं व्यादायस्वपितीवद्द्रष्टव्य इति।

इति ज्योतिरधिकरणम्।

## १२. आधिकरणम्

### आकाशोऽर्थान्तरत्वादिव्यपदेशात् १–३–४१

'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति छान्दोग्यवाक्यं विषयः। भूताकाशो ब्रह्म वेति संशयः। पूर्वमुपक्रमवशादर्थान्तरे प्रसिद्धो ज्योतिश्शब्दः स्वार्थात् प्रच्यावितस्तथाकाशादिशब्दोपक्रमवशाद्ब्रह्मादिस्वार्थात् प्रच्याव्यतामिति दृष्टान्तसंगत्या पूर्वपक्षः। पूर्वपक्षे भूताकाशात्मकब्रह्मोपास्त्या क्रममुक्तिः फलम्। सिद्धान्ते तु साक्षान्मुक्तिरितिफलभेदः। आकाशशब्दप्रतिपाद्यं भूताकाशमाकाशशब्दवत्त्वादिति पूर्वपक्षः। आकाशशब्दप्रतिपाद्यं ब्रह्म नामरूपभिन्नत्वादिति सिद्धान्तः। विषयवाक्ये नामरूपयोर्निर्वोढेत्यत्र सर्वाणि ह्वा इमानीत्यत्रेव सर्वशब्दाभावात् ते यदन्तरेत्यादिवाक्यान्तरगतत्वप्रतीतेश्चास्पष्टब्रह्मलिङ्गता। ज्ञेये ब्रह्मणि समन्वयः।

निर्वोढृत्वमधिष्टातृत्वमन्तरालत्वमधिष्ठानत्वेनोपादानत्वमर्थः। यदन्तरा यद्भिन्ने इत्यर्थकरणे प्रपञ्चवैलक्षण्यं ब्रह्मलिङ्गम्।

इति आकाशार्थान्तरत्वाधिकरणम्।

## १३. अधिकरणम्

### सुषुप्त्युत्क्रान्त्योर्भेदेन १–३–४२

कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यादिबृहदारण्यकवाक्यं विषयः। इदं वाक्यं किं संसारिस्वरूपप्रतिपादनपर मुतासंसारिस्वरूपप्रतिपादनपरमिति संशयः। विज्ञानमय इति श्रवणात् उपसंहारे ईशानादिशब्दाच्च संशयः। पूर्वं भेदव्यपदेशाद्ब्रह्मेति निर्धारितं तन्न युक्तं प्राज्ञेनात्मनेत्यत्राभेदेऽपि भेदोपचारदर्शनादित्याक्षेपसंगत्या पूर्वपक्षः। कतम आत्मेत्यादिवाक्यं संसारिपरं संसारिपरोपक्रमोपसंहार-वत्त्वात्। संसारिपराभ्यस्तवाक्यजालघटितत्वात्। कतम आत्मेत्यादिवाक्य प्रतिपाद्यः ईश्वरो न जायमानत्वेन व्यपदेशात् सुषुप्त्युत्क्रन्त्योरीश्वराद्भेदक संपरिष्वक्तत्वान्वारूढत्वादिमत्त्वेन व्यपदिश्यमानत्वात्। ईश्वरपदं जीवभिन्न त्वेन परमेश्वरबोधकं सुषुप्त्युत्क्रान्तिवाक्यघटितत्वात्। प्रसिद्धाप्रसिद्धबोधक वाक्यद्वयघटितवेदवाक्यत्वं यत्र तत्र ज्ञातानुवादपूर्वकमज्ञातप्रतिपादकत्वम्। मास्त्वित्युक्ते अज्ञाताबोधकत्वे वेदत्वमेव न स्यात्। तथा चेश्वरो जीवव्यतिरिक्तः सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदिश्यमानत्वात्। परमार्थजीवः ईश्वराभिन्नः स सर्वस्य वशीत्यादिना ईश्वराभिन्नत्वेन व्यपदिश्यमानत्वात् अयमेवहेतुः

### पत्यादिशब्देभ्यः १–३–४३

इति सूत्रेण सूच्यते। तत्र पूर्वसूत्रेण जीवाद्भिन्नमीश्वरं व्यवस्थाप्य शोधितजीवस्य तदभिन्नत्वं व्यवस्थाप्यत इति जीवब्रह्मैक्यपरमिदंवाक्यम्। पूर्वपक्ष्युक्तवाक्यस्य संसार्यनुवादकत्वेन संसारिपरत्वाभावेन हेतुः स्वरूपासिद्धः। कतम आत्मेत्यादिवाक्यप्रतिपाद्यः ईश्वरः कर्मप्रयुक्तभूय-

स्त्वाल्पत्वरहितत्वादिति हेत्वन्तरमादिशब्दार्थः। अत्राप्यसिद्धब्रह्मलिङ्गनां प्रसिद्धजीवलिङ्गेभ्यो वस्तुगत्या बलवत्त्वेऽप्यतिबहुल जीवलिङ्गाभिभूतत्वा दस्पष्टता।

ज्ञेये ब्रह्मणि समन्वयः।

| | |
|---|---|
| 1. द्युभ्वाद्यधिकरणम् | ज्ञेयब्रह्मपरम् |
| 2. भूमाधिकरणम् | ज्ञेयब्रह्मपरम् |
| 3. अक्षराधिकरणम् | ज्ञेयब्रह्मपरम् |
| 6. अनुकृत्यधिकरणम् | ज्ञेयब्रह्मपरम् |
| 7. प्रमिताधिकरणम् | ज्ञेयब्रह्मपरम् |
| 10. कम्पनाधिकरणम् | ज्ञेयब्रह्मपरम् |
| 11. ज्योतिरधिकरणम् | ज्ञेयब्रह्मपरम् |
| 12. अर्थान्तरत्वाधिकरणम् | ज्ञेयब्रह्मपरम् |
| 13. सुषुप्त्युत्क्रान्त्यधिकरणम् | ज्ञेयब्रह्मपरम् नवाधिकरणानि |
| 4. ईक्षतिकर्माधिकरणम् | उपास्यब्रह्मपरम् |
| 5. दहराधिकरणम् | उपास्यब्रह्मपरम् द्वे अधिकरणानि |
| 8. देवताधिकरणम् | प्रासङ्गिकं देवानामधिकार प्रदर्शकम्। |
| 9. अपशूद्राधिकरणम् | शूद्राणामधिकाराभावप्रतिपादकम्। |

अस्मिन् पादे उपास्य पराधिकरणसत्त्वेऽपि आद्यन्तयोर्निर्गुणप्रतिपाद कसत्त्वेन तेषामेव बाहुल्येन च्ायं पादो निर्विशेषप्रधान इत्युच्यते।

इति सुषुप्त्युत्क्रान्त्यधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
प्रथमाध्यायस्य तृतीयःपादः

***

# अथ पथमाध्यायस्य चतुर्थः पादः ।

## १. अधिकरणम्

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च १–४–१

पूर्वस्मिन् ग्रन्थे ब्रह्मैव जगत्कारणं न प्रधानादीति वेदान्तेषु प्रतिपाद्यत इति यदुक्तं तन्न युक्तम्। प्रधानस्यापि जगत्कारणत्वेन वेदान्तप्रतिपाद्यत्वादित्याक्षेपसंगत्याऽस्याधिकरणस्यप्रवृत्तिः। एवं पूर्वाधिक रणे प्रसिद्धस्य जीवस्यानुवादोऽप्रसिद्धस्यब्रह्मण एव प्रतिपाद्यत्वमित्युक्तमेव मत्राप्यप्रसिद्धस्य प्रधानस्य प्रतिपादनपरमेव काठकवाक्यमिति दृष्टान्तसंगतिः।

कारणश्रुतिविगानपरिहारेण ब्रह्मणि समन्वयप्रदर्शनादध्याय संगतिः। कारणश्रुतिविगानपरिहारः पादार्थः। प्रथमतः त्रिभिरधिकरणैः क्वचिदपि वेदे प्रधानं न प्रतिपाद्यत इत्युक्तमाक्षिप्य समाधीयते। तेन च ब्रह्मलक्षणस्यातिव्याप्तिर्निरस्यते। चतुर्थाधिकरणे गतिसामान्यमाक्षिप्य परिह्रियते। तदनन्तराधिकरणद्वयेन जीवे ब्रह्मलक्षणाशङ्कापरिहारः। प्रकृत्यधिकरणेन जन्मादिसूत्रोक्तं ब्रह्मणः कारणत्वं कर्तृत्वरूपमेवोपादानन्तु प्रधानमेव भविष्यतीति प्रधानस्याशब्दत्वमसिद्धमित्याशङ्का परिह्रियत इति पादस्सर्वोऽपि पूर्वोक्ताक्षेपसमाधानार्थः। एतेनेत्यधिकरणन्तूदाहृतातिरिक्त वाक्येषूक्तन्यायसञ्चारार्थम्। (ब्र.वि.)

महतः परमव्यक्तमव्यक्तात् पुरुषः पर इति काठकवाक्यं विषयः। अव्यक्तपदं प्रधानपरं शरीरपरं वेतिस्मार्तक्रमश्रौतपारिशेष्याभ्यां संशयः। तत्राव्यक्तपदंप्रतिपाद्यं महन्निरूपितपरत्वे सति पुरुषनिरूपितापरत्वात्, महत्पुरुषमध्यगतत्वेन ज्ञायमानत्वादिति पूर्वपक्षः। अव्यक्तशब्दश्शरीरपरः शरीरेतराबोधकत्वे सति किंचिदर्थबोधकत्वात्। अव्यक्तशब्दः इन्द्रियादिबो धको न भवति इन्द्रियादिबोधकपदसमभिव्याहृतत्वात्। यदि शरीरबोधको

न स्यात् प्रकृतार्थबोधको न स्यादित्यनुकूलतर्कः सिद्धान्त्यनुमाने। अव्यक्तशब्दः प्रधानबोधको न तत्र रूढ्यभावात्। पूर्वपक्षीयप्रथमहेतुः स्वरूपासिद्धः। यो यत्स्थानगतत्वेन ज्ञायमानः स तद्रूप इति सामान्यव्याप्तौ द्वितीयहेतोः व्यभिचारं दर्शयति - न ह्यश्वस्थाने इति।

तथाचाव्यक्तशब्देन शरीरात्मकं यद्रूपकविन्यस्तं, रथिरथादि, आत्मानं रथिनं विद्धीत्यादिकल्पनायां विन्यस्तं, तस्यगृहीतेर्ग्रहणादित्यर्थः। दर्शयति चेति भागं व्याचष्टे - उत्तरग्रन्थपर्यालोचनायामपि शरीरमेव ग्रहीतव्यम्। तथाहि शरीरेन्द्रियमनोबुद्धिविषयभोगसंयुक्तस्य संसारिणः शरीरादीनां रथादिरूपकत्वकल्पनया संसारमोक्षगतिनिरूपणेन यस्य परमपदशब्दितस्य परब्रह्मणो मोक्षे प्राप्यत्वमुक्तं यस्य च निरतिशयपरत्वं वर्णितं तथाभूत ब्रह्मात्मावगतिरेव संसारिणस्तद्भावप्राप्तौ साक्षादुपाय इत्यग्रे दर्शयति यथा सा काष्ठा सा परागतिरित्येतदनन्तरं 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्रयया बुद्ध्या' इति मन्त्रेण पुरुषस्य परब्रह्मणः सर्वेषु भूतेषु गूढतयाऽवस्थानमुक्तं यत्

संसारिणस्तदेव परं ब्रह्म तात्त्विकं स्वरूपं न भोक्तृत्वादिविशिष्टं संसारदशायां प्रकाशमानरूपमिति विवक्षयैव। तथासत्येव कथं भोक्तृत्वादिविशिष्टस्यातथाभूतब्रह्मात्मभाव इति विचिकित्सया तदधिगमस्य दौर्लभ्योपपत्तेः। एवं दुरधिगमत्वोक्त्यनन्तरं तदधिगमोपायं दर्शयति 'यच्छेद्वाङ्मनसीप्राज्ञ' इत्यादि। अत्र वागुपलक्षितसकलबाह्येन्द्रियव्यवहारस्य विषयविकल्पाभिमुखस्य मनसो विषयप्रवणाया बुद्धेः, इन्द्रियमनोबुद्धियोगात् भोक्तृत्वमापन्नस्य जीवस्य च क्रमात् पूर्वपूर्वप्रविलापनेन जीवस्य तात्त्विके रूपे प्रकरणिनि परब्रह्मणि प्रतिष्ठापनमुच्यते। एवमभ्यस्यतः क्रमेण ब्रह्मभावावगतिः स्थिरीभवतीति। एवञ्च देहेन्द्रियमनोबुद्धीनां रथत्वादिकल्पनं पुरुषावरत्ववर्णनं च न केवलं परमपदप्राप्तौ, तस्यपरत्वप्रमितौ चोपायतया, किन्त्वात्मनो देहेन्द्रियमनोबुद्धि व्यतिरेक दार्ढ्यायापि। अन्यथा देहेन्द्रियादिधर्मैर्विरुद्धधर्मवत्तया भासमाने संसारिणि ब्रह्मभावावगतिदार्ढ्यासम्भवात्। अतः

पुरुषपरत्ववाक्ये मनोबुद्धीन्द्रियाणामिव देहस्यापि व्यतिरेकप्रतिपत्त्यर्थं ग्रहणाकाङ्क्षाऽस्तीति ततोऽप्यव्यक्तपदं शरीरपरमवसीयते। एवञ्च सति न्यायसाम्यादिन्द्रियेभ्यः परं मन इत्यग्रेतनवाक्येऽप्यव्यक्तपदं शरीरपरमेव।

## सूक्ष्मं तु तदर्हत्वात् १–४–२

अव्यक्तशब्दार्हत्वं शरीरस्य प्रदर्शयति-सूक्ष्मं त्विति। शरीरमपि कारणात्मना सूक्ष्मं विवक्षितम्। गोभिः श्रीणीतमत्सरम्। गोविकारैः पयोभिः सोमं मिश्रितं कुर्यादित्यर्थे विकारे प्रकृतिशब्ददर्शनात्। ननु अव्याकृतस्य न जानामि नावेदिषमिति प्रत्यक्षविषयत्वमस्तीति कथं तस्याव्यक्तशब्दार्हत्वमिति शङ्कायां तदर्हत्वादिति। यथा स्थूलशरीरं बाह्येन्द्रियप्रत्यक्षविषयी भवति, एवमज्ञानं न स्पष्टम्। अत एव न जानामीति प्रत्यक्षस्य ज्ञानाभावविषयकत्वेन परैः सन्दिह्यमानत्वम्।

## तदधीनत्वादर्थवत् १–४–३

सर्वविकारकारणभूतस्याव्याकृतस्याभ्युपगमे सांख्यमतप्रवेशापत्तिरिति शङ्कायां तदधीनत्वादिति। अस्मदङ्गीकृतमव्याकृतं परमेश्वरस्य शक्तिरूप तया तदधीनमिति न स्वतन्त्रप्रधानकारणवादप्रसङ्गः। तर्हि तादृशमव्याकृतं किमर्थमिति शङ्कायां सूत्रभागः अर्थवदिति। अव्यक्तशब्दस्य शरीरपरिग्रहेणोपपत्तिप्रदर्शनपरं व्याख्यानं तु एकस्यैव शरीरस्य परिग्रहे एकवाक्यताभङ्गापत्त्या भाष्ये निराकृतम्। दुश्शोधत्वादित्यादि - अनात्मनिश्चयः शुद्धिः तदर्थं सूक्ष्ममेवाकाङ्क्षितं ग्राह्यम्। तस्य सूक्ष्मत्वेनामाभेदेन गृहीतस्य दुःशोधत्वात्। स्थूलस्य तु दृष्टदौर्गन्ध्यादिना अनात्मत्वनिश्चयवैराग्ययोः सुलभत्वादिति शङ्काभिप्रायः।

## ज्ञेयत्वावचनाच्च १–४–४

अव्यक्तपदप्रतिपाद्यं प्रधानं न पुरुषानुयोगिकभेदप्रतियोगित्वप्रकारक ज्ञानविषयत्वेनानुक्तत्वात्।

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् १–४–५

अशब्दमस्पर्शमित्यादि मन्त्रोऽव्यक्तस्य ज्ञेयत्वं वदतीति पूर्वोक्त हेतु रसिद्ध इति शङ्का। उक्तमन्त्रः प्रधानपरो न, प्राज्ञप्रकरणपठितत्वात्।

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च १–४–६

अशब्दमित्यादिवाक्यं प्रधानपरं न अग्निजीवपरमात्मपरकठवल्लीघटक त्वात्। पूर्वोक्तवाक्यं जीवाग्निपरं न प्रकृतपरमात्मपरत्वात्। पूर्वोक्तवाक्यप्रतिपाद्यं प्रधानं न मृत्युमुखप्रमोक्षजनकज्ञानविषयत्वात्। अग्नितत्सम्बन्धि, जीवतत्सम्बान्धि, ईश्वरतत्सम्बन्धि - अतिरिक्ताप्रतिपा दककठवल्ली घटकत्वादिति हेतुः तदीयस्यैव विशेषस्येति भाष्येण विवक्षितः।

## महद्वच्च १–४–७

अव्यक्तशब्दः सांख्योक्ततत्त्वपरो न वैदिकशब्दत्वात् महद्वत्। ईक्षतेर्नाशब्दमित्यत्र प्रतिपादितमशब्दत्वमेवात्र विवृतम्।

इत्यानुमानिकाधिकरणम्।

## २. अधिकरणम्

## चमसवदविशेषात् १–४–८

अजामेकां लोहितशुक्लकृष्णामित्यादि श्वेताश्वतरोपनिषन्मन्त्रो विषयः। अत्र किमजाशब्देन प्रधानमुच्यते उत तेजोबन्नात्मिका छान्दोग्यसिद्धावान्तर प्रकृतिरिति। पूर्वत्राव्यक्तपदेन शब्दतः प्रधानप्रत्यभि ज्ञानेऽप्यर्थतः प्रत्यभिज्ञानाभावात् प्रधानस्याव्यक्तशब्दावाच्यत्वेऽप्यजामन्त्रे त्रिगुणत्वादिना प्रत्यभिज्ञानादजापदं प्रधानपरमस्त्विति प्रत्युदाहरणसंगत्या पूर्वपक्षः। अजाशब्दप्रतिपाद्यं प्रधानं लोहितशुक्लकृष्णरूपवत्त्वेन प्रतीयमानत्वादिति पूर्वपक्षः। अयं मन्त्रः प्रधानबोधको न भवति। अर्थविशेषनिर्णायकाभावात्, चमसपदघटितवाक्यवत्। बृहदारण्यकद्वितीया

ध्याय द्वितीयब्राह्मणे अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः इत्यादिमन्त्रः। भाष्ये अजादेराकृतिगणत्वमुपेत्य छागेति प्रयुक्तम्। अन्यथा जातेरस्त्रीविषयादयोप धादिति छागीति स्यात्।

## ज्योतिरुपक्रमा तु तथाह्यधीयत एके १.४.९

यथा चमसमन्त्रे 'इदं तच्छिर एष ह्यर्वाग्बिलंश्चमस ऊर्ध्वे बुध्नः' इति वाक्यशेषेण निर्णयः एवमत्रापि शाखान्तरात् तेजोबन्नलक्षणा चतुर्विधभूतप्रकृतिर्ग्राह्या। तथाहि एके शाखिनस्ताण्डिनः तस्याः प्रकृतेः रोहितादिरूपत्रयवत्त्वमधीयते। यदग्ने रोहितं रूपमित्यादि।

नन्वजाशब्दस्य तेजोबन्नात्मिकायां प्रकृतौ रूढत्वं, जन्मवत्त्वाद्यौगिक त्वमुभयमपि न सम्भवतीति कथं तत्राजाशब्दप्रवृत्तिरिति शङ्कायां सूत्रम्।

## कल्पनोपदेशाच्च मध्वादिवदविरोधः १.४.१०

अयं मन्त्रः कल्पनोपदेशः। तेजोबन्नात्मिकायां प्रकृतावजात्वकल्पना तत्कार्येषु छागापत्यत्वकल्पना। मुक्तसंसारिणोरजत्वकल्पनेत्यादि। यथा आदित्यस्यामधुनो मधुत्वमेवमनजाया अजात्वं कल्प्यत इत्यविरोधः। अतोऽशब्दं प्रधानमिति सिद्धम्।

इति चमसाधिकरणम्

# ३. अधिकरणम्

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च १.४.११

यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठित इत्यादिबृहदारण्यमन्त्रो विषयः। इदं वाक्यं किं सांख्यीयतत्वपरमुतान्यपरमिति संशयः। पूर्वत्राध्यात्माधिकारे रूढ छागाया असम्बन्धादजा तेज आदिकेत्युक्तमि हापि प्रसिद्धमनुष्यग्रहणायोगात् सांख्यप्रसिद्धपञ्चविंशतितत्त्वान्येव गृहीत-

व्यानीति दृष्टान्तसंगत्या पूर्वपक्षः। पञ्च पञ्च जना इति श्रुतिप्रतिपाद्यं सांख्यतत्वरूपं पञ्चविंशतिसंख्याविशिष्टत्वेनोक्तत्वात्। पञ्चविंशतिसंख्यावि शिष्टत्वेन स्मृत्युक्तसांख्यतत्ववदिति पूर्वपक्षः। भाष्ये नैषामिति। पञ्चसु पञ्चसु साधारणस्येतरपञ्चकाद्व्यावृत्तस्य धर्मस्याभावो नानाभावः सूत्रे विवक्षित इत्यर्थः। नह्येकनिबन्धनमन्तरेणेति। महासंख्यायामवान्तर संख्याः कश्चिद्धर्ममादाय प्रविशन्ति। यथा द्वावश्विनौ सप्तर्षय अष्टौ वसवः सप्तदश॰ प्रजापतिरित्यत्र पञ्चदशसंख्यायामश्वित्वादिकमादाय द्वित्वादयः प्रविशन्ति। पञ्चशब्दद्वयेन स्ववाच्यन्यूनसंख्याद्वारेण तद्व्याप्यमहासंख्या लक्ष्यत इति सह दृष्टान्तं शङ्कते अथेति। मुख्यार्थस्य वक्ष्यमाणत्वाल्लक्षणा न युक्तेति परिहरति तदपीति। पञ्चजनशब्दयोरसमास मङ्गीकृत्य पञ्चविंशतिसंख्या निरस्ता। सम्प्रति समासनिश्चयान्न तत्प्रतीतिरित्याह परश्चेति समस्तत्वाच्चेति। आवृत्तिर्वीप्सा। तदभा वे पञ्चकद्वयाग्रहणात् पञ्चविंशतिसंख्याप्रतीतिरसिद्धेति भावः। जनपञ्चकमेकं, पञ्चकानां पञ्चकं द्वितीयमिति पञ्चकद्वयं तस्य पञ्चपञ्चेति ग्रहणं नेत्यर्थः। किञ्चासमासपक्षेऽपि पञ्चशब्दोक्तयोः पञ्चत्वयोः किं परस्परान्वयः, किं वा तयोः शुद्धजनैरन्वयः, अथवा पञ्चत्वविशिष्टैः जनैरपरस्य पञ्चत्वस्यान्वयः। नाद्य इत्याह नच पञ्चसंख्याया इति। अप्रधानानां सर्वेषां विशेष्येणैवान्वयः, नतु परस्परमन्वयो वाक्यभेदापातादि त्यर्थःद्वितीये दशसंख्याप्रतीतिः न पञ्चविंशतिसंख्यायाः। तृतीयमुत्थापयति नन्वापन्नेति। ननु जनानां निराकाङ्क्षत्वेऽपि तद्विशेषणीभूत पञ्चत्वानि कतीत्याकांक्षायां पञ्चत्वान्तरं विशेषणं भवत्वित्याशङ्कते भवदपीति। उपसर्जनस्योपसर्जनान्तरेण नान्वयः किन्तु प्रधानेनेति पूर्वमुक्तमिति परिहरति तत्र चोक्तो दोष इति। पंच पंचानुगत धर्मपंचकाश्रयत्वेनाप्रतीयमा नत्वादात्माकाशघटितत्वाच्च (अतिरेकाच्च) पंचविंशतिसंख्यारहितत्वाच्च। पंच पंच जना इति शब्दद्वयं पञ्चविंशतितत्त्वप्रतिपादकं न भवति पञ्च पञ्चेति वीप्साऽघटितत्वात्। पञ्चजना इति च दिक्संख्ये संज्ञायामिति संज्ञायामेव समासः। तेच पञ्च संज्ञिनः के इत्याशङ्कायां सूत्रम्-

## प्राणादयो वाक्यशेषात् १.४.१२

प्राणस्य प्राणमित्यादि वाक्यशेषात् प्राणादयो ग्राह्या इत्यर्थः। ननु काण्वपाठेऽन्नस्यापठितत्वेन कथं पञ्चसंख्यापूरणमित्याशङ्कायां सूत्रम्-

## ज्यौतिषैकेषामसत्यन्ने १.४.१३

तद्देवाज्योतिषां ज्योतिरित्यत्रोक्तं ज्योतिः पञ्चसंख्या पूरकं उभयेषामाहु ज्योतिश्शब्दपाठे समानेऽप्यपेक्षाभेदात्परिग्रहः। तस्मादशब्दं प्रधानमिति सिद्धम्।

इति संख्योपसंग्रहाधिकरणम्

## ४. अधिकरणम्

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १.४.१४

असद्वा इदमग्र असीत्, सत्त्वेव सोम्येदमग्र असीत्, तद्धेदं तर्ह्यव्याकृतमासीदित्यादि वाक्यानि विषयः। एताः श्रुतयः ब्रह्मणि प्रमाणं नवेति संशयः। वेदान्तवाक्यानां ब्रह्मणि समन्वयः सम्भवति नवेति संशयः। तदर्थं तेषामविरुद्धार्थत्वं विरुद्धार्थत्वं वेति संशयः। (ब्र.वि.) पूर्वं पञ्चत्वसंख्यापूरणमन्नेन ज्योतिषा वेति विकल्पस्याविरोधेऽपि प्रकृते सिद्धे कारणात्मकवस्तुनि विकल्पायोगाद्विरोधे सत्यप्रामाण्यं वाक्यानामिति तन्निरासाय प्रधानस्य कारणत्वमिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। सदेवेत्यादिवाक्यमसद्वेत्यादिवाक्यविरुद्धं विरुद्धार्थप्रतिपादकत्वा दिति पूर्वपक्षः। सिद्धान्ते तु वाक्याविरुद्धं तत्प्रतिपाद्यार्थप्रतिपादकत्वात्। सूत्रे कारणत्वेनेत्यावर्तते। कारणत्वे इति नेत्येकत्र छेदः। द्वितीयं तु तृतीयान्तम्। तथा च ब्रह्मणः कारणत्वे श्रुतिषु न विगानमस्ति कारणत्वेनैकस्यां श्रुतौ व्यपदिष्टस्यैव श्रुत्यन्तरेऽप्युक्तेः। न संख्योपसंग्रहा दिति सूत्रादतिरेकादित्यनुवृत्तं प्रथमान्ततया विपरिणम्यते। अतिरेकः प्रकृते विरोधो, नेत्यनुवर्तते। तथा चाकाशादिषु ब्रह्मणः कारणत्वेऽतिरेको

विरोधो नास्तीत्यर्थः। तत्र हेतुः कारणत्वेनैकस्यां श्रुतौ व्यपदिष्टस्यैव श्रुत्यन्तरेऽप्युक्तेरिति। भाष्ये नच कार्यविषयेणेति - कार्यद्वारा कारणतायां विगाने सत्यपि यथा नानाव्याकरणैर्विलक्षणप्रक्रियारचनाद्वारा शब्दानां साधुत्वे प्रतिपाद्यमाने उपायभूतासु प्रक्रियासु विरोधे सत्यपि तात्पर्यविषयभूते परिनिष्ठितरूपे विरोधाभावान्नाप्रामाण्यम्। एवं वेदान्तेष्वपि कारणत्वोपलक्षित सत्यज्ञानाद्यात्मक ब्रह्मणः तात्पर्यविषयत्वेन तत्प्रतीत्युपायकारणताप्रतिपादने विरोधेऽपि नाप्रामाण्यम्। (ब्र.वि.)

विगानस्य परिहारो वक्तव्यः। अत्रोच्यते -

## समाकर्षात् १.४.१५

असद्वेत्यादिवाक्यं सदेवेत्यादिवाक्यविरुद्धं न (सोऽकामयतेति) सत्यसमाकर्षि असच्छब्दघटितत्वात्। तद्धेदं तर्हीत्यादिवाक्यं चेतनप्रतिपादकं व्याकरणकर्तृत्वेन चेतनबोधकतच्छब्दघटितो (स एष इह प्रविष्ट) त्तरवाक्यकत्वाद्। तस्मान्न केनापि विगानमिति जगत्कारणवाक्यानां ब्रह्मणि समन्वयः सिद्धः। तात्पर्योपिताऽनेकसत्कारणताप्रतिपादकवाक्येभ्यः क्वचित्कत्वात् कारणतावादिवाक्यानां दुर्बलत्वादन्यथाव्याख्यानं कर्तव्यमिति भावः।

इति कारणत्वाधिकरणम्।

# ५.अधिकरणम्

## जगद्वाचित्वात् १.४.१६

यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इति कौषीतकिब्राह्मणोपनिषद्वाक्यं विषयः। तत्र वेदितव्यत्वेनोपदिश्यमानः किं प्राणः उत जीवः उत परमेश्वर इति संशयः। जीव इत्यनेन जीवसामान्यं-जीवविशेषो हिरण्यगर्भश्च विवक्षितः। भाष्ये ये चैते इत्यतः प्राक् मुख्यप्राणपूर्वपक्षः। आदित्यादिकर्तृत्वसम्भावनार्थं

 


ये चैते इत्यनेन हिरण्यगर्भपूर्वपक्षः। जीवसामान्यपूर्वपक्षो जीवो वायमिति विभागः। (ब्र.वि.)

बृहन् पाण्डरवास इति प्राणस्य श्रेष्ठत्वाद्बृहन्निति। पाण्डरा आपो वासो यस्येति व्युत्पत्तिः। सप्तान्नब्राह्मणे प्राणस्य चन्द्रत्वश्रवणात् सोमराजत्वं प्राणस्य। प्राणस्य भोक्तृत्वे चेतनत्वे स आमन्त्रणशब्दं श्रुणुयात् तदश्रवणान्न चेतनः प्राणोऽतस्तदन्यश्चेतनो भोक्ता वेदितव्य इति। सूत्रार्थः - यो वै तालाक इत्यादिवाक्यप्रतिपाद्यः पुरुषाणां कर्ता परमात्मा कार्यसामान्यकर्तृत्वात्। कर्मशब्दस्य जगद्वाचित्वात् कथं जगत्परत्वमित्युच्यते। यस्य वै तत्कर्मेत्यत्रेत्यादिना। पूर्वमेकवाक्यतासत्वात् सच्छब्दानुरोधेनासच्छब्दनयनेप्यत्र वाक्यभेदाद् ब्रह्मशब्दानुरोधेन कर्मशब्दनयनं न सम्भवतीति प्रत्युदाहरणसंगत्या पूर्वपक्षः। वेदितव्यत्वेन प्रतिपाद्यमानः प्राणः परिस्पन्दरूपकर्मवत्त्वात् प्राणपरवाक्यशेष (अथास्मिन् प्राण एवैकधा भवति) घटित वाक्यप्रतिपाद्यत्वात्। वेदितव्यः पुरुषो जीवो धर्माधर्मरूपकर्मवत्त्वात्, भोक्तृत्वात्। प्राणो न भोक्ता, आमन्त्रणशब्दजन्य श्रावणप्रत्यक्षानाश्रयत्वात्। (१) वेदितव्यः पुरुषो भोक्ता यष्टिघातजन्यवेदनाश्रयत्वात् (२) इत्यनुमानद्वयं वाक्यशेषे च जीवलिङ्गमवगम्यत इत्यादिभाष्येण सच्यते। वेदितव्यः पुरुषो जीवः शरीरगतेन्द्रियाद्युपजीव्यत्वादित्यनुमानं तथा परस्तादपीत्यनेनोच्यत इति पूर्वपक्षः। वेदितव्यः पुरुषो ब्रह्म ब्रह्मपरोपक्रमकत्वात्। अमुख्यब्रह्मवादित्व प्रयुक्त बालाकिनिन्दाकर्त्रजातशत्रुवाक्यप्रतिपाद्यत्वात्। यद्यजातशत्रुवाक्यप्रतिपाद्यः परमेश्वरान्यः स्यादजातशत्रोर्मृषावादित्वं स्यादित्यनुकूलतर्कः। आदित्यादिपुरुषनिरूपितनिरङ्कुशकर्तृत्वात्, सकलकार्यकर्तृत्वात् यस्य वैतत्कर्मेत्यत्र कर्मशब्दः सन्निहित जगत्परः तदितराबोधकत्वे सति बोधकत्वात्। पारिशेष्यादिति भाष्यसूचितम्) कर्मशब्दः परिस्पन्दबोधको न भवति धर्माधर्मविषयकरूढिप्रतिरुद्धत्वात्। धर्माधर्मबोधको न परिस्पन्दविषयकरूढिप्रतिरुद्धत्वात्। परिस्पन्दधर्माधर्मरूपरूढ्यर्थयोः कस्य ग्राह्यत्वमित्यत्र विनिगमनाभावात् रूढ्योरनुन्मेषे योगस्य ग्राह्यत्वम्।

## जीविमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् १–४–१७

प्रथमाध्यायप्रथमपादे ३१ सूत्रे व्याख्यातम्।

## अन्यार्थं तु जैमिनिः प्रश्न व्याख्यानाभ्यामपि चैवमेके १–४–१८

प्राणशब्दप्रतिपाद्यो ब्रह्म भोक्तृपुरुषसम्पत्त्याधारत्वात्। भोक्तृदुगमना पादनत्वाच्च। अपि चैवमेके - वाजसनेयिनः। य एषविज्ञानमयः पुरुषः क्वैष तदाऽभूदित्यादि। प्राणातिरिक्तं जीवमामन्तः प्राणस्य वाक्यार्थतां वारयन्तीत्यर्थः।

इति बालाक्यधिकरणम्

## ६. अधिकरणम्

## वाक्यान्वयात् १–४–१९

आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिवाक्यं विषयः अत्र किं विज्ञानात्मनो द्रष्टव्यत्वमुपदिश्यते उतपरमात्मन इति सन्देहः। पूर्वं ब्रह्मोपक्रमसामर्थ्याद् ब्रह्मपरत्वमुक्तं तद्वदिह जीवोपक्रमश्रवणाज्जीवपर त्वमस्त्विति दृष्टान्तसंगत्या पूर्वपक्षः। द्रष्टव्यत्वेनोपदिश्यमानो जीवः प्रियसम्बन्धित्वात्, उत्पत्तिविनाशवत्त्वात्,, विज्ञातृत्वादिति पूर्वपक्षः। द्रष्टव्यत्वेनोपदिश्यमानः परमात्मैवामृतत्वफलकज्ञानविषयत्वात्, सर्वविज्ञान प्रयोजकज्ञानविषयत्वात्, सर्वप्रपञ्चकारणत्वात्। आत्मेत्यादिवाक्यं द्रष्टव्य त्वेन ब्रह्मपरं ब्रह्मपरत्वेन निर्णीतोपक्रमोपसंहारकवाक्यमध्यपतितत्वात्। स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः। इदं सर्वं यदयमात्मेत्यनेन योऽर्थ उक्तः स यथा विस्पष्टो भवति तथा व्युत्पाद्यते दुन्दुभेर्हन्यमानस्येति। दुन्दुभिपदं दुन्दुभिजनितशब्दसामान्यलक्ष णार्थम्। हन्यमानपदमपि तत्तात्पर्यग्राहकम्। तथा चायमर्थः। दुन्दुभि

शब्दसामान्याग्रहणे तद्विशेषान् ग्रहणाय न शक्नुयादिति व्यतिरेकः। दुन्दुभिशब्दसामान्यग्रहणे तु शब्दो दुन्दुभिविशेषशब्दो गृहीतो भवति। तथाच यस्मिन् गृहीते यद्गृह्यते अगृहीते च न गृह्यते तत्तेष्वनुगतं भवति। एवं सद्रूपे ब्रह्मणि गृहीत एववियदादिविशेषा गृह्यन्ते। शुक्तिग्रहणग्राह्यरजतवत्सामान्ये कल्पिताः ततो न भिद्यन्ते। वीररसप्रधानो दुन्दुभ्याघात उच्यते। तत्सामान्यग्रहणे तद्विशेषा गृह्यन्त इत्यर्थः। एकायनंप्रक्रिया = नदीनां यथा समुद्रे लय एवं स्थूलानां स्पर्शादीनां सूक्ष्मावस्थासु लयो यथा भंवति एवं सर्वेषामात्मा एकायनमित्यध्याहृत्य व्याख्येयम्।

ननु तथापि जीवविषयोपक्रमोपसंहारपरामर्शानां कथमुपपत्तिः। नच सुषुप्त्युत्क्रान्त्यधिकरणरीत्या जीवमनूद्यपरमात्माभेदोपदेशपरतया सामञ्जस्यमिति वाच्यम्। अत्यन्ताभेदे भेदसापेक्षस्योद्देश्यविधेयभावस्यास म्भवादित्याशङ्कायामाह

प्रतिज्ञासिद्धेर्लिङ्गमाशमरथ्यः १–४–२०

(यथा सुदीप्तात् पावकाद्विस्फुलिंगा इत्यादिश्रुतिः)

परमात्मकार्यभूता जीवाः परमात्मनो नात्यन्तभिन्नाः किन्तु वह्नि, कार्यभूत विस्फुलिंगवद्भिन्नाभिन्नाः। सर्वविज्ञानप्रतिज्ञा अभेदांशेनोपपादनी येत्येतदर्थं जीवपरामर्शेनाभेदप्रदर्शनं प्रतिज्ञासिद्धेर्लिङ्गम्, इत्याश्मरथ्यः आचार्यो मन्यते। जीवधर्मेण परमात्मन उपक्रमेजीवधर्माणां ब्रह्मगतताप्रतिपादनात् शास्त्रीयास्तयोरभेदः सूचितो भवतीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थिता भवतीत्याश्मरथ्याचार्यः। एकस्य भेदाभेदयोर्विरुद्धत्वमन्नास्वरसः।

उत्क्रमिष्यत एवं भावादित्यौडुलौमिः १–४–२१

संसारदशायां परमात्मनो भिन्न एव जीवः स्वाभाविककर्तृत्वभोक्तृत्वाद्याश्रयो मुक्तिकाले तु स्वकीयनामरूपे विहाय परमात्मनैक्यं प्राप्नोति

(यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्तीत्यादिश्रुतिः प्रमाणम्) तथा च मुक्तिकाले देहेन्द्रियसंघातादुत्क्रमिष्यतो जीवस्य, एवंभावात् परमात्मैक्यभावात् भविष्यदैक्यमपेक्ष्य भेदकालेऽप्यभेदवर्णनमित्यौडुलोमिराचार्यो मन्यते। परमात्मात्मनोर्योगः परमार्थ इतीर्यते। मिथ्यैतदन्यद्द्रव्यं हिनैति तद्द्रव्यतां यत इति विष्णुपुराणेन भेदाभेदयोरसम्भवादौडुलोमिरीत्या भेदाभेदप्रतीत्योर्विरोधः परिहर्तुं न शक्य इत्यस्वरसः।

## अवस्थितेरिति काशकृत्स्नः १-४-२२

रज्जोरेव भुजङ्गरूपेणेव परमात्मन एव जीवभावेनावस्थितेरादिमध्यावसानेषु जीववर्णनमिदं परमात्मप्रदर्शनमेव भवति। स्थूलदर्शिलोकप्रतीतिसौकर्यार्थं जीवरूपप्रदशनमितिकाशकृत्स्न आचार्यो मन्यते। (अनेन जीवेनात्मनानुप्रविश्य सर्वाणि रूपाणि विचित्य धीरो नामानीत्यादिश्रुतिः) अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेरिति भाष्यम् भेदाभेदयोर्विरुद्धत्वात्तयोर्विषमबलत्वे मुमुक्षूणामबाध्यविज्ञानं नोत्पद्यते। एकेनापरस्य बाधात्। तयोः समबलत्वे दोषमाह—

सुनिश्चितार्थत्वानुपपत्तेरिति संशय एव स्यादित्यर्थः।

तथा च द्रष्टव्ये ब्रह्मणि मैत्रेयी ब्राह्मणं समन्वितम्
इति वाक्यान्वयाधिकरणम्।

## ७. अधिकरणम्

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात् १-४-२३

ब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणमुक्तम्। तच्च कारणत्वं यदि निमित्तत्वं तदोपादानकारणं प्रधानमभ्युपेयमिति तत्र तल्लक्षणमतिव्याप्तमित्याक्षेपात्तेनास्य संगतिः। तस्यैवास्याप्यधिकरणस्याध्यायसंगतिः। ब्रह्मकारणत्वाभ्युपगमेन विशेषविप्रतिपत्तिनिरासात्पादसंगतिः। पूर्वाधिकरणे प्रतिज्ञां मुख्यामाश्रित्य जीवपरत्वं वाक्यस्य निरस्तमिह निमित्तोपादानभेदात्

सागौणीत्याक्षिप्य समाधानात् पूर्वाधिकरणेनाक्षेपसंगतिः। यतो वा इमानीत्यादिकारणवाक्यानि विषयः। किं ब्रह्मणो जगन्निमित्तत्वमुतोपादान त्वमपीति संशयः। ब्रह्म जगदुपादानं न भवति कर्तृत्वादीश्वरत्वाच्च। जगत् भिन्नकर्त्रुपादानकं कार्यत्वाद्घटवत्, जगत् ब्रह्मप्रकृतिकं न भवति ब्रह्मविलक्षणत्वादिति पूर्वपक्षसंग्रहः। ब्रह्म जगदुपादानं जगज्ज्ञानप्रयोजकज्ञा नविषयत्वात्। ब्रह्मणि श्रुते मते विज्ञाते विशेषरूपेणाश्रुतममतमविज्ञातमपि कार्यं कारणस्वरूपेण श्रुतं मतं विज्ञातं भवतीति। ब्रह्म उपादानकारणमुपादानभूतमृदादिदृष्टान्तित्वात्, उपादानबोधक यत इति पञ्चम्यन्तशब्दप्रतिपाद्यत्वात्। अधिष्टात्रन्तराभावोऽपीति भाष्यम्जगद् ब्रह्मकर्तृकमन्याकर्तृकत्वे सति सकर्तृकत्वत्।

## अभिध्योपदेशाच्च १–४–२४

(सोऽकामयत बहु स्यां प्रजायेयेति) ब्रह्म जगदुपादानं जगद्रूपेणात्मभवनत्त्वात्, यद्यद्रूपेण भवनवत् तत्तदुपादानं यथा मृत्। ब्रह्म जगन्निमित्तं जगत्सृष्ट्यनुकूलेच्छावत्त्वात् इत्यनुमानद्वयेन निमित्तत्वमुपा दानत्वं च सिद्ध्यति।

## साक्षाच्चोभयाम्नानात् १-४-२५

(सर्वाणि ह्वा इमानि भूतान्याकाशादेव) ब्रह्म जगदुपदानं जगदुत्पत्तिकारणत्वे सति लयाधारत्वात् मृद्वदिति उपादानत्वस्याभ्युच्चयः। साक्षादुपादानान्तरमनुपादायोभयोः प्रभवप्रलययोराम्नानात्।

## आत्मकृतेः परिणामात् १–४–२६

(तदात्मानं स्वयमकुरुत) ईश्वरो जगन्निरूपित निमित्तत्वोपादानत्वो भयवान् कृतिनिरूपिताश्रयत्वोपादानत्वाख्यविषयत्वोभयवत्त्वात्। आत्मस म्बन्धिनी कृतिरात्मकृतिः, सम्बन्धो विषयविषयिभावः आश्रयाश्रयिभावश्च। कथं पूर्वं सिद्धस्यात्मनः कृतिविषयत्वमित्याशङ्कायां परिणामादिति।

परिणामो विवर्तः। सिद्धस्यापि विवर्तात्मना साध्यत्वात् कर्मत्वोपपत्तिरित्यर्थः।

## योनिश्च हि गीयते १–४–२७

ब्रह्म उपादानं योनिशब्दवत्त्वात् "कर्तारमीशं पुरुषं ब्रह्मयोनिमिति"। तस्माद्ब्रह्मणः प्रकृतित्वं निमित्तत्वं चेति सिद्धम्।

इति प्रकृत्यधिकरणम्

## ८. अधिकरणम्

## एतेन सर्वे व्याख्याताव्याख्याताः १–४–२८

अस्यातिदेशस्य जन्मादिसूत्रेणाक्षेपसंगतिः। ब्रह्मण्येवोपादानत्वस्य समन्वयादध्यायसंगतिः। ब्रह्माङ्गीकृत्य कारणान्तर प्रत्यवस्थानात् पादसंगतिः। मृन्निदर्शनाद्ब्रह्म जगदुपादानमिति पूर्वाधिकरणे सिद्धान्तितम्। धानानिदर्शनादण्वादयोऽप्युपादानं स्युरिति दृष्टान्तसंगतिः। एतस्य सोम्यैषोणिम्न एवं महन्न्यग्रोधस्तिष्ठतीति दृष्टान्तः श्रूयते। तत्राणुनिर्देशादणुवादोभातीति पूर्वपक्ष;। अणुरित्यनेन सूक्ष्मतोक्तेति नाणुवाद इति सिद्धान्तः।

इति सर्वव्याख्यानाधिकरणम्

इति श्रीगोडासुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
प्रथमाध्यायस्य चतुर्थः पादः।

इति प्रथमाध्यायः।



# अथ द्वितीयाध्यायः

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् २–१–१

समन्वयस्य स्मृत्यादिविरोधे तन्निरसनमनेन क्रियत इत्युभयोर्विषयविषयिभावः सम्बन्धः। श्रौतसमन्वयविरोधपरिहारत्वादस्य पादस्य श्रुत्यध्याय संगतिः। तत्र प्रथमं स्मृतिविरोधपरिहारः। उक्तसमन्वयः किं सांख्यादिस्मृत्या विरुध्यते न वेति संशयः। ब्रह्म यदि जगदुत्पत्त्यादिकारणं स्यात् जगदुत्पत्त्यादिहेतुप्रधानप्रतिपादकनिरवकाशकपिलस्मृतिकं स्यादिति प्रतिकूलतर्कः। प्रधानं यदि जगत्कारणं स्यात्तर्हि निरवकाश जगत्कारणब्रह्मबोधकमन्वादिस्मृतिकं स्यादिति प्रतिबन्दी। उभयोः स्मृत्योर्विरोधे 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति न्यायेन श्रुत्यनुसारिस्मृतिरेव प्रमाणम्। अन्यात्वप्रमाणमेव। श्रुतिस्मृत्यन्तरविरुद्धात्मभेदकल्पनयापि सांख्यस्मृतिरप्रमाणम्।

## इतरेषां चानुपलब्धेः २–१–२

प्रधानबोधक सांख्यस्मृतिरप्रमाणभूता सांख्यस्मृत्यंशत्वात् महदादि कार्यस्मृत्यंशवत्।

इति स्मृत्यधिकरणम्

## २. अधिकरणम्

## एतेन योगः प्रत्युक्तः २–१–३

प्रधानकारणबोधकयोगस्मृत्या उक्तसमन्वयो विरुध्यते न वेति संशयः। प्रधानादिकारणबोधकयोगस्मृत्यंशः प्रमाणभूतो योगस्मृतित्वात् सम्यग्दर्शनोपायप्रतिपादकयोगस्मृत्यंशवदिति पूर्वपक्षः। श्रुत्यविरुद्धार्थप्रतिपादकत्वेन सोपाधिकः पूर्वपक्षिहेतुरसाधक इति सिद्धान्तः। तत्कारणं

सांख्ययोगाभिपन्नमित्यत्र वैदिकमेव तत्र ज्ञानं ध्यानञ्चेति। श्रवणमननिदिध्यासनसमुदायः सांख्यपदार्थः। माण्डूक्य तापनीयाद्युक्त रीत्या केवलमेवोपासनं योगशब्दार्थः। ताभ्याममभिपन्नं विषयीकृतम्। सर्वाणि तर्कस्मरणानि = अक्षपादादिसूत्राणि तेषामपि प्रमाणादिनिरूपण द्वारा वेदार्थोपकारकतया प्रामाण्यं संरक्षणीयं तदा परमाण्वादिषु तात्पर्यं नास्तीत्येव कल्पनीयमित्याह तान्यपीति। (ब्र.विं.)

इति योगप्रत्युक्त्यधिकरणम्

## ३. अधिकरणम्

### न विलक्षणत्वादस्य तथात्वं च शब्दात् २–१–४

आकाशादिकं चेतनप्रकृतिकं न भवति कार्यद्रव्यत्वाद्घटवदित्यनुमा नेन चेतनोपादानक जगद्वादिसमन्वयो विरुध्यते नवेति सन्देहः। पूर्वं वेदविरुद्धस्मृतेर्मूलाभावादप्रामाण्यमुक्तमिदानीमनुमानस्य व्याप्तिपक्षधर्मते मूलमिति प्रत्युदाहरणसंगतिरुत्तरग्रन्थस्य।

जगत् ब्रह्मप्रकृतिकं न तद्विलक्षणत्वादविद्यावत्। (तदवृत्त्यशुद्धिजाड्यव त्त्वात्) यत् यद्विलक्षणं तत्तत्प्रकृतिकं न यथा मृद्विलक्षणं रुचकादिकं न मृत्प्रकृतिकम्।

चेतनप्रकृतिकत्वाज्जगतश्चेतनत्वमेव परन्तु घटादिषु तदनभिव्यक्त मिति ब्रह्मवैलक्षण्यं जगति नास्तीति शङ्कायां सूत्रभागः - तथात्वं च शब्दादिति। 'विज्ञानं चाविज्ञानं च' इति शब्देनैव तथात्वं प्रकृतिविलक्षणत्वमचेतनत्वं ज्ञायते। श्रुतार्थापत्त्या जगतश्चेतनत्वं कल्पनीयं तत्तु न युक्तम्। श्रुतार्थापत्त्यपेक्षया श्रुतेः प्राबल्यात् प्रत्यक्षश्रुतिरेवास्तीति शङ्कायां सूत्रम् -

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् २–१–५

मृदब्रीदित्यादिवाक्यघटकमृदादिशब्दप्रतिपाद्याः जडरूपा न भवन्ति वक्तृत्वेनोक्तत्वात्। यदि जडरुपाः स्यु पपन्नविज्ञानं चाविज्ञानं चेति श्रुत्युक्तचेतनाचेतनविभागरूपविशेषकाः स्युरित्यनुकूलतर्को विशेषइत्यनेनो च्यते। वागादिशब्दप्रतिपाद्याः चेतनाः देवतात्वेन विशेषितत्वादिति विशेषमाह अपि च कौषीतकिनइति भाष्ये। मृदादिशब्दप्रतिपाद्याः मृदादिजडानुगतदेवतारूपाः वक्तृत्वात्। अनुगतेरित्यनेन साध्यप्रसिद्धिरुप पाद्यते। (अग्निर्वाग्भूत्वेत्यादि) प्राणसंवादवाक्यशेषे चेति - मृदादि शब्दप्रतिपाद्याः जडानुगतदेवतारूपाः अनुगम्यमानव्यवहारकत्वात्। व्यवहारानुगतेरित्यर्थः। तथा च जगत् ब्रह्मविलक्षणत्वान्न ब्रह्मप्रकृतिकमिति पूर्वपक्षः

१. ब्रह्म नाकाशोपादानं चेतनत्वाज्जीववत्। २.आकाशो वा न चेतनप्रकृतिको द्रव्यत्वाद्घटवत्। ३. सुखदुःखमोहा वा जगदुपादानवर्तिनः सकलजगदनुगतत्वात् सत्तावत्। घटत्वादौ व्यभिचारवा रणाय सकलेतीति पूर्वपक्षः। (शास्त्रदर्पणे)

## दृश्यते तु २–१–६

यद्यद्विलक्षणं तत्तत्प्रकृतिकं नेति व्याप्तौ व्यभिचारः प्रदर्श्यते। गोमयविलक्षणेषु वृश्चिकादिषु गोमयप्रकृतिकत्वस्य दर्शनादिति। उच्यते एवमपि किञ्चिदिति भाष्यम्। शरीरस्थकेशादीनाञ्च प्राणित्वाप्राणित्वाभ्यां विशेषः। प्रकृतिविकारयोः किमत्यन्तसारूप्यमावश्यकमुत यत्किञ्चित्सारू प्यमिति विकल्पं मनसि निधाय दूषयति - अत्यन्तसारूप्य इति। ब्रह्मविलक्षणत्वं किं ब्रह्मवृत्तिधर्मनिष्ठयावत्त्वावच्छिन्नप्रतियोगिताकाभाव वत्त्वं वा, ब्रह्मनिष्ठधर्मत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं वा, ब्रह्मनिष्ठचैतन्यत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं वेति विकल्प्य दूषयति - प्रथमे इत्यादि। विकारे प्रकृतिवृत्ति यावद्धर्माभावाद्विरोधः। द्वितीये

सत्तारूपधर्मसत्वादसिद्धिः। तृतीये व्याप्यत्वासिद्धिः दृष्टान्ताभावात्। अनाद्यविद्याया दृष्टान्तत्वेऽनादिभावत्वमुपाधिः। प्रागभावान्तर्भाविणोपाधेः साध्यव्यापकत्वभङ्ग इति चेन्न। आदिभावभिन्नत्वस्योपाधित्वात्। तथा च पूर्वपक्ष्यनुमाने व्यभिचारविरोधस्वरूपासिद्धिव्याप्यत्वासिद्धयः। 'आगम विरोधस्तु' इत्यनेन बाधश्च। भाष्ये शुष्कतर्कस्येति। शुष्कः श्रुत्यनपेक्षोऽनुग्राह्यमाननहीनतया निरालम्बनत्वं तर्कस्य शुष्कत्वम्। श्रुत्यनुगृहीत इति श्रुत्या तत्त्वे निश्चिते सति अनु पश्चात् पुरुषदोषस्यासम्भावनादेर्निरासाय गृहीतः। विप्रलम्भत्वम् = अप्रमापकत्वम् = अर्थविशेषाव्यवस्थापकत्वम्। कीदृश तर्क आश्रयणीय इत्याह स्वप्नान्तबुद्धान्तयोरिति।

## असदिति चेन्न प्रतिषेधमात्रत्वात् २–१–७

यद्यशुद्धं जगत् शुद्धब्रह्मप्रकृतिकं स्यात्तर्हि तदात्मकं न स्यात्। ओमित्युक्ते उत्पत्तेः पूर्वमसत् स्यादिति पूर्वपक्षभागार्थः। असत् स्यादित्यस्य सत्त्वं न स्यादित्यर्थः। तत्र न तावत् कारणगतसत्त्वं नास्तीति वक्तुं शक्यते उत्पत्तेः पूर्वमपि तत्सत्त्वात्। कार्यगतसत्त्वस्य तु सर्वदाप्यविद्यमानत्वादापत्तिरेव न, इष्टापत्तेरिति समाधानाशयः। सत्कार्यवादे उपादानोपादेययोः ब्रह्मजडयोः स्वरूपैक्यं नोच्यते, किन्तूपादाने ब्रह्मणि कल्पितस्य प्रपञ्चस्य पारमार्थिकं स्वरूपं ब्रह्मैवेति ब्रह्मव्यतिरेकेणासत्त्वम्। तथा चोत्पत्तेः प्रागपि प्रपञ्चस्य पारमार्थिकस्वरूप भूतं ब्रह्मास्तीति, एतावता सत्कार्यवाचोयुक्तिः। अतो न किञ्चिदनुपपन्नम्।

जगत् न ब्रह्मप्रकृतिकमचेतनत्वादित्युक्ते दृष्टान्तासिद्धिः। ब्रह्मणश्च ब्रह्माप्रकृतिकत्वेन सपक्षत्वात्तत्र च हेतोरप्रवेशादसाधारणता। प्रथमानुमाने संसारित्वमुपाधिः। द्वितीये दृष्टान्ते साध्यवैकल्यं घटस्य कपालाद्यवच्छिन्न ब्रह्मप्रकृतिकत्वात्। तृतीये च कार्यत्वादिभिरनेकान्तः। तेषां सकलजगद्वर्तित्वात् प्रकृताववृत्तेश्च। (शास्त्रदर्पणे)

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् २–१–८

पूर्वपक्षः। ब्रह्म यद्यशुद्ध्यादिमज्जगदुपादानं स्यात् प्रलये अशुद्ध्यादिमत्स्यात्। (१) अतोऽसञ्जसम्। भोक्तृभोग्यात्मकमिदं जगत् यदि ब्रह्मप्रकृतिकं स्यात्तदा प्रलये ब्रह्मणि अविभागेन लीयमानं स्यात्। ओमित्युक्ते पुनरुत्पत्तौ भोक्तृभोग्यादि विभागेनोत्पत्तिमन्न स्यात्। तस्मादसमञ्जसम्। २. अपीतौ - अविभागेन लये, तद्वत् - प्रलय इव, उत्पत्तावपि भोक्तृभोग्यात्मकप्रपञ्चस्य प्रसङ्गादविभागवत्त्वप्रसङ्गादि त्यर्थः।

यदि ब्रह्म जगत्प्रकृतिभूतं स्यात्तर्हि प्रलयकाले जगदन्तर्गतभोक्तृगतक र्मादिलयवत्स्यात्। यदि भोक्तारः कर्मलयेऽपि पुनरुत्पद्यमानाः स्युस्तर्हि पुनरुत्पद्यमानमुक्तजनकाः स्युः। तस्मादसमञ्जसम्। मुक्ताः पुनरुत्पत्ति योग्याः जीवत्वात् बद्धजीववत्। ३. अपीतौ कर्मादिनिमित्तलयेऽपि भोक्तॄणां पुनरुत्पत्तावभ्युपगम्यमानायां तद्वत् भोक्तॄणामिव मुक्तानामपि, प्रसङ्गात् = पुनरुत्पत्तिप्रसङ्गात्।

अपीतौ प्रलयकालेऽपि, ब्रह्मभिन्नानां विभक्ततयाऽवस्थाने, तद्वत् सृष्टिकाल इव प्रलये लयाभावप्रसङ्गात्। (४) असमञ्जसमिदमौपनिषदं दर्शनमित्यर्थः।

## नतु दृष्टान्तभावात् २–१–९

नत्वसमञ्जसम् दृष्टान्तभावात्। घटोपादानमृदिघटस्यलयेऽपि मृदि घटाकाराभावात् प्रतिकूलतर्कः शिथिलमूलः। अनन्यत्वेऽपीति भाष्यम्। भेदेन परमार्थतः कार्यस्वरूपाभावेऽपि कार्यस्य पारमार्थिक आत्माऽधिष्ठानं कारणमेव, नतु कारणस्य पारमार्थिक आत्मा - अधिष्ठानं कार्यमित्यर्थः। मिथ्याज्ञानस्य सुषुप्तिसमाध्यादाविवानपोदितत्वात् पुनर्विभागेनोत्पत्तेर्नानुप पत्तिः। (२)

तृतीये तु मिथ्याज्ञानवत्त्वमुपाधिः। अन्तिमस्त्वनभ्युपगमपराहतः।

## स्वपक्षदोषाच्च २–१–१०

जगतः प्रधानोपादानकत्वे एव पूर्वोक्ताः सर्वे दोषाः प्रसज्यन्ते। जगत् न प्रधानप्रकृतिकं प्रधानावृत्तिशब्दादिमत्त्वात्। विलक्षणकार्योत्पत्त्यभ्युगमादसत्कार्यवादप्रसङ्गः। अपीतौ तद्वत्प्रसङ्गादित्यपि समानम्। तथा यत्रोभयोः समो दोष इति न्यायेन न शङ्कितव्यमिति।

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः २–१–११

तर्कों व्याप्तिनिश्चयः। अनुमानं श्रुत्यर्थज्ञानप्रतिबन्धकं न अप्रतिष्ठितत्वात्। तदुपरिशङ्का - अन्यथानुमेयमिति चेदिति सर्वस्तर्कोऽप्रतिष्ठित इति न वक्तुं शक्यते। कस्यचिदप्रामाण्येन सर्वस्याप्यप्रामाण्ये सर्वेषामपि प्रमाणानां तथैवाप्रामाण्यप्रसङ्गात्। किन्तु निरवद्यतर्कः परिग्राह्य इति चेदेवमप्यनिर्मोक्षप्रसङ्गः - जगत्कारणानुमाने व्याप्तिमल्लिङ्गं नास्ति। साधर्म्यवैधर्म्यमात्रं त्वप्रतिष्ठितत्वदोषान्न मुच्यत इति एकोऽर्थः। (१)

श्रुत्यनपेक्षतर्केण जगत्कारणं भिन्नभिन्नमवस्थापयतां तार्किकाणामन्योन्यं विप्रतिपत्तेस्तत्त्वनिर्धारणकारणाभावाच्च न ततस्तत्त्वव्यवस्थेति न ततः सम्यग्ज्ञानम्। असम्यग् ज्ञानान्नसंसाराद्विमोक्ष इति द्वितीयोऽर्थः। (२) अत आगमाननुसारितर्केण चेतनोपादानकजगद्वादिसमन्वयो न विरुध्यत इति सिद्धान्तः। भाष्ये - अतीतवर्तमानाध्वसाम्येनेति। अतीतवर्तमानपाकदृष्टान्तेनहि आगामिनि पाके पाकत्वहेतुनेष्टसाधनतामनुमाय पुरुषः पाके प्रवर्तते, एवं सर्वत्र। तथा चानुमानाप्रामाण्ये प्रवृत्त्यादिव्यवहारोच्छेदः। वाक्यवृत्तिनिरूपणेन = वाक्यतात्पर्यनिर्णयेन। प्रकृते तावदिति। न वयं सर्वेषां तर्काणामप्रतिष्ठितत्वं ब्रूमः, किन्तु श्रुतितात्पर्यविषयीभूतार्थबाधनार्थमुपन्यस्तस्य। अतिगम्भीरम् = आगमाति

रिक्तमानायोग्यम्। भावयाथात्म्यम् = भावस्य जगत्कारणस्य याथात्म्यम् = अद्वितीयत्वम्। मुक्तिनिबन्धनम् = परमानन्दसच्चिदेकतानम्।

इति न विलक्षणत्वाधिकरणम्

## ४. अधिकरणम्

### एतेनशिष्टापरिग्रहा अपि व्याख्याताः २-१-१२

उक्तसमन्वयो ब्रह्मद्रव्योपादानं न भवति विभुत्वादाकाशवदित्यनुमानेन विरुध्यते नवेति संशयः। विरुध्यत इति पूर्वपक्षः। विभुत्वहेतुरसिद्धः उपजीव्यश्रुत्या बाधश्च। परममहत्परिमाणवत्वरूपस्य सर्वसंयोगित्वरूपस्य वा विभुत्वस्य निर्गुणे ब्रह्मण्यसिद्धिः। व्याख्याताः विरुद्धतया ज्ञेया इत्यर्थः।

इति शिष्टपरिग्रहाधिकरणम्

## ५. अधिकरणम्

### भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् २-१-१३

अद्वितीयाद्ब्रह्मणो जगत्सर्गं ब्रवन् समन्वये विषयः। उक्तसमन्वयो भेदग्राहिप्रत्यक्षादिना विरुध्यते न वेति संशयः। पूर्वं जगत्कारणे तर्कोऽप्रतिष्ठित इत्युक्तम्। तर्हि जगद्भेदे तर्कः प्रतिष्ठित इति प्रत्युदाहरणसंगत्या पूर्वपक्षः। एकं स्वाभिन्नानेकोपादानं न भवत्यद्वितीयत्वात्। यद्यद्वितीयं जगदुपादानं स्यात्तर्हि भोग्याभिन्नभोक्तृकं स्यात् भोक्त्रभिन्नभोग्यकं स्यादिति पूर्वपक्षः। लोकवदिति समाधिः। समुद्रस्य फेनतरंगबुद्बुदोपादानत्वेऽपि तरंगाभिन्नफेनकत्वं नास्तीति व्यभिचारः। नामरूपांशस्य स्वरूपैक्यानभ्युपगमेन ब्रह्मजगतोः साङ्कर्याभावेऽपि जीवब्रह्मणोः स्वरूपैक्याभ्युपगमात् तयोः साङ्कर्यं स्यादित्याशङ्क्य परिहरति यद्यपीति। स्वरूपैक्ये सत्यपि औपाधिकभेदाभ्युपगमाद्ब्रह्मणः संसारित्वं जीवस्य सर्वज्ञत्वादि वा भवेदिति आशङ्का न भवतीत्यर्थः।

इति भोक्त्रापत्त्यधिकरणम्

# ६. अधिकरणम्

## तदनन्यत्वमारम्भणशब्दादिभ्यः २–१–१४

अभ्युपगंम्य चेति। अभ्युपगम्य मिथ्यात्वेनाव्युत्पाद्य। विषयसंशयौ पूर्वोक्तावेव। एकफलकत्वं संगतिः। पूर्वाधिकरणे परिणामवादमालम्ब्यापाततः समाधानमुक्तम्। इदानीं तु परमार्थतो विवर्तवादमाश्रित्य समाधानमुच्यते। विकारः सन् न, नाममात्रत्वेन श्रुतावुक्तत्वात् शशविषाणवत्। प्रपञ्चो मिथ्या स्वान्यूनसत्तकत्रिविधपरिच्छेदवत्त्वात् (व्यतिरेकेण ब्रह्मवत् ) मृगतृष्णिकादिवदित्यनुमानाभिप्रायेण दृष्टान्तद्वयं प्रदर्श्य हेतुं प्रदर्शयति दृष्टनष्टस्वरूपत्वादिति। प्रपञ्चो मिथ्या दृष्यत्वान्नाशप्रतियोगित्वादिति। (ब्र.वि.) अनुपाख्यत्वात् = सत्तास्फूर्तिशून्यत्वात्। नन्वनेकात्मकं ब्रह्मेति भाष्यम्। प्रपञ्चो ब्रह्मानन्यत्वाभाववान् ब्रह्मभेदब्रह्माभेदोभयवत्त्वात्। मृदादिदृष्टान्ता इति यथा मृदो घटशरावाद्यात्मनानेकत्वं, एवं ब्रह्मणोऽपि स्वकार्यात्मनानेकत्वमित्यङ्गीकारे दृष्टान्तसाम्यमिति। निराचष्टे नैवं स्यादिति। प्रपञ्चो ब्रह्मभेदाभेदोभयाभाववान् ब्रह्मसत्तातिरिक्तसत्ताकत्वाभावादिति। पूर्वपक्षहेतुः स्वरूपासिद्ध इति। स आत्मा तत्त्वमसीति भाष्यम्। यदि प्रपञ्चः सत्यः स्यात्तर्हि तदन्तर्गतकर्तृत्वभोक्तृत्वादिविशिष्टजीवोऽपि सत्यः स्यात्। इष्टापत्तौ तस्य ब्रह्माभेदो न स्यात्। ओमित्युक्ते तद्बोधकतत्त्वमसीति वाक्यमप्रमाणं स्यात्। बाधिते च शारीरात्मत्वे इति। प्रपञ्चो ब्रह्मान्यत्वाभाववान् ब्रह्मान्यत्व प्रयोजनसार्वदिकव्यवहाराभावात्। व्यवहाराभावश्च मिथ्याज्ञान निवृत्तौ यत्र त्वस्य सर्वमित्यादिश्रुत्या बोध्यते। व्यवहाराभावो मिथ्याज्ञानविगमप्रयुक्तो न, अपि त्ववस्थाभेदप्रयुक्त इत्याशङ्क्य सदातनब्रह्मात्मभावस्यैव तत्त्वमसीति श्रुत्या बोधनान्न तद्युक्तमिति समाधत्ते नचायं व्यवहाराभाव इत्यादिना। भेदाभेदयोरुभयोरपि सत्यत्वमते ऐक्यज्ञानेन भेदो नापोद्यः आरोपितस्यैव ज्ञानेनापोदितुं शक्यत्वादित्याह नचास्मिन् दर्शन इति। यदि प्रपञ्चो ब्रह्मव्यतिरिक्तो न स्यात्तर्हि

निरालम्बनतद्बोधकप्रत्यक्षादिप्रमाणकः स्यादिति शङ्कते नन्वेकत्वैकान्ता भ्युपगमे इति। समाधत्ते अत्रोच्यत इति। तत्रापाद्यमानं निरालम्बनत्वं किं निर्विषयकत्वमुत सत्यविषयकत्वाभावः। आद्ये व्यावहारिकविषय स्वीकारान्नापत्तिः। द्वितीये इष्टापत्तिरिति समाध्यभिप्रायः। कथं त्वसत्येन वेदान्तवाक्येनेति। ब्रह्मात्मैकत्वमसत्यंमनृतशास्त्रवोधितत्वादित्यनुमानम् उच्यते। नहि रज्जुसर्पेणेति भाष्येण यदनृतजन्यं तदनृतमिति व्याप्तिरुच्यते। तस्या व्यभिचारः शङ्का विषादिनिमित्तमरणादिकार्योपलब्धेरित्यनेनोच्यते। निदर्शनान्तरमाह स्वप्नदर्शनावस्थस्येति। तदवगतिमपि मिथ्येतीति। यद्यप्यसत्यविशिष्टत्वेनावगतेरपि मिथ्यात्वं तथापि लौकिकाभिप्रायेणैतत्। असत्यबोध्यस्य सत्यत्वे दृष्टान्तः 'यदा कर्मसु' इति। नानात्वं बाधितं (अन्त्य) निरपेक्षप्रमाणबाध्यत्वादित्याह अपि चेति। नानात्वस्य तात्विकत्वं श्रुतिसिद्धमिति शङ्कते ननु मृदादिदृष्टान्तेति, कारणमात्रस्य सत्यत्वावधारणेन कार्यस्यानृतत्वं प्रतिपादितम्। ब्रह्मणः कूटस्थनित्यताप्रति पादिकाः श्रुतयः प्रदर्श्यन्ते = सवा एष महानज आत्मेत्यादि। आत्मैकत्वज्ञानवज्जगदाकारपरिणामित्वज्ञानं फलवन्न, अतस्तदङ्गम्। तर्हि जन्माद्यस्येति सूत्रं कथं संगच्छत इति चेदुच्यते। ब्रह्मण ईश्वरत्वं सर्वज्ञत्वं च न तात्त्विकम् किन्त्वविद्योपाधिकम्। तदाश्रयं जन्मादिसूत्रम्। तत्त्वाश्रयं तु तदनन्यत्वसूत्रमित्यभिप्रायकं ननु कूटस्थब्रह्मात्मवादिन इत्यादिभाष्यम्। सूत्रे तत्त्वत इति पदमध्याह्रियते। अनन्यत्वपदमावर्तनीयम्। तथाच तदनन्यत्वपदेन तत्त्वतस्तदनन्यत्वरूपार्थलाभः। तदनन्यत्वं तादात्म्यम्। तदैक्यशून्यस्य तदत्यन्तभेदाभावस्य तादात्म्यं विनाऽनुपपन्न त्वात्। तादात्म्यञ्च तद्गतधर्मविशेषरूपमतिरिक्तं वा। तत्त्वतस्तदनन्यत्वञ्च तदन्यस्वीयतात्त्विकरूपशून्यत्वम्। तथा च विशेषनिषेधस्य शेषाभ्यनुज्ञानार्थ त्वाद्ब्रह्मान्यजगद्रूपस्यातात्त्विकता मिथ्यात्वापरपर्याया लभ्यते। (शं.पा.भू) जगतस्तुच्छत्वे तदुपादानत्वं ब्रह्मणो दुर्घटमिति शङ्कानिरासाय तादात्म्यमुक्तम्।

## भावे चोपलब्धेः २–१–१५

यत्सत्ताधीनोपलब्धिकत्वं यत्र तत्र तदनन्यत्वमिति व्याप्तेः अत्राधीनत्वं व्याप्यत्वमित्यभिप्रायेण शङ्का नन्वन्यस्य भावेपीति। 'तद्भावानुरक्तां हि' इति भाष्यम्। तद्भावव्याप्यभावकत्वे सति तदुपलब्धिव्याप्योपलब्धि कत्वं यत्र तत्र तदनन्यत्वम्। आलोकोपलब्धिव्याप्योपलब्धिके घटरूपे व्यभिचारवारणाय सत्यन्तम्। धूमे व्यभिचारवारणाय विशेष्यदलम्। जगत्कारणादनन्यत्कारणसत्ताधीनसत्ताकत्वे सति कारणोपलब्ध्यधीन उपलब्धिकत्वात्।

भावाच्चोपलब्धेः। तादात्म्योपलब्धेः भावात् सत्त्वाच्चेत्यर्थः। भावे इत्यतः प्राक् कारणस्येति, उपलब्धेरित्यस्मात्पूर्वं कार्यस्येति चाध्याहार्यम्। भावे इत्यस्य भाव एवेत्यर्थः। च शब्देन कारणोपलब्धावेवोपलभ्यमानत्वं समुच्चीयते।

## सत्त्वाच्चावरस्य २–१–१६

जगत्कारणादनन्यत् प्रलयकाले कारणात्मना सत्त्वेन श्रूयमाणत्वात्। सदेव सोम्येदमग्र आसीत्। अवरस्य कार्यस्य उत्पत्तेः प्राक् कारणानन्यत्वेन सत्त्वादित्यर्थः। घटत्वं मृन्निष्ठं घटवृत्तित्वात् सत्त्ववदिति प्रयोगः 'एकं च पुनः सत्त्वमिति भाष्याभिप्रेतः। सन् घट इत्यादिप्रतीतौ सद्रूपब्रह्मणो न विषयत्वं भिन्नानामेकेन सताऽभेदासंभवात् किन्तु कालादिसम्बन्धित्वमि त्याशङ्कायां एकं च पुनः सत्त्वमिति। अनुगताकारप्रतीतेरेकवस्तुविषयकतयो पपाद्यतया न भिन्नभिन्नदेशकालादिसम्बन्धविषयतेति भावः। अनुगतसत्ता जातिविषयकत्वमपि तार्किकरीत्या वक्तुं न शक्यते। द्रव्यं सदित्यत्र समवायेन सामान्यं सदित्यादौ सामानाधिकरण्यसम्बन्धेनेति सम्बन्धांशेअनु गमासम्भवात्। अतः सर्वत्र सद्रूपब्रह्मतादात्म्यविषयकत्वमेव वक्तव्यम्।

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् २–१–१७

पूर्वोक्तसत्त्वरूपहेतोः असद्वा इदमग्र आसीदिति श्रुत्या असिद्धिराशङ्क्य निरस्यते। धर्मान्तरेण तद्व्यपदेशः व्याकृत नामरूपत्वरूपाद्धर्माद्भिन्नो योऽव्याकृतनामरूपत्वरूपो धर्मः तेनासद्व्यप देशः। तत्सदासीदिति वाक्यशेषेणैतज्ज्ञायते। अत्यन्तासतस्सत्त्वासम्भवात्।

## युक्तेः शब्दान्तराच्च २–१–१८

कारणात्मना सत्त्वरूपहेतुः साध्यते। १. घटः उत्पत्तेः प्राक् मृदात्मना सन् घटार्थिनियतोपादानकमृत्कत्वात्। यदि साध्यं न स्यात्तर्हि हेतुरपि न स्यात्। ओमित्युक्ते तैलार्थिनियतोपादानकसिकताकं तैलं स्यादिति सामान्यव्याप्तौ दोषः। यत् यदात्मना न सत् तत्तदर्थिनियतोपादानकतत्कं न भवतीति दधिघटरुचकार्थिभिरित्यादि भाष्ये युक्तिः। मृत् घटोत्पत्तेः प्राक् स्ववृत्तिघटीयसूक्ष्मावस्थावती घटार्थिनियतोपादानकत्वादित्यथाविशिष्टेऽपीत्यादि भाष्यम्। घटातिशय भाववत्त्वमुपाधिः। २.कार्यमुत्पत्तेः प्राक् कारणादनन्यत् (कारणात्मना सत्) कार्यकारणतादात्म्यवत् कारणप्रतियोगिकभेदबुद्ध्यविषयत्वादिति युक्तिः। अपि च कार्यकारणयोरिति भाष्येणोच्यते। य एव पूर्वाह्णे मृत्पिण्डो दृष्टः स एवेदानीं घटशरावादिरूपोऽभवदिति तादात्म्यबुद्धिविषयत्वादित्यपि हेतुः। समवायेनार्थान्तरे दत्ते समाधत्ते समवायकल्पनायामपीत्यादिना। समवायस्य सम्बन्धान्तराभ्युपगमेऽनव स्था अनभ्युपगमे विच्छेदः। सम्बन्धस्य सम्बन्धान्तरानपेक्षायां संयोगस्यापि तदनपेक्षत्वं स्यात्।

## कथं च कार्यमवयविद्रव्यमिति

३. पटः तन्त्वनन्यः तन्तुनिरूपितवृत्तिमत्त्वेनानिरूप्यत्वात्। अवयव्यनुपल ब्धिरिति। यत्किञ्चिदवयवप्रत्यक्षेऽप्यवयविप्रत्यक्षं लोकसिद्धम्। तन्नोपपद्यते। व्यासज्यवृत्तिधर्माणां यावत् स्वाश्रय प्रत्यक्षाधीनप्रत्यक्षत्व

नियमात्। अथ प्रत्यवयवमिति। एकत्र व्यापारे इति। एकस्मिन् तन्तौ वृत्तिकालेऽन्यत्र वृत्तिर्नस्यादित्यर्थः एवं वृत्तेर्निरूपयितुमशक्यत्वा दनिर्वचनीयत्वं कार्यस्योक्तम्। कार्याकारोपीति। कारणाद्भेदाभेदाभ्यां दुर्निरूपस्य सदसद्विलक्षणस्यानिर्वाच्याभिव्यक्तिरनिर्वाच्यकारकाणां फलमिति पक्ष एव श्रेयानिति भावः। सिद्धान्ते कपालद्वयातिरिक्तं घटात्मकं द्रव्यं नाङ्गीक्रियते। तथासति कपालपरिमाणघटपरिमाणद्वयं गुरूत्वद्वयंचोपलभ्येत। अत एकस्यैव मृद्द्रव्यस्य पूर्वं पिण्डावस्था तदनन्तरं कपालाकारः तदाच्छादनेन घटाकारः। न चाकारविशेषस्य प्रागसत्वादसत्कार्यवादप्रसङ्गः, कार्यानुस्यूतकारणस्य प्राक् सत्वेनैव सत्कार्यवादोपपत्तेः। असत उत्पत्तिर्न सम्भवति। एवं सतोऽप्युत्पत्तिर्न सम्भवति। सत्त्वासत्त्वाभ्यां निरूपयितुमशक्याकाराऽनिर्वचनीयैव। अतो दुर्निरूपत्वादपि प्रपञ्चस्य मिथ्यात्वमेव।

## प्रागुत्पत्तेश्च कार्यस्यासत्त्वे इति भाष्यम्।

४. कार्यमुत्पत्तेः पूर्वं कारणात्मना सत् उत्पत्तिक्रियाकर्तृत्वात्। घटः प्रागुत्पत्तेरसन् कारकव्यापाराधीनसिद्धिकत्वादिति नन्वेवं सतीत्यादिनै यायिकपूर्वपक्षः। पूर्वपक्षिहेतुर्विरुद्ध इति समाधानम्। कारकव्यापारेणाभिव्यक्तेः स्वीकारेण साध्याभावव्याप्तविरुद्धत्वम् घटोमृद्भिन्नः तदवृत्तिविशेषवत्त्वात् वृक्षवदित्यत आह नचेति। देवदत्ते व्यभिचारादित्याह नहीति। व्यभिचारस्थलान्तरमाह तथा प्रतिदिनमिति। वस्तुतोऽन्यन्वं सत्यो भेदः।

## पटवच्च २–१–१९

कार्यं कारणादनन्यत् तदीयावस्थान्तरवत्त्वात्। संवेष्टित पटाभिन्नतदी यावस्थान्तरयुक्तप्रसारितपटवत्। कार्यमुपादानाद्भिन्नं तदुपलब्धावप्यनुपल ब्धत्वात्, ततोऽधिकपरिमाणत्वाच्चेत्यनुमानयोः व्यभिचारप्रदर्शनाय पटवच्चेति सूत्रम्। तत्रैव प्रतिज्ञायां तद्भिन्नकार्यकारित्वादिति हेतौ व्यभिचारप्रदर्शनपरम्।

## यथा च प्राणादि २–१–२०

इति आरम्भणाधिकरणम्

## ७. अधिकरणम्

### इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २–१–२१

जीवाभिन्नं ब्रह्म जगदुपादानमिति वदन् समन्वयो विषयः। यदि तादृग्ब्रह्म जगज्जनयेत् तर्हि स्वानिष्टं न सृजेदिति न्यायेन विरुध्यते न वेति सन्देहः। पूर्वत्र कार्यकारणयोरनन्यत्ववत् घटाकाशकल्पजीवानामपि महाकाशोपमब्रह्मात्मैक्यमुक्तम्। तस्य हिताकरणाद्यनुपपत्तिभिराक्षेपादाक्षेपसंगतिः। जीवाभिन्नं ब्रह्म जगत्कारणं न भवति सृज्यमानजीवानिष्टपदार्थवत्त्वात्। यो यत्कार्यान्तर्गतानिष्टवान् स तत्कार्यस्वतन्त्रो न भवति। यद्वा इतरस्येत्यादि, ब्रह्म यदि जीवाभिन्नं स्यात्तर्हि जीवगतानिष्टवत् स्यात्। इतरस्य जीवस्य ब्रह्मत्वव्यपदेशात् - ब्रह्मणो जीवत्वव्यपदेशादित्युभयथाप्यर्थः। हिताकरणमित्यत्र नञ्व्यत्यासेनाहितकरणमर्थः। आदिपदग्राह्यभ्रान्त्यादिकमापादयति नच स्वयमित्यादिना।

### अधिकं तु भेदनिर्देशात् २–१–२२

जीवापेक्षयाऽधिकं ब्रह्म कारणमतो न दोषः। अधिकसत्त्वे प्रमाणमुच्यते भेदनिर्देशादिति। आत्मा वाऽरे द्रष्टव्य इत्यादिद्रष्टृद्रष्टव्यभावेन भेदनिर्देशात्। तत्त्वमसीत्यभेदप्रतिपत्तेः पूर्वं भेदोऽतात्त्विकः। तमाश्रित्यैव आत्मा वा अरे द्रष्टव्य इत्यादि कर्तृकर्मभावादिनिर्देशः। जीवेश्वरभेदः पारमार्थिक एव किं न स्यादित्यत आह अपि चेति।

### अश्मादिवच्च तदनुपपत्तिः २–१–२३

एकरूपं ब्रह्म यदि जगत्कारणं तर्हि जगद्वैचित्र्यं न स्यादिति दोषपरिहारार्थं सूत्रम्। एकपृथिवीजन्यानामपि वज्रवैडूर्यादिभावेन

वैचित्र्यदर्शनान्न दोष इत्यर्थः। स्वरूपवैचित्र्ये अश्मोदाहरणम्। धर्मवैचित्र्ये अर्थक्रियावैचित्र्ये च दृष्टान्तपरिग्रहायादिपदम्। तस्य पूर्वपक्षिदोषस्य अनुपपत्तिरित्यर्थः। धर्मवैचित्र्योदाहरणम् यथा चैकेति। अर्थक्रियावैचित्र्ये दृष्टान्तो यथा चैकस्येति।

इति इतरव्यपदेशाधिकरणम्

## ८. अधिकरणम्

### उपसहारदर्शनान्नेति चेन्नक्षीरवद्धि २–१–२४

असहायाद्ब्रह्मणो जगत्सर्वं ब्रुवन् समन्वयो विषयः। सः ब्रह्म नोपादानं कर्तृ वा असहायत्वादिति न्यायेन विरूध्यते न वेति संशयः। पूर्वमौपाधिकजीवब्रह्मभेदाद्धिताकरणादि दोषः परिहृतः इह तूपाधितोऽपि विभक्तमधिष्ठात्रादि नास्तीति प्रत्युदाहरणसंगत्या पूर्वपक्षः। लोके उपसंहारदर्शनात् अनेककारणानामेकस्मिन् कार्ये उत्पाद्ये उपसंहरणमुपसंहरः संनिपातः तद्दर्शनादित्यर्थः। ब्रह्म न कारणमसहाय त्वादिति पूर्वपक्षः। क्षीरवद्धीति पूर्वपक्ष्यनुमाने व्यभिचारः प्रदर्श्यते। चेतनत्वे सति असहायत्वादिति हेतू करणे तु-

### देवादिवदपि लोके २–१–२५

देवादिषु व्यभिचार इत्यर्थः। आदिपदात् तन्तूनाभपद्मिन्यादीनां परिग्रहः। कुलालादिवैलक्षण्यमेव दृष्टान्तेन विवक्षितम्। तथा च यथैकस्य कार्यजनने सामर्थ्यं तथैवान्यस्येति नियमाभावान्न दृष्टान्तबलेन प्रत्यवस्थानमिति। लोक्यते ज्ञायतेऽर्थोऽनेनेतिलोकः। मन्त्रार्थवादादिशास्त्रं वृद्धव्यवहारश्च। अभिध्यानं संकल्पः, नैष दोष इति। दृष्टान्तवैषम्यरूपः। हेतौ चेतनत्वमहंधीविषयत्वरूपं चित्तादात्म्यापन्नदेहसाधारणं ग्राह्यम्। नतु मुख्यात्मत्वम्। कुलाले साधनवैकल्यापत्तेः। असहायत्वञ्च चेतनस्य स्वातिरिक्तहेतुशून्यत्वम्। तदुभयं देहादिषु व्यभिचारि। देहस्य स्वान्तःपातित्वेन स्वातिरिक्तत्वाभावात्।

इति उपसंहारदर्शनाधिकरणम्

## ९. अधिकरणम्

### कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा २–१–२६

शास्त्रार्थपरिशुद्धय इति। शास्त्रार्थस्य परिशुद्धिः परिणामनिराकरणेन विवर्तदृढीकरणं तदर्थमधिकरणारम्भे प्रथममाक्षेपसूत्रमित्यर्थः। निरवयवाद् ब्रह्मणो जगत्सर्वं ब्रुवन् समन्वयो विषयः। सः यन्निरवयवं तन्न परिणामीति न्यायेन विरुध्यते नवेति संशयः। पूर्वाधिकरणोक्तक्षीरदृष्टान्तेन परिणामित्वभ्रमे तन्निरासात् कार्यकारणभावसंगतिः। ब्रह्म न परिणामि निरवयवत्वात्। निरवयवमपि ब्रह्म यदि परिणमेत तदा कार्यव्यतिरेकेण ब्रह्म न स्यात्। यदि परिणामार्थं ब्रह्म सावयवमभ्युपगम्येत तदाऽनुपपन्ननिष्कलं निष्क्रियमित्यादिश्रुतिकं स्यादिति पूर्वपक्षः।

### श्रुतेस्तु शब्दमूलत्वात् २–१–२७

श्रुतिबाध उच्यते। कृत्स्नप्रसक्तिर्नास्ति कुतः श्रुतेः। श्रुतौ जगदुपादानत्वस्य कार्यव्यतिरेकेण सत्त्वस्य च श्रूयमाणत्वाद्विवर्तोपादानत्वं ब्रह्मणो ज्ञायते। अतो नोक्तदोषः। ब्रह्मणः शब्दमूलत्वात् यथा-- शब्दं ब्रह्मणः कार्योपादानत्वं कार्यातिरेकेण सत्वं चेत्यर्थः।

### आत्मनि चैवं विचित्राश्च हि २–१–२८

निरवयवस्यापि ब्रह्मणो विवर्तोपादानत्वं सम्भवति स्वप्नसाक्षिवत्। आत्मनि स्वप्नदर्शिएवं ब्रह्मणीव विचित्राः सृष्टयः श्रूयन्ते। चकारेण मायाविदृष्टान्तः समुच्चीयते।

### स्वपक्षदोषाच्च २–१–२९

प्रधानवादेऽणुवादे च कृत्स्नप्रसक्त्यादिदोषः समान इति यश्चोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविनिर्णये इति न्यायेनानुद्भाव्य इत्यर्थः।

इति कृत्स्नप्रसक्त्यधिकरणम्

## १० अधिकरणम्

### सर्वोपेता च तद्दर्शनात् २–१–३०

मायाशक्तिमद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः। उक्तसमन्वयोऽशरीरस्य न मायेति न्यायेन विरुध्यते नवेति संशयः। अन्तर्याम्यधिकरणेऽशरीरस्यापि परमात्मनोऽविद्याशक्तियोगादन्तर्यामिता भविष्यतीत्युक्तम्। इह तु देहेन्द्रियरहितस्याविद्याशक्तिरेव न सम्भवतीति शङ्क्यते, नातोऽन्तर्याम्यधिकरणेन पौनरुक्त्यम्। तत्र विषयविषयिभावसंगतिमाह एकस्यापि - विचित्रशक्तियोगादिति। ब्रह्म जगत्कारणं न भवति शक्तिरहितत्वादिति पूर्वपक्षे सूत्रम्। सा देवता सर्वोपेता सर्वशक्तियुक्ता तथा श्रुतिप्रतिपादितत्वात् - सर्वकर्मा सर्वकाम इत्यादि।

### विकरणत्वान्नेति चेत्तदुक्तम् २–१–३१

ब्रह्म शक्तिरहितमशरीरेन्द्रियत्वादिति पूर्वपक्षः। तदुक्तम् - श्रुतेस्तु शब्दमूलत्वादिति श्रुतिबाधमाह - श्रुत्यवगाह्यमित्यादिना। तदुक्तं देवादिवदपि लोके इतयभिप्रायेणाह नच यथैकस्येति। निराकर्तव्यतर्कभेदान्न श्रुतेस्त्विति सूत्रेण गतार्थता। अनेन ग्रन्थेन पूर्वपक्षहेतोरप्रयोजकत्वमुच्यते। प्रतिषिद्धसर्वविशेषस्यापीत्यनेन स्वरूपासिद्धिः। मायाकल्पितरूपवत्त्वे प्रमाणं स चक्षुरिवेत्यादिश्रुतिः।

इति सर्वोपेताधिकरणम्

## ११. अधिकरणम्

### न प्रयोजनवत्त्वात् २–१–३२

परितृप्ताद्ब्रह्मणो जगत्सर्गवादी समन्वयो विषयः। सच ब्रह्म न विना प्रयोजनं सृजति अभ्रान्तचेतनत्वात्संमतवदिति न्यायेन विरुध्यते नवेति संशयः। पूर्वाधिकरणे सर्वशक्ति ब्रह्मेत्युक्तम्। शक्तस्यापि

प्रयोजनाभिसन्ध्यभावादकर्तृत्वमित्याक्षेपसंगत्या पूर्वपक्षः। ब्रह्म जगत्कारणं न भवति बुद्धिपूर्वकारित्वे सति प्रयोजनानपेक्षत्वात्। यदीयमपि प्रवृत्तिरित्यनेन हेतूच्छित्तिरूपानुकूलतर्कः प्रदर्श्यत इति पूर्वपक्षसूत्रम्।

## लोकवत्तु लीलाकैवल्यम् २–१–३३

लोकगतलीलाकर्तरि राज्ञि पूर्वपक्ष्यनुमानस्य व्यभिचार इत्यर्थः। लीला विलासः। सच द्विविधः। उद्यानविहारादिरूपः सप्रयोजनविलासः। सुखोद्रेके हासगानादिरूपश्च। हासगानादिषु किमपि प्रयोजनं न सम्भाव्यते। सप्रयोजनविलासव्यावृत्तये कैवल्यपदमिति व्याचष्टे यथा लोक इति। लीलापदस्य क्रियार्थत्वमादाय दृष्टान्तमाह - यथा चोच्छ्वासेति। प्रयोजनोद्देशक्रियाव्यावृत्तये कैवल्यपदम्। (बुद्ध्यपराधो विवेकाभावः) विलास स्वाभाविकयादृच्छिकप्रवृत्तिषु प्रेक्षावत्प्रवृत्तित्वरूप हेतोः सत्त्वेऽपि प्रयोजनोद्देशपूर्वकत्वरूप साध्याभावेन व्यभिचारान्नानेन तर्केण श्रुतिबाधः। ननु यद्बह्वायाससाध्यं तत्प्रयोजनाभिसन्धिपूर्वकमिति व्याप्तिरभिमता, तथा च न व्यभिचार इत्याशङ्कायामाह यद्यप्यस्माकमियमिति। अस्मदाद्यपेक्षया बह्वायाससाध्यत्वेऽपिब्रह्मापेक्षया नेति न प्रयोजनाभिसन्ध्यापात इत्यर्थः। परमार्थ समाधानमाह नचेयं परमार्थविषयेति। सृष्टेराविद्यकत्वान्न प्रयोजनप्रश्न इत्यर्थः।

इति न प्रयोजनवत्त्वाधिकरणम्

## १२. अधिकरणम्

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति २–१–३४

निरवद्याद्ब्रह्मणो जगत्सर्वं ब्रुवन् समन्वयो विषयः। यो विषमसृष्टिकारी स सावद्यः ब्रह्म च विषमं सृजतीति न्यायेनोक्त समन्वयो विरुध्यते नवेति संशयः। पूर्वं लीलया स्रष्टृत्वमुक्तम्। इदानीं तदेव न सापेक्षस्य सम्भवति, अनीश्वरत्वप्रसङ्गात्। निरपेक्षत्वे रागादिमत्त्वमित्याक्षेपादाक्षेपसंगतिः। ब्रह्म विषमकारि न भवति

निर्दोषत्वात्, यदि ब्रह्म विषमकारि स्यात्तर्हि सदोषं स्यात्, वैषम्यनैर्घृण्ये दोषः इति पूर्वपक्षः। यो विषमकारी स सदोषः खलवदिति व्याप्तौ धर्माधर्मानपेक्षत्वमुपाधिः। युक्तवादित्ववचनरूपविषमकारिणि सभ्ये निग्रहानुग्रहरूपविषमकार्यकारिणि सभापतौ च व्यभिचारः। यः सापेक्षः सोऽनीश्वर इति व्याप्तिरपि सेवापेक्षे राज्ञि व्यभिचरिता। विषमकर्मणि प्रेरकत्वमपि तत्तत्प्राणिकर्मवासनावशादेवेति न वैषम्यम्। वस्तुतोऽस्मन्मते सृष्टेर्मायिकत्वे न पूर्वपक्ष्यनुमानं मायाकारे व्यभिचरितम्।

## न कर्माविभागादिति चेन्नानादित्वात् २–१–३५

सदेव सोम्येत्यादिश्रुत्या सृष्टेः प्रागविभागावधारणान्नास्ति कर्म। तथा चाद्यसृष्टौ वैचित्र्यनिमित्तं कर्म नास्तीति शङ्कायां नानादित्वादिति समाधानम्। समन्वयसूत्रेऽन्धपरम्परैषाऽनादित्वकल्पनेति तत्त्वदृष्ट्या। अन्धत्वं तात्त्विकप्रमाणाबोध्यत्वम्। अत्रानादौ संसारे इति व्यवहारदृष्ट्येत्य विरोधः।

## उपपद्यते चाप्युपलभ्यते च २–१–३६

यदि संसार आदिमान् स्यात् पुनरुत्पत्तिर्मुक्तकः स्यादित्युपपत्तिः। उपलभ्यते श्रुतिस्मृत्योः संसारस्यानादित्वम्। रागादीति = रागद्वेषमोहाः क्लेशाः। पुरुषं क्लिश्नन्तीति क्लेशाः। तेषां या वासना सूक्ष्मावस्था तयाक्षिप्तं सहकृतं कर्म तदपेक्षयेत्यर्थः।

इति वैषम्यनैर्घृण्याधिकरणम्

## १३. अधिकरणम्

## सर्वधर्मोपपत्तेश्च २–१–३७

निर्गुणब्रह्मणो जगदुपदानत्ववादी समन्वयो विषयः। स किं यन्निर्गुणं तन्नोपादानं गन्धवदितिन्यायेन विरुध्यते नवेति संशयः।

सगुणत्वाभावान्नोपादानत्वमिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। यदुपादानं तत्सगुणमिति व्याप्तेः रूपे व्यभिचारः। तत्र निर्गुणत्वव्यापकोपादानत्वाभावः किं परिणामित्वाभाव उत विवर्तोपादानत्वाभावः। आद्ये इष्टापत्तिः, न द्वितीयः अनित्यत्वांद्यारोपोपादाने जात्यादौ व्यभिचारादिति सिद्धान्तः। तस्मान्न कथमपि समन्वयस्य विरोध इति सिद्धम्।

इति श्रीगोडासुब्रह्मण्यशास्त्रिविरचितायां

भाष्यप्रदीपिकायां

द्वितीयाध्यायस्य प्रथमः पादः॥



# अथ द्वितीयाध्यायस्य द्वितीयःपादः।

## अधिकरणम् १

### रचनानुपपत्तेश्च नानुमानम् २-२-१

अस्य शास्त्रस्य तत्त्वनिर्णयकथारूपत्वात् तत्त्वनिर्णयस्य च परमतेंष्वश्रद्धां विनाऽसिद्धेः, अश्रद्धायाश्च तेषु भ्रान्तिमूलकत्वनिश्चयं विनाऽसम्भवात् तदर्थत्वादस्य पादस्य शास्त्रे संगतत्वम्। प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तो विषयः। स किं प्रमाणमूलो भ्रान्तिमूलो वेति संशयः। स्वसिद्धान्तज्ञानस्य परमतनिरासं प्रत्युपजीव्यत्वात् पादसंगतिः। पूर्वपक्षे प्रमाणमूलमतविरोधादुक्तश्रुत्यर्थसमन्वयासिद्धिः फलम्। सिद्धान्ते तत्सिद्धिः। श्रौतसमन्वयदार्ढ्यार्थत्वादस्य पादस्य श्रुतिसंगतिः। तत्र सांख्यानां प्रधानानुमानानि पञ्च।

भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य।
कारणमस्त्यव्यक्तम्।

१. भेदा अव्यक्तमूलकाः परिमितत्वाद्घटवत्। (अव्यापकत्वादित्यर्थः)
२. जगत् सुखदुःखमोहात्मकप्रकृतिकं सुखदुःखमोहात्मनान्विततत्वात्। यथा मृदात्मनान्वितो घटो मृत्प्रकृतिकः। सुखदुःख मोहाः कार्याणां प्रकृतयः तेषु प्रत्येकमन्विततत्वे सति अनेकवृत्तित्वात् मृदादिवत्, आकाशादयः सुखादिप्रकृतिकाः कार्यत्वाद्घटवदिति।

३. कार्यप्रवृत्तिः कारणशक्तिपूर्विका कार्यप्रवृत्तित्वात् घटप्रवृत्तिवत्।
४. कार्यजन्म यत्किञ्चित्सूक्ष्मावस्थापूर्वकं जन्मत्वात् घटादिजन्मवत्।
५. कार्यप्रलयः किञ्चिदाधारकः प्रलयत्वात् घटप्रलयवत्। विमतं संसृज्यमानप्रकृतिकं परिमितत्वात् मृत्सलिलादिसंसृष्ट वस्तुभिरारब्ध मिवाङ्कुरादि। (शा.द.)

तत्र द्वितीयहेतुमुपपादयति सर्व एव बाह्याध्यात्मिकाभेदा इति। भेदाः विकाराः।

किमनुमानैरचेतनप्रकृतिकत्वं जगतः साध्यते उत स्वतन्त्राचेतनप्रकृतिकत्वम्। आद्ये सिद्धसाधनम्, अस्माभिरपि मायाया अङ्गीकारात्। द्वितीये साध्याप्रसिद्धिरित्याह यदि दृष्टान्तबलेनैवेति। प्रधानं जगत्कारणं न भवत्यचेतनत्वे सति चेतनानधिष्ठितत्वात्। सारथ्यनधिष्ठितरथवत्। यत्कारणमचेतनं तच्चेतनाधिष्ठितमिति व्यतिरेकव्याप्तावप्रयोजकशङ्कायामनुकूलतर्कपरं रचनानुपपत्तेरिति सूत्रम्। यदि प्रधानं चेतनानधिष्ठितं स्यात्तर्हि विचित्रजगद्रचयितृ न स्यादिति तर्कः। यच्चेतनानधिष्ठितमचेतनं तन्न कार्यकारीति व्याप्तिमुक्ततर्कमूलभूतामाह लोष्ठपाषाणादिष्विति। अनादिजड प्रकृतिश्चेतनाधिष्ठिता परिणामित्वान्मृदादिवदित्याह मृदादिष्वपीति। ननु मृदादिदृष्टान्तेऽचेतनत्वं चेतनाधिष्ठितत्वं द्वयमप्यस्ति तत्र परिणामित्वहेतोर चेतनत्वमेव व्यापकं मृदादिस्वरूपत्वेनान्तरङ्गत्वात् नतु चेतनाधिष्ठितत्वम्। तस्य मृदादिबाह्यकुलालादिसापेक्षत्वेन बहिरङ्गत्वात्, तथा च परिणामित्वेऽपि मूलप्रकृतेरचेतनत्वधर्मेणैव योगो न चेतनाधिष्ठितत्वेनेत्याशङ्क्य निषेधति न चेति। महानसदृष्टान्तेप्यन्तरङ्गस्यापि महानसस्वरूपस्य धूमव्यापकत्वं नास्ति तद्भिन्नस्य बहिरङ्गस्यापि वह्नेस्तदस्तीत्यरङ्गत्वं व्यापकत्वे न प्रयोजकमिति समाधानाशयः। बाधकाभावाच्छ्रुत्यनुग्रहाच्चैवमङ्गीकार्यमित्याह नचैवं सतीति। सुखदुःखमोहान्वित्वरूपद्वितीयहेतोरसिद्धिमाह अन्वयाद्यनुपपत्तिरित्यादिना- नहि बाह्याध्यात्मिकेति। शब्दादीनां सुखादिनिमित्तत्वेन नैमित्तिकसुखाद्यात्मकत्वमसिद्धमिति भावः। परिमितत्वरूपप्रथमहेतुः देशपरिच्छेदरूपत्वे वस्तुपरिच्छेदरूपत्वे च सत्वादौ व्यभिचारी। कालपरिच्छेदरूपत्वे सांख्यमते हेत्वप्रसिद्धिः काल-अनभ्युपगमात्। तृतीयहेतुश्चेतनशक्तिपूर्वकत्वेनान्यथासिद्धः। चतुर्थपञ्चम हेतू मायाविश्रान्तत्वेन ब्रह्मविश्रान्तत्वेन वान्यथासिद्धौ।

कारणशक्तिर्विद्यमानविषया विषयित्वात् ज्ञानवत्। कारणत्वं विद्यमानप्रतियोगिकं सप्रतियोगिकत्वाद्वाच्यत्ववत्। प्रलयकालः कार्यवान् कालत्वात् स्थितिकालवदिति सांख्यानुमानानि। (शा.द) किं सत्त्वादीनां प्रकृतित्वमात्रं साध्यमुत चेतनानधिष्ठितप्रकृतित्वम्। आद्येसिद्धसाधनम्। द्वितीये विरुद्धत्वं मृदादीनां चेतनाधिष्ठितत्वव्याप्तेरिति। अनुमीयत इत्यनुमानं प्रधानं चेतनानधिष्ठितमेव कार्योपादानमिति न रचनायाः संस्थानस्य कार्यस्यानुपपत्तेरिति सूत्रार्थः।

## प्रवृत्तेश्च २–२–२

यदि प्रधानं चेतनानधिष्ठितं स्यात्तर्हि साम्यावस्था प्रच्युतिरूपप्रवृत्तिमत्स्यात्। चेतनमचेतनासंबद्धं कार्यं न करोतीति व्याप्तेः। केवलचेतनस्य कर्तृत्वं न सम्भवतीति सांख्य आक्षिपति – ननु चेतनस्यापीति। चेतने केवले प्रवृत्त्यभावेऽपि प्रवृत्तिहेतुत्वमस्तीति सिद्धान्तयति। चेतनः प्रवर्तको न भवति प्रवृत्तिरहितत्वादिति शङ्कते ननु तवेति। अयस्कान्ते रूपे च व्यभिचारेण दूषयति अयस्कान्तवदिति। चेतनः प्रवर्तको न भवति प्रवृत्यन्तराभावादित्याशङ्क्य स्वरूपासिद्ध्या दूषयति एकत्वादित्यादिना।

## पयोऽम्बुवच्चेत्तत्रापि २–२–३

प्रधानं जगत्कारणं न ,अचेतनत्वे सति चेतनानधिष्ठितत्वादित्यनुमानस्य क्षीरे जले व्यभिचारमाशङ्कते पयोऽम्बुवदिति। तत्रापि चेतनाधिष्ठितत्वस्यानुमानेन साधनान्न व्यभिचार इति समाधिः।

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् २–२–४

प्रधानं यदि जगत्कारणं स्यात्तर्हि नियतप्रवृत्तिनिवृत्तिमन्न स्यात् अचेतनत्वे सति स्वव्यतिरिक्तप्रवर्तकनिवर्तकानपेक्षत्वात्। प्रधानं स्वव्यतिरिक्तप्रवर्तकनिवर्तकानपेक्षं स्वव्यतिरिक्तप्रवर्तकनिवर्तकाभावात्।

पुरुषस्योदासीनत्वात्। प्रधानव्यतिरेकेण सहकार्यन्तरस्यानवस्थितेरित्यर्थः। अनपेक्षत्वात्-अनपेक्षत्वाभ्युपगमान्नियतप्रवृत्तिनिवृत्ती न स्याताम्।

## अन्यत्राभावाच्च न तृणादिवत् २-२-५

यत्कारणमचेतनं तच्चेतनाधिष्ठितमिति व्याप्तौ सत्प्रतिपक्षानुमाने क्षीराद्याकारपरिणामितृणादौ व्यभिचार शङ्कायां धेन्वादिरूपचेतनाधिष्ठितत्वं तत्रापि वर्तत इति तन्निरासः। अन्यत्र तृणादीनां क्षीराद्यात्मना परिणामे, अभावात्- चेतनाधिष्ठानाभावात्, प्रधानस्यापि न चेतनापेक्षेति चेत् तत्रापि धेनुचैतन्यापेक्षाऽस्तीति समाधानम्। परिमितत्वहेतुः सावयवत्वेन सोपाधिकः क्रियाद्यन्तर्भावेण साधनाव्यापकत्वात्। विषयित्वमतीतादिज्ञानेऽनैकान्तिकम्। सप्रतियोगिकत्वमभावे व्यभिचारि। कालत्वं बाधितं प्रलये कार्याभावस्य धर्मिग्राहकप्रमाणप्रमापित्वात्।(शा.द.)

## अभ्युपगमेऽप्यर्थाभावात् २-२-६

यदि प्रधानं कारणानपेक्षिकारणं स्यात् (औचित्यात्) जीवीयप्रयोजनानपेक्षमपि कार्यकारि स्यात्। अनपेक्षस्वभावत्त्वात्। अर्थाभावात् - प्रयोजनापेक्षाभाव प्रसङ्गादित्यर्थः। चेतनानपेक्षत्वमेव केवलमुच्यत इति शङ्कते स यदि ब्रूयादिति। यदि प्रधानं प्रयोजनापेक्षं कार्यं कुर्यात् तर्हि जीवीयसार्वदिकभोगापेक्षं कार्यं कुर्यात्, अपवर्गापेक्षं कार्यं कुर्यात्, स्वकीयौत्सुक्यनिवृत्त्यर्थं वा जीवीयौत्सुक्यनिवृत्त्यपेक्षं वा कार्यं कुर्यादिति प्रतिकूलतर्कः। आपाद्याभावादापादकाभावः। (प्रधानस्य चेतनानधिष्ठितत्वं प्रयोजनापेक्षकारित्वञ्च सांख्यैरभ्युपगम्यते) यदि प्रधानं जगत्कारणं न स्यात् तर्हि व्यर्थदृक्शक्तिसृष्टिशक्तिकं स्यादिति शङ्कते। दृक्शक्तीति। यदि जगत् सृष्टिःदृष्टिशक्तिसर्गशक्त्यपेक्षा स्यात्तर्हि सार्वदिकी स्यादिति समाधत्ते तर्हीति।

## पुरुषाश्मवदिति चेत्तथापि २–२–७

सत्प्रतिपक्षानुमाने हेत्वसिद्धिः पुरुषस्य सत्वात्। पुरुषस्य प्रवृत्तिमत्वापादने तद्वारणाय पुरुषाश्मवदिति दृष्टान्तः प्रवृत्त्यभावेऽपि प्रवर्तकत्वमस्तीति। पुरुषः पङ्गुः, अश्मा अयस्कान्त इति पूर्वपक्षः। चेतनाधिष्ठितमेवाचेतनं कार्यं करोतीति चेदपि नालौकिक ईश्वरः कल्पनीयः। अपि तु क्षेत्रज्ञाधिष्ठितस्यैव प्रधानस्य कार्योत्पादकता भविष्यतीति शङ्काशयः। तथापि क्षेत्रज्ञस्य प्रवर्तकत्वं न सम्भवति प्रवृत्तिरहितत्वात्।

सांख्याभिमतः प्रवर्तको न भवति प्रवृत्तिरहितत्वात्। सन्निधानात् प्रवर्तकत्वे नित्यं प्रवर्तकः स्यादित्यनिष्टापादनम्।

## अङ्गित्वानुपपत्तेश्च २–२–८

प्रधानस्य कूटस्थनित्यत्वाभ्युपगमे दूषकमिदं सूत्रम्। परिणामिनित्यत्वाभ्युपगमे तु प्रवृत्तेश्चेति सूत्रं प्रवृत्तम्। क्षोभयितुः = साम्यावस्थातः प्रच्युतिसम्पादकस्य।

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् २–२–९

कार्यानुसारेण गुणस्वभावस्वीकारेण साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा इति शङ्कायां तथापि ज्ञशक्ति वियोगात् रचनानुपत्त्यादयः पूर्वोक्त दोषाः प्रसज्येरन्निति। वैषम्योपगमयोग्यत्वेऽपि गुणानां निमित्ताभावान्न वैषम्यं स्यात्। निमित्तं विनापि वैषम्यभाक्त्वे सर्वदा वैषम्यं स्यादिति।

## विप्रतिषेधाच्चासमञ्जसम् २–२–१०

सांख्याभ्युपगमस्य परस्परविप्रतिषेधात्तन्मतमसमञ्जसमित्यर्थः। सांख्य आशङ्कते अत्राहेति। ब्रह्मणः सर्वात्मकत्वे तप्यतापकभावो

न स्यात् तप्यतापकयोर्भेदावश्यकत्वात् तापो दःखम्, तप्यो जीवः, तापकः संसारः। नचोपादानैक्येऽप्युपादेययोर्भेदाद्भेदव्यवहार उपपद्यते। वह्नेरैक्येप्यौष्ण्यप्रकाशयोरिवेति वाच्यम्। तथा सति वह्नेरिव ताभ्यामात्मनो मोक्षो न स्यादित्याह यदि चैताविति। एवमद्वैतिमते मोक्षासंभवमुक्त्वा स्वमते तदुपपत्तिमाह जात्यन्तरभावे इति। जात्यन्तरभावो भेदः। औपनिषदर्शनासामञ्जस्यं निषेधति नेति। किं वस्तुतस्तप्यतापकविभागानुपपत्तिरुच्यते व्यवहारतो वा। आद्ये इष्टापत्तिः द्वितीये नानुपपत्तिः व्यवहारतो भेदस्वीकारात्। वस्तुतस्तप्यतापकविभागानुपपत्तिः सांख्यमतेऽपीति उभयोः साम्यम्। अथ तन्मते पारमार्थिकं तप्यत्वं तर्हि मोक्ष एवोपपादयितुं न शक्यत इति खण्डनाशयः। सनिमित्तसंयोगापेक्षत्वात् = निमित्तं तमस उद्रेकोऽदर्शनं तेन सहितः संयोगः पुरुषस्वामित्वरूपः तदपेक्षत्वादित्यर्थः।

इति रचनानुपत्यधिकरणम्

## २. अधिकरणम्

### महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् २-२-११

इदं स्वमतस्थापनात्मकमधिकरणम्। यद्यपीदं प्रथमपादे संगतम्। तथापि पूर्वत्र प्रधानगुणानन्वयाज्जगद्यदि न तत्प्रकृतिकं ब्रह्मगुणचैतन्यानन्वयान्न ब्रह्मप्रकृतिकमिति दृष्टान्तसंगतिलाभादत्र लिखितम्। चेतनाद्ब्रह्मणो जगत्सर्गवादी वेदान्तसमन्वयो विषयः। स किं यः समवायिकारणगुणः स कार्यद्रव्ये स्वसमानजातीयगुणारम्भकः तन्तुशौक्ल्यवदिति न्यायेन विरुध्यते नवेति सन्देहः। जगत् चेतनोपादानकं न भवति चैतन्याभावात्। यत् यद्धर्माभाववत् तत् तद्धर्मावच्छिन्नोपादानकं न भवति।।यथा तन्तुत्वाभाववान् घटः तन्तुत्वावच्छिन्नोपादानको नेति पूर्वपक्षः। यद्यपि सिद्धान्ते नित्यं ज्ञानं ब्रह्मस्वरूपं न गुणः तत्तादात्म्यं घटः स्फुरतीति सिद्धमेव वृत्तिरूपज्ञानन्तु अन्तःकरणपरिणामविशेषो द्रव्यं नात्मगुणः। अतो ब्रह्मोपादानकत्वे प्रपञ्चस्य ब्रह्मगुणस्य प्रपञ्चेऽनुवृत्तिः स्यादिति

दोषो निरवकाश एव तथापि तार्किकप्रक्रियामभ्युपेत्य तद्रीत्यैव समाधानं वक्तुमधिकरणम्। सिद्धान्ते द्व्यणुकत्र्यणुकान्तर्भावेण व्यभिचारः सूत्रेणोच्यते। तद्धर्मोत्पत्तिबाधकाभावविशिष्ट यद्धर्माभाववद्यत् तत्तद्धर्माव च्छिन्नानुपादानकमिति व्याप्तिस्वरूपमभिप्रेत्य अथ मन्यते इत्यादिशङ्का तथा च पारिमाण्डल्योत्पत्तौ बाधकसत्वान्न द्व्यणुकाद्यन्तर्भावेण व्यभिचार इत्यभिप्रायः। समाधत्ते मैवं मंस्थाः इति। विजातीयधर्मोत्पत्तिव्यग्रत्वाभाव विशिष्टयद्धर्मजातीयधर्माभाववत्वं यत्र तत्र तद्धर्मावच्छिन्नोपादानकत्वाभाव इति व्याप्त्यभिप्रायेण शङ्कते न चेति। यत्र यत्र व्यग्रत्वाभावविशिष्टकारण गतगुणत्वं तत्र कार्यगतस्वसमानजातीयगुणारम्भकत्वमिति व्याप्तौ परमाणुपरिमाणे व्यग्रत्वं नास्ति अन्यहेतुकत्वात् परिमाणस्येत्यत्र प्रमाणतया सूत्राणि प्रदर्शयति कारणबहुत्वादित्यादि। तथा च पारिमाण्डल्यमपि बहुत्वादिवत् कारणगतत्वाविशेषात् समानगुणारम्भकं स्यादित्यर्थः। पूर्वोक्ताया व्याप्तेः संयोगे व्यभिचारमाह -संयोगाच्चेति। ननु कारणगुणः स्वसमानगुणारम्भक इति व्याप्तेः सामान्यगुणेषु पारिमाण्डल्यादिषु च व्यभिचारेऽपि कारणगतविशेषगुणत्वं यत्र तत्र स्वसमानजातीयविशेषगुणार म्भकत्वमिति व्याप्तौ बाधकाभावः। एवञ्च कार्ये चैतन्याभावाच्चेतनस्य कारणत्वमेव नास्तीति चेन्न। अस्या अपि व्याप्तेः चित्ररूपारम्भकशुक्लादिषु व्यभिचारात्। चैतन्यस्यात्मत्वेन गुणत्वाभावाच्च। तथाच ह्रस्वपरिमण्ड लाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घाणुवच्चेतनादचेतनं जायत इति सूत्रयोजना। परमाणुगा न परिमण्डलता द्व्यणुके करोति परिमण्डलताम्। द्व्यणुकाणुता च महति त्र्यणुके जनयेन्न तदणुतामपराम्॥(शा.द.)

इति महद्दीर्घाधिकरणम्

# ३.अधिकरणम्

## उभयथापि न कर्मातिस्तदभावः २–२–१२

स्वानुगतैः समवायेन स्वाधारभूतैः द्व्यणुकादिक्रमेण परमाणुभिर्जगदारभ्यत इति वैशेषिकसिद्धान्तो विषयः। सकिं मानमूलो भ्रान्तिमूलो वेति संशयः। प्रधानं चेतनानधिष्ठितत्वान्न कारणं चेत्तर्हि अणवस्तदधिष्ठिता भवन्तु कारणमिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। विमतं सावयवं क्षित्यादिकं स्वन्यूनपरिमाणसंयोगसचिवानेकद्रव्यारब्धं कार्यद्रव्यत्वाद्घटादिवदिति पूर्वपक्षिणः प्रयोगः। जगन्नित्यत्ववादात् कार्यद्रव्यत्वरूपहेत्वसिद्धिरिति वदन्तं प्रत्याह – सर्वं चेदमिति। विमतमाद्यन्तवत् सावयवत्वात् पटवत्। अप्रयोजकशङ्कां वारयति न चाकारणेन कार्येण भवितव्यमिति। तत्र सिद्धान्तसूत्रम् उभयथापीति। प्रलये व्यक्तानां परमाणूनामन्यतरकर्मणा उभयकर्मणा वा संयोगो वाच्यः कर्मणश्च निमित्तं प्रयत्नादिकम्। तत्राणुकर्मणो दृष्टं निमित्तमभ्युपगम्यते नवा, अनभ्युपगमे न कर्म अभ्युपगमे तस्य प्रयत्नस्याभिघातस्य वा सृष्ट्युत्तरकालीनत्वादित्युभयथापि न कर्मतदभावात् संयोगपूर्वकद्व्यणुकादिसर्गाभावः। अभिघातादित्यत्रादिपदेन नोदनसंस्कारगुरुत्वद्रवत्वानि गृह्यन्ते। दृष्टनिमित्ताभावेऽप्यदृष्टं भवत्विति शङ्कते अथादृष्टमिति। तददृष्टमात्मसमवायि वा अणुसमवायि वा उभयथापि न कर्म तस्याचेतनस्य चेतनानधिष्ठितस्याप्रवृत्तेः अप्रवर्तकत्वाच्च कर्माभावोऽतः आत्मनः शरीराभावेन चैतन्याभावात् संयोगाभावे सर्गाभावः। अस्त्यणूनां संबन्ध इति। सम्बन्धः संयोगो नियामकाभावादिति। न चादृष्टपरिपाकस्य नियामकत्वं सम्भवति, सिद्धान्तिमते भूतसूक्ष्मरूपस्यादृष्टस्य फलादिवत् परिपाकसम्भवेऽपि फलमत उपपत्तेरिति सूत्रे वक्ष्यमाणरूपस्येश्वरकोपप्रसादरूपस्यादृष्टस्योद्रेकरूपपाकस्य सम्भवेऽपि तार्किकमते आत्मगुणरूपस्यादृष्टस्य पाकासम्भवात्। इत्थं संयोगस्य हेतुत्वं खण्डयित्वा स्वरूपं खण्डयति स्वरूपञ्चेति। षट्केन युगपद्योगात् परमाणोः षडंशता। तेषामप्येकदेशत्वेपिण्डः

स्यादणुमात्रक इति। संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथापि न कर्म अतस्तदभावः सर्गाभावः प्रलयाभावश्चेत्यभिप्रायेण यथा चादिसर्गे निमित्ताभावादित्यादि भाष्यम्। परमाणुषु व्याप्यवृत्तिसंयोगजननार्थमव्याप्य वृत्तिसंयोगजननार्थं वा उभयथापि न कर्म सम्भवतीति योजना। प्रलयोपयोगिविभागसिद्ध्यर्थं दृष्टकारणकमदृष्टकारणकं वा उभयथापि न कर्म सम्भवतीत्यपरा सूत्रयोजना। सिद्धान्त्यनुमानं चेत्थम् — सर्गाद्यकालीनद्व्यणुकं स्वन्यूनपरिमाणसंयोगसचिवानेकद्रव्यारब्धत्वाभाव वत् संयोगारभ्यत्वाभावात्। द्व्यणुकं संयोगारभ्यत्वाभाववत् कर्माभाववत्सम वायिद्रव्यकत्वात्। द्व्यणुकं कर्माभाववत्समवायिकं कर्मनिमित्ताभाववत्सम वायिकत्वात्। द्व्यणुकं कर्माभाववत्समवायिकं संयोगायोग्यपरमाणुकारणक त्वात्। अदृष्टं भोगसिद्ध्यर्थं न प्रलयसिद्ध्यर्थमिति भाष्यम्। प्रलयेऽपि वेदान्तिमते सुखानुभवो वर्तत इति नैय्यायिकमते तस्यासम्भवात् प्रलयसिद्ध्यर्थादृष्टं नैव वक्तुं शक्यम्। तस्मानुपपन्नः परमाणुकारणवादः।

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः २–२–१३

समवायाभ्युपगममालम्ब्य परमाणुकारणादो न सम्भवति साम्यप्रयुक्ता नवस्थितेरिति सूत्रार्थः।

द्व्यणुकं परमाणुनिरूपितसमवायसम्बन्धावच्छिन्नारभ्यतावन्न परमाणु समवायाभावात्

द्व्यणुकं परमाणुसमवायाभाववत् तत्सम्बन्धाभावात्। यदि द्व्यणुके परमाणुसमवायसम्बन्धः स्यात्तदाऽप्रामाणिकानन्तपदार्थसम्बन्धकल्पनावत् स्यात्। समवायः स्वातिरिक्तेन सम्बन्धेन सम्बन्धिना सम्बध्यते पदार्थान्तरत्वात् संयोगवदिति समवायस्य सम्बन्धान्तरानुमानम्। इह प्रत्ययेन सिद्ध्यन् समवायः सम्बन्धान्तरनिरपेक्ष एव सिद्ध्यतीति समवायरूप धर्मिग्राहकमानेन बाधितमिति पूर्वपक्षयति – नन्विह प्रत्ययेति। समवायो यदि सम्बन्धान्तरनिरपेक्षः स्यात्तर्हि सम्बन्धानपेक्षसं

योगकः स्यात्। अर्थान्तरत्वात् – अनुयोगि प्रतियोगिभिन्नत्वात् (संयोगः सम्बन्धान्तरापेक्षः गुणत्वात् रूपवदित्याशङ्कते) समवायसम्बन्धान्तरसाधकानुमाने गुणत्वमुपाधिरिति शङ्कते नच गुणत्वादिति। अस्मन्मते संयोगस्यागुणत्वन्न साध्यव्यापकत्वमुपाधेरिति समाधत्ते गुणपरिभाषायाश्चातन्त्रत्वादिति। अपेक्षाकारणस्य–पदार्थान्तरत्वस्य।

## नित्यमेव च भावात् २–२–१४

अनेन सामान्यतः परमाणूनां कारणत्वं निराक्रियते। द्व्यंणकादिकारणत्वेनाभ्युपगम्यमानाः परमाणवो यदि प्रवृत्ति स्वभावाः स्युः तर्हि नित्यं प्रवृत्तिमन्तः स्युः यदिनिवृत्तिस्वभावाः स्युः तर्हि निवृत्तिमन्तः स्युः। उभयस्वाभावाः स्युरिति विरुद्धम्। अनुभयस्वभावा यदि स्युः तर्ह्यदृष्टादिनिमित्तत्वे नित्यं प्रवृत्तिमन्तः स्युः। अदृष्टादीनामनिमित्तत्वे नित्यं प्रवृत्तिरहिताः स्युरिति परमाणूनां कारणत्वमेव न सम्भवति। प्रवृत्तिस्वभावा इत्यस्य कार्यजननस्वभावा इत्यर्थः। निवृत्तिस्वभावाःपारिमाण्डल्यवदकारणत्व स्वभावाः।

## रूपादिमत्वाच्च विपर्ययो दर्शनात् २–२–१५

द्व्यणुककारण त्वेनाभिमताः परमाणुत्वाभाववन्तो नित्यत्वाभाववन्तः स्वकारणनिरूपितस्थौल्यवन्तश्च रूपादिमत्त्वात् पटवत्।

सदकारणवन्नित्यम्द्व्यणुककारणत्वेनाभिमताः नित्याः भावत्वे सत्यकारणकत्वादिति सत्प्रतिपक्षमाशङ्कते यच्चनित्यत्वे इति।

नित्यत्वप्रतिषेधः सप्रतियोगिकोऽभावत्वादिति नित्यत्वस्य क्वचित्सिद्धौ कार्यमनित्यमिति कारणभूतपरमाणुषु नित्यत्वं सिद्ध्यतीति प्रतिपादकमनित्यमिति च विशेषतः प्रतिषेधभाव इति सूत्रमन्यथासिद्ध्या दूषयति यदपीति। नित्यत्वसाधकमविद्येति सूत्रं द्विधा खण्डयति यदपीति। परमाणवो नित्याः अप्रत्यक्षकारणत्वादिति द्व्यणुके व्यभिचारि।

आरम्भकद्रव्यशून्यत्वे सतीति हेतुविशेषणे विशेष्यवैय्यर्थ्यमकारणवत्वादित्य नेन पुनरुक्तं च। परमाणवो नित्याः नाशकानुपलम्भादिति द्वितीयमर्थमाशङ्कते अथापीति, निराचष्टे नेति। अवयवसंयोगे द्रव्यान्तरारम्भ उत्पत्तिरिति यदि मतं तर्हि पूर्वपक्षयुक्तं समीचीनं स्यात्। परन्तु न तथा। संयुक्ततन्त्वन्यपटानुपलम्भात्।किन्तु कारणस्यावस्थाविशेष एव कार्यम्। तस्य च विभागकारणनाशमात्रनाश्य त्वमिति न। कालादिनिमित्तेनावस्थाविलयेनापि कारणस्वरूपेणावस्थिते रिति। प्रथमसूत्रेण संयोगसचिवत्वं द्वितीयसूत्रेण समवायावच्छिन्नकार्यत्वम नेन सूत्रेण नित्यपरमाणूनां कारणत्वं च खण्डितम्।

## उभयथा च दोषात् २–२–१६

यद्यस्मादधिकगुणवत्तत्तस्मात् स्थूलमिति व्याप्तिः एवं स्थिते पार्थिवपरमाणुरधिकगुणः तत एकैकन्यूनगुणा जलादिपरमाणव इति कल्प्यते नवा। यदि कल्प्यते तर्हि पार्थिवादिपरमाणूनामुपचितगुणत्वान्मूर्त्युपचयप्र सङ्गः। तथा च परमाणुत्वभङ्गः। पार्थिवोऽणुर्जलीयपरमाणोः स्थूलोऽधिकगुणत्वाद्घटवदिति प्रयोगः तत्राप्रयोजकशङ्कां निरस्यति नचान्तरेणेति। दृष्टविरोधापत्तेर्नाप्रयोजकतेत्यर्थः। अकल्पने सर्वेषां परमाणूनां साम्यसिद्धये सर्वेषामेकगुणत्वं चतुर्गुणत्वं वा वक्तव्यम्। उभयथापि दोषः। जले रसादीनामनुपलब्धिः स्यादथवा जलेऽपि गन्धोपलब्धिः स्यादिति दोषः परमाणुवादे।

तत्राकारणकत्वमसिद्धमिति समाधत्ते तदपीति

## अपरिग्रहाच्चात्यन्तमनपेक्षा २-२-१७

चकारार्थं प्रपञ्चयति अपि चेत्यादिना। गुणादयो न द्रव्यधर्माः ततोऽत्यन्तभिन्नत्वात् शशकुशादिवत्। यदि १. गुणादीनां द्रव्याधीनत्वं तर्हि गुणादयो द्रव्या भिन्नाः द्रव्याधीनत्वात् यद्यस्माद्भिन्नं तन्न तदधीनम्, यथा शशभिन्नः कुशः। यद्यपि तदधीनत्वं तद्धर्मत्वं तच्च धूमे नास्ति,



९

अग्निं विनापि भावात् तथापि तत्कार्यत्वं तदधीनत्वं मत्वा व्यभिचारं शङ्कते नन्विति। तादात्म्येन प्रतीयमानत्वस्य हेतोर्विवक्षितत्वान्न व्यभिचार इत्याशयेनाह सत्यमिति। अत्र युतसिद्धत्वमुपाधिरित्याशङ्कते गुणादीनां द्रव्याधीनत्वमिति। उपाधिं निरस्यति तत्पुनरयुतसिद्धत्वमिति। अयुतसिद्धत्वस्या पृथग्देशरूपत्वे दोषमाह अपृथग्देशत्वे तावदिति। शैक्ल्यस्य पटनिष्ठत्वात् पटस्य तन्तुदेशत्वात् पटशौक्ल्ययोरपृथग्देश त्वाभा वाच्छुक्लः पट इति सामानाधिकरण्यप्रतीतिर्न स्यादित्याशयः। अपृथक्कालत्वं दूषयति - अथापृथक्कालत्वमिति। अपृथक्स्वभावत्वेऽभेद एवेतीष्टापत्तिरित्याह अपृथगिति। सम्बन्धः सम्बन्धिभिन्नस्तद्विलक्षणशब्द धीगम्यत्वाद्वस्त्वन्तरवदिति शङ्कते सम्बन्धिशब्देति। कल्पितभेदसाधने सिद्धस ाा, वस्तुभेदसाधने तु व्यभिचार इति समाधत्ते न एकत्वेऽपीति। २. पूर्व परमाण्वोः संयोगनिरासेन द्व्यणुकसृष्टिर्निराकृता। इदानीमदृष्टवदात्मनाऽणूनां संयोगोऽणुषु क्रियाहेतुरित्यात्ममनसोः संयोगो बुद्ध्यादिहेतुरिति च निरस्यति तथाण्वात्ममनसामिति। परमाणुद्वयसंयोगं दूषयित्वा समवायं दूषयति किंचान्यदिति। ३. द्व्यणुकं निरवयवासमवेतं सावयवत्वाद..शासमवेतभूमिवत्। परमाणूनां निरवयवत्वं खण्डयति किञ्चेति। परमाणवः सावयवाः परिच्छिन्नत्वात्। कार्यद्रव्यस्य संयोगसचिवानेकद्रव्यारब्धत्वं ४.खण्डयति तथेति। तथाच दध्यादौ व्यभिचारान्न व्याप्तिरित्यर्थः। संयोगसचिव ५. स्वन्यूनपरिमाणानेकद्रव्यार ब्धमिति व्याप्तेः दीर्घविस्तृतदुकूलारब्धायां न्यूनपरिमाणायां रज्जौ व्यभिचारश्च। निरवयवानां संयोगसमवाययोरभावात् समवेत द्व्यणुकाद्यारम्भ कत्वायोगः। मायायां ब्रह्मणि चावयवधाराविश्रान्तिः।

इति परमाणुजगदकारणत्वाधिकरणम्।

# ४. अधिकरणम्

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः २–२–१८

बौद्धमतं किं मानमूलमुत भ्रान्तिमूलमिति संशयः। अर्धवैनाशिकनिरसनानन्तरं सर्वक्षणिकवादी बुद्धिस्थ इति प्रसङ्गसंगत्या प्रवृत्तिः। प्रतिपत्तिभेदात् - उपदेष्टृबुद्धिभेदात् = उपदेष्टुः सर्वज्ञस्य बुद्धिभेदो न सम्भवतीति कारणान्तरमेव वक्तव्यमित्यत आह विनेयभेदादिति। माध्यमिकयोगाचार सौत्रान्तिकवैभाषिकसंज्ञकाश्चत्वारः शिष्याः। एषां संज्ञाप्रवृत्तिरन्यतो ज्ञेया। सौत्रान्तिकवैभाषिकयोः परोक्षत्वापरोक्षत्वाभ्यां बाह्यार्थवैलक्षण्ये सत्यपि बाह्यार्थाभ्युपगन्तृत्वेनैकीकृत्य त्रय इत्युक्तिः। भूतं भौतिकं च बाह्यम्। चित्तं चैत्तश्चान्तरम्। धातुशब्दः पदार्थपर्यायः।चतुष्टये चेति। खरः कठिनः। ईरणं चलनम्। चित्तचैत्तान्याह रूपविज्ञानेत्यादिना। यद्यपि नीलादिरूपं बाह्यं तथापि ज्ञातविषयतया तस्याप्यान्तरत्वविवक्षा। सविषयाणीन्द्रियाणि रूपस्कन्धः। अहमित्यालयविज्ञानं विज्ञानम्। सुखाद्यनुभवो वेदनास्कन्धः। संस्कारो रागद्वेषमदमानधर्माधर्मादयः। गौरित्यादि नामविशिष्ट सविकल्पकप्रत्ययः संज्ञा। पृथिव्यादिपरमाणवः पृथिव्यादिरूपेण वर्तन्ते संहननस्वभावत्वात् एवं रूपादिस्कन्धाः समुदायरूपेण वर्तन्ते संहननस्वभावत्वादिति तदीयानुमानम्। पृथिव्यादिपरमाणवः पृथिव्यादिसमुदायसंहननानुकूलप्रवृत्तिरहिताः अचेतनत्वे सति चेतनानधिष्ठितत्वात्। एवं पंच स्कन्धाः पञ्चस्कन्धीरूपसमुदायसंहननानुकूलप्रवृत्तिरहिताः अचेतनत्वे सति चेतनानधिष्ठितत्वादिति सिद्धान्त्यनुमानम्। नच स्वत एव परमाणुव्यापारेण मेलने सति समुदायापत्तिर्भविष्यतीति वाच्यम्। नित्यमेव परमाणुव्यापारप्रसङ्गेन सदैव समुदायापत्त्या प्रलयाभावप्रसङ्गात्। चित्ताभिज्वलनमिति - चित्ताख्यमभिज्वलनं विज्ञानं न समुदायहेतुः। संघाते देहाकारे जाते विज्ञानं विज्ञाने जाते संघात इत्यन्योन्याश्रयात्। ननु क्षणिकविज्ञानसन्तानः स्थिर इति तद्व्यापारेण समुदायापत्तिः

भविष्यतीत्याह आशयस्येति। आशेरतेऽस्मिन् वासनारागादय इत्याशयः सन्तानः। सन्तानस्य सन्तानिभ्योऽन्यत्वे स एव स्थिरश्चेतनो जीव इत्यस्मत्पक्षसिद्धिः। अनन्यत्वे दोषः क्षणिकत्वेति। क्षणिकस्य जन्मातिरिक्तव्यापारो नास्ति। तस्मात्तस्य परमाण्वादिमेलनार्थं प्रवृत्तिरनुपपन्ना। क्षणिकत्वव्याघातादित्यर्थः। पूर्वपक्षहेतुरसिद्धः।

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् २–२–१९

पूर्वोक्तसिद्धान्तहेतोरप्रयोजकत्वशङ्कापरः सूत्रपूर्व भागः। कार्यं प्रत्येति जनकतया सम्बध्यत इति प्रत्ययः हेतुः। इतरेतरप्रत्ययत्वात् - इतरेतरहेतुत्वात् - अविद्यादीनाम्। क्षणिकेषु नित्यत्वबुद्धिरविद्या। ततो रागद्वेषमोहाः संस्काराः। तेभ्यो गर्भस्थस्याद्यं विज्ञानमुत्पद्यते। गर्भस्थकललबुद्बुदावस्था नामरूपम्। विज्ञानं पृथिव्यादिचतुष्टयं रुपञ्चेति षडायतनानि यस्येन्द्रियजातस्य तत् षडायतनम्। नामरूपेन्द्रियाणां मिथः संयोगः स्पर्शः। ततः सुखादि -वेदना। गर्भगतस्यैव शरीरिणः सुखेप्सा दुःखजिहासा च तृष्णा। तदनुकूलो व्यापार उपादानम्। गर्भान्निर्गमनं भवः। तथोत्पन्नस्य जनकगतजात्यनुसारेण मनुष्यत्वादिकं जातिः। जरा। नाशो मरणम्। म्रियमाणस्य पुत्रादिस्नेहादन्तर्दाहः शोकः। तेन हा पुत्रेत्यादि प्रलापः परिदेवनम्। अनिष्टानुभवो दुःखम्। तेन मानसीव्यथा दुर्मनस्ता। पूर्वपूर्वकारणानुसारेणोत्तरोत्तरकार्योत्पत्तेश्चेतन व्यापारं विनैव सम्भवात् किं चेतनेन स्थिरेण प्रयोजनम्। सिद्धान्तः - सूत्रे उत्पत्तिमात्रनिमित्तत्वादित्यनेनाविद्यादीनामुत्तरोत्तरोत्पत्तौ निमित्तत्व मस्त्वित्युपगम्य मात्रपदेन तदाश्रयभूतस्य संघातस्य सिद्धिर्वार्यते। अविद्यादीनां स्वाश्रयं संघातं प्रत्यहेतुत्वेन न सङ्घातसिद्धिरिति परिहाराभिप्रायः।

किमविद्यादयः सङ्घातस्य गमका उतोत्पादका इति विकल्प्य स्थिरेष्वणुषु सङ्घातयोग्येषु कर्तृषु चादृष्टाश्रयेषु (आश्रयाश्रयिभूतेष्वदृष्टाश्र येषु, भोक्तृविशेषणमिदम्। सत्सु ज्ञानाभावमात्रेण संहतिकर्तृत्वासम्भवात्

सङ्घातापत्तेः निमित्तत्वं नास्तीत्युक्तम्। तदा क्षणिकपक्षे किमु वक्तव्यमित्यर्थः। द्वितीयपक्षमाशङ्कते अथायमभिप्राय इति। संघातस्याविद्यादीनां चोत्पत्तावन्योन्याश्रयः। स्वाभाविकः खल्वयं संघातानां हेतुहेतुमद्भावेन प्रवाहो न संहन्तारमपेक्षते। पूर्वसंघाताश्रया अविद्यादय उत्तरसंघातप्रवर्तका इति नान्योन्याश्रयदोषोऽपीत्याशङ्क्‍ते अथ मन्यस इति। स्वभावस्य नियमानियमयोरपसिद्धान्तापातः स्यादिति परिहारार्थः। पूर्यते गलति चेति पुद्गलो देहः। किञ्च भोक्तुः क्षणिकत्वपक्षे भोगापवर्गव्यवहारोऽपि दुर्घट इत्याह अपि चेति। यो यदिच्छति स तत्काले नास्ति चेदिच्छा व्यर्था। अस्ति चेत् क्षणिकत्वभङ्ग इत्यर्थः। संघातत्वेन भवदभिमतमुत्पत्त्ययोग्यमुत्पादकाभावात् भोक्त्रभावात्, भोक्त्रपेक्षितत्वाभावाच्च। हेतूपनिबद्धस्य चेतनानपेक्षत्वेऽपि प्रत्ययोपनिबद्धस्य चेतनापेक्षा वर्तत इति भावः। हेतूपनिबन्धनो हेत्वधीनः। प्रत्ययोपनिबन्धनः कारणसमुदायाधीनः।

## हेतूपनिबद्धस्यापि चेतनानपेक्षत्वाभ्युपगमं त्यजतिउत्तरोत्पादे च पूर्वनिरोधात् २–२–२०

अविद्यादय उत्तरोत्तरव्यक्त्युत्पादका न भवन्ति उत्पत्तिकालेऽसत्वादित्यर्थः। उत्तरक्षणस्योत्पादे पूर्वक्षणस्य निरोधान्नाशादपि पूर्वस्योत्तरोत्पादकत्वं न सम्भवति। तथा सति क्षणभङ्गवादभङ्गः स्यादित्याशयः। निरुध्यमानस्येति - यथा पूर्वमेव नष्टस्योत्तरपदार्थे न कारणत्वमेवं तत्काले नश्यतोऽपि न कारणत्वमित्यर्थः। नष्टस्यापि निमित्तत्वं स्यान्नोपादानत्वम्। तथाच मृदादेः घटादिकालासत्वे घटाद्यनुत्पत्तिः। सत्त्वे च क्षणिकत्वहानिरिति परिहरति तथापीत्यादिना। हेतुस्वरूपं कार्यानन्वयि, अन्वयि वा। आद्ये हेत्विति। हेतुस्वरूपानन्वयेऽपि कार्यत्वे हिमवद्विन्ध्ययोरपि कार्यकारणभावः स्यादित्यर्थः। द्वितीये आह - स्वभावेति। प्रथमपक्षोक्तदोषं प्रपञ्चयति विनैवेति। एवमुत्पत्तिनिरोधौ विकल्प्यापि वस्तुनः शाश्वतत्वमभ्युपगमयति अपि चोत्पादनिरोधाविति।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २–२–२१

पूर्वोक्तदोषाद्यदि निर्हेतुकैव फलोत्पत्तिः स्यात्तर्ह्यालम्बनप्रत्यय, समनन्तरप्रत्ययाधिपतिप्रत्ययसहकारिप्रत्ययरूपकारण चतुष्टयाच्चित्तचैत्ताना मुत्पत्तिरिति प्रतिज्ञाया उपरोधो हानिः। विषयकरणसहकारिसंस्काराश्चतुर्विधा हेतवः। तान् प्रतीत्य चित्तं रूपादिविज्ञानं चैत्ताः चित्तात्मकाः सुखादयश्च जायन्त इति प्रतिज्ञार्थः। यथा नीलविज्ञानस्य नीलं वस्त्वालम्बनप्रत्ययो विषयः। चक्षुः करणमधिपतिप्रत्ययः। सहकारिप्रत्यय आलोकः समनन्तरपूर्वप्रत्ययः संस्कारः। क्षणिकास्सर्वे संस्कारा इति - सम्यक् क्रियन्त इति संस्काराः आद्यन्तवन्तो भावा इत्यर्थः। अन्यथा कार्यं सहेतुकमित्यङ्गीकृत्य कार्यपर्यन्तं हेतोः स्थित्यङ्गीकारे हेतुफलयोर्योगपद्यम्। एवञ्च क्षणिकत्वप्रतिज्ञाहानिरित्यर्थः।

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरवच्छेदात् २–२–२२

सन्तमिममसन्तं करोमीति बुद्ध्वा निरोधः प्रतिसंख्यानिरोधः। प्रतिकूला संख्या = बुद्धिः तत्पूर्वको निरोध इति व्युत्पत्तेः। अबुद्धिपूर्वको निरोधोऽप्रतिसंख्यानिरोधः। तयोः सन्तान[1]सन्तानि[2]ष्वप्राप्तिरविच्छेदात्। भाष्ये संस्कृतमित्यस्योत्पाद्यमित्यर्थः। यदि पूर्वोक्तनिरोधौ सन्तानगोचरौ तर्हि तस्मिन् सन्ताने चरमक्षणस्य क्षणान्तरोत्पादकत्वे चरमत्वव्याघातोऽनुत्पादकत्वे चरमस्यासत्वप्रसङ्गः। तस्मात् सन्तानस्य विच्छेदासम्भवान्निरोधाप्राप्तिः। यदि च सन्तानिगोचरौ तथापि न भवति। घटकपालचूर्णाद्यवस्थासु सेयं मृदिति प्रत्यभिज्ञानादन्वयिभावस्य मृदादेरात्यन्तिकविनाशाभावात्। बीजस्याङ्कुरादिषु प्रत्यभिज्ञानाभावेऽप्यङ्कुरा दयोऽनुस्यूतान्वयिभावस्थाः कार्यत्वाद्घटवदित्यनुमानेनान्व य्यविच्छेदसिद्धेः। तस्माद्भावानां स्थायित्वात् प्रतिक्षणं निरोधासम्भव इत्यर्थः।

---

१. भावानां हेतुफलभावेन प्रवाहः सन्तानः।

२. भावाः सन्तानिनः

## उभयथा च दोषात् २–२–२३

घटमहं जानामीत्येवमाकारं सविकल्पकं ज्ञानमेव तन्मतेऽविद्या। स्वभावतो निर्विकल्पकमेवालयविज्ञानं, सविकल्पकता तु वासनाद्युपाधि सम्पन्ना - इत्येवमाकारं विचारपूर्वकमनुसन्धानं परिकरः। तत्परिपाके प्राथमिकविशुद्धालयविज्ञानोत्पत्तिः सम्यक् ज्ञानम्। अविद्यादिनाशस्य सपरिकर[1]सम्यग्ज्ञानजन्यत्वे स्वत एव वा जायमानत्वे उभयथापि दोषः। आद्ये निर्हेतुकविनाशाभ्युपगमहानिः द्वितीये मार्गोपदेशानर्थक्यं[2] दोषः।

## आकाशे चाविशेषात् २–२–२४

आकाशस्य निरूपाख्यत्वं न सम्भवति आत्मन आकाशस्संभूत इति श्रुतेस्तस्य वस्तुत्वसिद्धेः। एवं शब्दानुमेयस्य तस्य वस्तुत्वसिद्धः। आवरणाभावमात्रमाकाशमिति न सम्भवति किन्त्वावरणाभावाधिकरणं वस्त्वेवाकाशमिति साधयति अपि चावरणाभावमात्रमिति। यथा एकघटसत्त्वेऽपि घटसामान्याभावो न वर्तते तथा एकपक्षिसत्त्वेऽप्यावरणसा मान्याभावात्मकाकाशो नास्तीति पक्ष्यन्तरसञ्चारो न स्यादित्यर्थः। यत्रेत्यादि - आवरणाभावावच्छेदकदेशविशेष एवाकाशः इदानीं घट इति प्रतीत्या कालस्य यथा प्रत्यक्षत्वं तथाकाशस्यापीत्याकाशस्य वस्तुत्वम्। किं सम्यक् निःश्रयः आश्रयः यस्या इति किं सन्निश्रया। आधारत्वमवस्तुनो न सम्भवति। अभाव मात्ररूपत्वे स्वग्रन्थविरोधं प्रदर्शयति - अपि च सौगते हि समय इति। आकाशस्य नित्यत्वस्वीकारेणापि तस्य वस्तुत्वमपरिहार्यमित्याह अपि च निरोधद्वयमिति।

## अनुस्मृतेश्च २–२–२५

आत्मनः क्षणिकत्वमनेन दूषयति। आत्मा नित्यः पूर्वानुभवजन्यस्मृतिमत्त्वात्। आत्मा क्षणिको न दर्शनस्मरणकालवर्तित्वात्। आत्मा

---

१. यमनियमादयः परिकरः

२. सर्वं दुःखं क्षणिकमिति भावनोपदेशो मार्गोपदेशः।

जन्मप्रभृतिमरणक्षणपर्यन्तवर्ती, एकत्वेन प्रत्यभिज्ञायमानत्वात्। आत्मा क्षणिको न जन्मप्रभृतिमरणक्षणपर्यन्तवर्तित्वात्। अस्य हेतोः दीपज्वालायां व्याभिचारं शङ्कते स यदि ब्रूयादिति। सादृश्य—ज्ञानस्य धर्मिप्रतियोगिज्ञानाधीनत्वात् स्थिरस्य ज्ञातुरभावान्न सादृशयज्ञानं सम्भवति, सत्त्वेऽपसिद्धान्त इति समाधत्ते तं प्रति ब्रूयादिति। तेनेंद सदृशमिति प्रत्ययान्तरमेवेदमिति। न सादृश्यप्रत्ययः पूर्वोत्तरवस्तुद्वयज्ञानज न्यस्तद्द्वयसादृश्यावगाही। किन्तु कश्चिदेष विकल्पः स्वान्तरमेव बाह्यत्वेन विषयीकुर्वाणः क्षणान्तरास्पर्शी अतो न स्थिर—द्रष्टूपेक्षेति भावः। परिहरति सादृश्यप्रत्यये वस्तुत्रयं भासते न वा। नेति चेदनुभवविरोधोऽर्थभेदाभावात् पदत्रयप्रयोगानुपपत्तिः। यदि च वस्तुत्रयं भासते तच्च प्रत्ययाभिन्नमेव न बाह्यमित्युच्यते तदा त्रयाणामेकप्रत्ययाभेदे तदभिन्नाभिन्नस्य तदभिन्नत्वान्मिथोऽप्यभेदापत्तिः। इष्टपत्तौ स्वपक्षसाधनं परपक्षदूषणं चानुपपन्नं स्यात्। अतो यथानुभवं ज्ञानज्ञेयभेदोऽङ्गीकार्यः। तथाच तेनेदं सदृशमिति बाह्यार्थयोर्ज्ञानपूर्वकं सादृश्यं जानत आत्मनः स्थायित्वं दुर्वारमिति भावः। ननु सन्त्येव बाह्यार्थाः क्षणिकस्वलक्षणाः निर्विकल्पकग्राह्याः, सविकल्पाध्यवसेयास्तु स्थायित्वसादृश्यादयः कल्पिताः बाह्या अवभासन्ते। अतो विप्रतिपत्त्यादिव्यवहार इति बाह्यार्थवादमाशङ्क्य निरस्यति - एवमेवैषोऽर्थ इति। यत् प्रमाणसिद्धं तदेव वक्तव्यम्। नच क्षणिकत्वे किञ्चित्प्रमाणमस्ति। इदानीं घट इति प्रत्यक्षं घटस्य वर्तमानत्वमात्रं गृह्णाति नतु कालान्तरासत्वमिति न तेन क्षणिकत्वसिद्धिः। यत् सत् तत् क्षणिकमितिव्याप्तेः दृष्टान्ताभावेनासिद्धेः। विद्युदादेरपि द्वित्रिक्षणस्थायित्वात्।

## नासतोदृष्टत्वात् २–२–२६

यद्यभावाद्भावोत्पत्तिः स्यात्तर्हि विशेषकारणाङ्गीकारो व्यर्थः स्यात्। यदि चाभावोऽपि विशेषवान् स्यात्तर्हि भाव एव स्यादिति तर्कः। अभावो न हेतुरसत्त्वात् शशविषाणवत्, शशविषाणवत्। एवमभावो न

प्रकृतिः कार्यानन्वितत्वात् यथा शरावाद्यनन्वितस्तन्तुर्न शरावादिप्रकृतिरि त्याशयोनाह अभावाच्च भावोत्पत्ताविति। पूर्वापरविरोधमाह अपि चेति।

## उदासीनानामपि चैवं सिद्धिः २–२–२७

कार्यं यद्यभावोत्पत्तिकं स्यात्तर्हि उदासीनप्राप्यं स्यात्। अनीहमानानां — प्रयत्नशून्यानां। तस्मात् भ्रान्तिमूलेन क्षणिक बाह्यार्थवादेन कूटस्थनित्यब्रह्मसमन्वयस्य न विरोध इति सिद्धम्।

इति समुदायाधिकरणम्

## ५. अधिकरणम्

## नाभाव उपलब्धेः २–२–२८

रूपादिरहितब्रह्म जगदुपादानत्ववदिति योगाचारासमन्वयस्य विज्ञानं नीलाद्याकारमित्यनुमानविरोधाविरोधसन्देहे उपजीव्योपजीवकभावसंगत्या पूर्वपक्षः। तस्मिंश्च विज्ञानवादे इति। क्षणिकं साकारं विज्ञानमेव परमार्थः। तदतिरिक्तं तुच्छम्। स्कन्धः पदार्थः। ज्ञानाकारो घटपटादिः प्रमेयम्। तदेव ज्ञानं प्रमा। पूर्वज्ञानं तज्जनकतया प्रमाणम्। आन्तरस्यैव ज्ञानाकारस्य घटादेः बाह्यत्वं कल्पितम्। एवं तस्यैव ज्ञानभेदोऽपि कल्पितः। एवं तस्यैव ज्ञानस्य भेदेनाश्रयाश्रयिभावकल्पनात् प्रमातृत्वम्। तथा चैकस्यैव चन्द्रस्य द्वित्वादिक्त् प्रमातृप्रमेयभावेन व्यवहारोपपत्तौ न तस्य तात्त्विकत्वमास्थेयमिति तेषमभिमानः। विमता धीः न ज्ञानव्यतिरिक्तालम्बना धीत्वात् स्वप्नधीवत् विपक्षे १. ज्ञानाभानेऽप्यर्थ भानप्रसङ्गो बाधकः। एवं ज्ञेयं ज्ञानव्यतिरेकेण नास्ति ज्ञानव्यतिरेकेणासम्भ वात्। शशशृङ्गवत्। असम्भवमुपपादयति। सहि बाह्योऽर्थ इति घटः परमाणुरूपो न भवति एकस्थूलाभास (आकार) ज्ञानविषयत्वात्। घटः परमाणुसमूहो न भवति वस्तुत्वेन प्रतीयमानत्वात्। (परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात्) पूर्वोक्तहेतोश्च।

घटः परमाण्वतिरिक्तवस्त्वात्मकसमूहात्मको न भवति तत्त्वेनानभ्युपगम्यमानत्वात्। २. अपि चानुभवमात्रेणोति। ज्ञानं स्वव्यतिरिक्तविषयशून्यं विषयाकाररूपसारूप्यवत्वात्। पक्षपातः - विषयविशेषवैशिष्ट्यव्यवहारः। अपि च सहोपलम्भनियमादिति। ३. विषयः ज्ञानव्यतिरेकेण नास्ति ज्ञानोपलम्भनियतोपलम्भकत्वात् (ग्राह्यत्वात्) इति हेत्वन्तरपरम्। स्वप्नादिवच्चेदं द्रष्टव्यमिति। ज्ञानं बाह्यालम्बनशून्यं (निरालम्बनम्) प्रत्ययत्वात्। स्वप्नप्रत्ययवत्। प्रत्ययो यदि निरालम्बनः स्यात्तर्हि विचित्रो न स्यादिति प्रतिकूलतर्कमाशङ्कते कथं पुनरसतीति। अनादिसन्तानान्तर्गतं पूर्वपूर्वज्ञानमेव वासना। तद्वशादनेकक्षणव्यधानेऽपि नीलाद्यारज्ञानवैचित्र्यं भवति यथा बीजवासनया कार्पासरक्तत्वं तद्वदिति परिहरति वासनावैचित्र्यादित्याहेति। उभयवादि सम्मतत्वाच्च वासना एव ज्ञानवैचित्र्यहेतवो न बाह्यार्था इत्याह अपि चेति। सिद्धान्तमाह नाभाव उपलब्धेरिति। घटादयो ज्ञानव्यतिरेकेण सन्तिज्ञानव्यतिरेकेणोपलभ्यमानत्वात् बहिर्वदित्युपमानत्वेनोक्तत्वाच्च। पूर्वपक्ष्युक्तोऽसंभवः किमसत्वरूप उतासत्त्वनिश्चयरूपोऽथवाऽयुक्तत्वमुतोत्कटकोटिकसंशयात्मकसंभवस्याभावो वा। आद्ये साध्याविशेषः। न द्वितीयः स्थूलौ घटस्तम्भाविति समूहालम्बने स्थूलत्वद्वित्वघटत्वस्तम्भत्वरूपविरुद्धधर्मवतोरर्थयोरस्थूलादेकस्मादद्वयावगाहिविज्ञानाद् भेदसत्त्वनिश्चयेनासंभवासिद्धेरित्याह नायं साधुरिति। सम्भवः प्रमाणाधीनः सत्तानिश्चयोऽसम्भवः प्रमाणाभावाधीनोऽसत्वनिश्चयः। बाह्यार्थस्य प्रत्यक्षादिभिः संभवं वदन्नेवायुक्तत्वपक्षं निरस्यति इहेति। प्रमाणानिश्चित - वाह्यार्थस्य स्तम्भादेः परमाणुभ्यो भेदाभेदविकल्पेनायुक्त्व मात्रेणासत्त्वनिश्चयो न युक्तः। त्वत्पक्षेऽप्ययुक्तत्वस्य तुल्यत्वात्। नह्यस्थूलस्यैकस्य विज्ञानस्य स्थूलानेकसमूहालम्बनविषयाभेदो युक्तः स्थूलत्वानेकत्वप्रसङ्गात्। तस्मादयुक्तत्वेऽपि यथानुभवं व्यवहारयोग्योऽर्थः स्वीकार्यः। न चतुर्थः। निश्चिते तादृशासंभवस्यानुपयोगात्तस्य क्वचित् प्रमाणप्रवृत्तेः पूर्वाङ्गत्वात्। पूर्वपक्षिद्वितीयहेतुर्विरूद्धः। ज्ञानंस्वव्यतिरिक्तविषयकं विषयसारूप्यवत्त्वात्। तृतीयहेतुरालोकोपालम्भ-

नियतोपलम्भके रूपे व्यभिचरितः। ज्ञानं घटात्मकविषयाद्भिन्नं घटभिन्न पटानुगतत्वात् अनुवृत्तं व्यावृत्ताद्भिद्यते यथा कुसुमेभ्यः सूत्रम्। विषयो ज्ञानाद्भिन्नो दर्शनभिन्नस्मरणानुगतत्वात् इत्यनुमानद्वयमभिप्रेत्याह - अपि च घटज्ञानमित्यादि। ज्ञनभिन्नार्थानङ्गीकारे स्वशास्त्रव्यवहारलोपं बाधकमाह अपि चेति। क्रमिकयोः स्वप्रकाशयोः क्षणिकज्ञानयोर्मिथो ग्राह्यग्राहकत्वमयुक्तमनभ्युगतं च। तथा च तयोर्भेदप्रतिज्ञा न युक्ता। धर्मिप्रतियोगिनोर्मिथः परेण चाग्रहेण च भेदग्रहायोगात्। तथाच तयोर्भेदग्राहकः स्थायी आत्मा तद्भिन्न एष्टव्यः। एवं पक्षसाध्यहेतुदृष्टान्तभेदाभावे इदं क्षणिकमसदिति प्रतिज्ञा न युक्ता। सर्वतो व्याकृत्तं व्यंक्तिमात्रं स्वलक्षणमनेकानुगतं सामान्यमतद्व्यावृत्तिरूपमिति प्रतिज्ञा न युक्ता। सर्वानेकार्थानां ज्ञानमात्रत्वेन मिथः परेण वा दुर्ज्ञेयत्वात्। उत्तरनीलज्ञानं वास्यं, पूर्वनीलज्ञानं वासकमिति प्रतिज्ञाप्ययुक्ता। तयोर्भिन्नस्य ज्ञातुरभावात्। अविद्योपप्लवोऽविद्यासंसर्गः। तेन नीलमिति सद्धर्मः, नरविषाणमित्यसद्धर्मः, अमूर्तमिति सदसद्धर्मः सतो विज्ञानस्यासतो नरविषाणस्य चामूर्तत्वादिति प्रतिज्ञा न युक्ता, अनेकार्थज्ञानसाध्यत्वात्। अज्ञानेनास्य बन्धो ज्ञानेनास्य मोक्ष इति च प्रतिज्ञा बह्वर्थज्ञानसाध्या। आदिपदेन सामान्यत इष्टं ग्राह्यमनिष्टं त्याज्यमिति शिष्यहितोपदेशोऽनेकज्ञानसाध्यो ग्राह्यः। तस्मात् प्रतिज्ञादिव्यवहाराय ग्राह्यग्राहकभेदोऽङ्गीकार्य इत्यर्थः। ज्ञानवदर्थस्याप्यनुभवाविशेषात् स्वीकारो युक्त इत्याह किं चान्यदिति। ज्ञानस्य स्ववेद्यत्वाभावेऽनवस्था साम्यं चेति दोषद्वयमाशङ्कते ननु विज्ञानस्येति। साक्षिवेद्यत्वाददोष इति समाधत्ते तदुभयमप्यसदिति। अनित्यज्ञानस्वरूपसाधकत्वाच्च साक्षी स्वीकार्य इत्याह किञ्चान्यदिति। विज्ञानमेवावगन्त्रिति शङ्कते बाढमेवमिति। अभेदे ज्ञातृज्ञेयत्वायोगाज्ज्ञात्रन्तरमावश्यकमिति परिहरति नेति। ज्ञानं स्वातिरिक्तवेद्यं वेद्यत्वाद्देहवत्। पूर्वपक्षिसंमतज्ञानस्य जन्मविनाशवत्त्वेन कार्यत्वाज्जडत्वं, तथा च स्वातिरिक्तवेद्यत्वम्। कूटस्थचिदात्मनो ग्राहकानपेक्षत्वान्नानवस्था।

## ज्ञानं निरालम्बनं प्रत्ययत्वादिति चतुर्थानुमानं दूषयतिवैधर्म्याच्च न स्वप्नादिवत् २–२–२९

तत्र साध्यतयोक्तं निर्विषयत्वं किं विषयसामान्यशून्यत्वमुत पारमार्थिकविषयशून्यत्वमथवा व्यावहारिकविषयशून्यत्वम्। नाद्यः स्वप्नस्यापि मिथ्यार्थविषयकत्वेन दृष्टान्ते साध्यवैकल्यात्। न द्वितीयः सिद्धसाधनात्। न तृतीयः (व्यवहारकाले) बाध्यविषयकत्वस्योपाधित्वात्। अपि चेत्यादि स्मृतित्वमप्युपाधिरित्युच्यते। अप्रमाणजत्वमप्युपाधिः उभयोरन्तरमिति भाष्याभिप्रेतः। बाधोऽपि पूर्वपक्ष्यनुमाने दोष इत्याह अपि चानुभवविरोधेति।

## न भावोऽनुपलब्धेः २–२–३०

वासनावैचित्र्याज्ज्ञानवैचित्र्यखण्डनार्थं सूत्रम्। निरपेक्षवासनानां सत्त्वे धीवैचित्र्यमसत्वेनेति स्वप्ने दृष्टमिति समूलाऽनवस्थेत्यत आह यावपीति। वासनानां बाह्यार्थानुभवकार्यत्वे सति नैरपेक्ष्यासिद्धेर्नान्वयव्यतिरेकावित्यर्थः। अर्थानुभवे सति वासना, असति नेत्यन्वयव्यतिरेकाभ्यां वासनामूलानुभवावच्छेदकार्थकृतमेव वासनावैचित्र्यमिति बाह्यार्थसद्भावसिद्धिरित्याह अपि चेति। ज्ञानवैचित्र्यं वासनावैचित्र्यनिमित्तकं न भवति विषयाभावादिति प्रयोगः। एवं ज्ञानवैचित्र्यं वासनावैचित्र्यनिमित्तकं न भवति वासनाश्रयत्वेनाभिमतवस्तुरहितत्वादिति दूषणान्तरमाह अपि चेति।

## क्षणिकत्वाच्च २–२–३१

आलयविज्ञानं वासनाश्रयो न भवति क्षणिकत्वात्। सहोत्पन्नयोराश्रयाश्रयिभावायोगः। पौर्वापर्ये चाधेयक्षणेऽसतः आधारत्वायोगः सत्त्वे क्षणिकत्वव्याघातः। इदमेव सूत्रचतुष्टयं शून्यवादिमतनिरासपरतया योजनीयम्। तथाहि - ज्ञानार्थयोर्नाभावः प्रमाणत उपलब्धेः। ननु जाग्रत्स्वप्नौ ज्ञानार्थशून्याववस्थात्वात् सुषुप्तिवदित्यत आह वैधर्म्याच्च

न। स्वप्न आदिर्यस्याः सुषुप्तेः सा तद्वन्नेतरावस्थयोः शून्यत्वमुपलब्ध्यनुपलब्धि - वैधर्म्यलक्षणाऽबाधितज्ञानार्थोपलब्धिबाधात्। सुषुप्तावप्यात्मज्ञानसत्त्वेन साध्यवैकल्याच्च। किं च निरधिष्ठाननिषेधायोगादधिष्ठानमेव तत्त्वं वाच्यम्। तस्य त्वन्मतेऽभावः। मानतोऽनुपलब्धेरित्याह -. न भावोऽनुपलब्धेः। क्षणिकत्वाच्चेति सूत्रं क्षणिकत्वोपदेशाच्चेति पठनीयम्। शून्यत्वविरुद्ध - क्षणिकत्वोपदेशादसङ्गतप्रलापी सुगत इत्यर्थः।

## सर्वथानुपपत्तेश्च २-२-३२

ग्रन्थतोऽर्थतश्च सर्वथानुपपन्नत्वात् सौगतमतमनादरणीयमिति। अतो भ्रान्त्येकमूलसुगतसिद्धान्तेन वेदान्तसिद्धान्तस्याविरोध इति सिद्धम्।

इत्यभावाधिकरणम्

# ६. अधिकरणम्

## नैकस्मिन्नसंभवात् २-२-३३

एकरूपं ब्रह्मेति वैदिकसिद्धान्तस्यानेकान्तवादेन विरोधोऽस्ति नवेति तद्वादस्य मानमूलत्व भ्रान्तिमूलत्वाभ्यां सन्देहे मानमूलत्वाद्विरोध इति पूर्वपक्षप्रवृत्तिः। मुक्तकच्छमते निरस्ते मुक्ताम्बराणां मतं बुद्धिस्थं भवतीति प्रसंगसंगतिः। अस्तीति कायते शब्द्यते नत्वेकान्ततोऽस्तीति यौगिकी वस्तूनामस्तिकायसंज्ञा। जीवः त्रिविधः। बद्धः, साधनैर्मुक्तः, नित्यसिद्धश्च। अजीवाः पञ्च पृथिव्यादिभूतचतुष्टयं पुद्गलसंज्ञकं, धर्माधर्मौ, लोकान्तरवर्त्याकाशः, बहिराकाशश्च। आस्रवः इन्द्रियाणां विषयेषु सञ्चारः। संवरः बाह्याभ्यन्तरेन्द्रियनिग्रहः। निर्जरः तप्तशिलारोहणं केशोल्लुञ्छनमित्येवमादिः। बन्धः कर्माष्टकसंबन्धः। साधुकर्माणि चत्वारि। असाधुकर्माणि घातिकर्माणि चत्वारि। ज्ञानावरणीयम्. दर्शनावरणीयं, मोहनीयमान्तरायिकमिति। ज्ञानं मोक्षसाधनं नेति भावना ज्ञानावरणीयम्। आर्हतशास्त्रान्नमोक्ष इति दर्शनावरणीयम्। आर्हतशास्त्रादेव मोक्ष

इत्यवधारणाभावो मोहनीयम्। मोक्षोपायविघातमान्तरीयकम्। मिलितं शुक्रशोणितमायुष्कम्। तन्निष्ठा देहाकारपरिणामशक्तिर्गौत्रिकम्। कुलालबुद्बुदावस्थयोर्हेतुः क्रियाविशेषो नामिकम्। जाठराग्निसम्पर्केण शरीरपरिणतियोग्या काठिन्यावस्था वेदनीयम्। चत्वार्यप्येतानि पुण्यवच्छरीरसम्बन्धितया साधुकर्माणीत्युच्यन्ते अघातिकर्माणीति च। बहिराकाशेऽवस्थानं मोक्षः। बन्धक्षये सति सततोर्ध्वगमनं वा मोक्षः। वैशेषिकादिवत् परमाणुभिः जगदारम्भः। आत्मा तु देहपरिमाणश्चैतन्यरूपः। सर्व एव पदार्थः स्यादस्ति स्यान्नास्ति, स्यादस्ति च नास्ति च स्यादवक्तव्यः। स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्च। स्यादिति निपातोऽनियमद्योतकः कथञ्चिदर्थकः। तेनास्तीत्याद्यनियतम्। अवक्तव्यः अनिर्वचनीय इत्यप्यनियतम्। असद्वादी सत्त्वमनिर्वाच्यमिति वक्ति तदप्यनियतमित्याह स्यादस्ति चावक्तव्य इति। असत्त्वमप्यनिर्वाच्यमिति सद्वादी यद्वक्ति तदप्यनियतमित्याह स्यान्नास्ति चावक्तव्य इति। अस्ति च नास्ति चेत्येष पक्षोऽवक्तव्यः। अनिर्वाच्य इति यदुच्यते एकान्तसद्वादिभिरेकान्तासद्वादिभिश्च तदप्यनियतमित्याह स्यादस्ति च नास्ति चावक्तव्य इति। युज्यते चेयं सप्तनियमभङ्गी। अन्यथा यद्यस्तीति वस्तुन ऐकान्तिकं सत्त्वं स्यात्तदा तदिच्छुः सन् कोऽपि न प्रवर्तेत वस्तुमात्रस्य सिद्धत्वात्। नापि निवर्तेत हातुमशक्यत्वात्। यदि च नास्तीत्येकान्तता तदापि न प्रवृत्तिनिवृत्तिसम्भवः। प्राप्तुमशक्यत्वान्नित्यनिवृत्तत्वात्। अनैकान्तिकत्वे तु क्वचित् कदाचित् कस्यचित् कथञ्चित् सत्त्वात् तत्सम्भव इति जैनमतम्। तदुक्तम् - विमतं वस्त्वनेकान्तं वस्तुत्वाच्चित्ररूपवत्। एकान्तसत्त्वेऽसत्त्वे च न प्रवृत्तिर्नचेतरा। (शा.द.) स्यादस्ति स्यान्नास्तीत्यादि। एवमेव स्यादेकः, स्यादनेकः, स्यादेकोऽनेकश्च, स्यादवक्तव्यः, स्यादेकोऽवक्तव्यश्च, स्यादनेकोऽवक्तव्यश्च, स्यादेकोऽनेकोऽवक्तव्यश्च। एवं स्यान्नित्य इत्याद्यूह्यम्। विमतमनैकान्तिकं वस्तुत्वात् नरसिंहवदिति पूर्वपक्षः, सिद्धान्तस्तु अस्तित्वं नास्तित्वाधिकरणनिरूपितास्तित्वकालावच्छिन्नाधेय-

त्वाभाववत् नास्तित्वप्रतियोगित्वात्, उष्णत्वविरोधिशैत्यवदिति। जीवादि पदार्थानां सप्तत्वं जीवत्वादिरूपं चास्त्येव, नास्त्येवेति नियमो वाऽनियमो वा। नियमे त्वदुक्तवस्तुत्वहेतोस्तत्र व्यभिचारः। अनियमे पदार्थनिश्चयो न स्यात्। अनेकात्मकं सर्वमित्येव निश्चय इति चेत् तस्य निश्चयरूपत्वं नियतमुतानियतम्। आद्ये वस्तुत्वरूपहेतोर्व्यभि चारः। द्वितीये संशयत्वं स्यादिति य एते इत्यादिभाष्याशयः। यत्सत्यं तत्सदेवास्ति न कथञ्चिन्मृषा भवेत्। वस्त्वनेकान्ततावादस्तस्माद्व्याघात दण्डितः। (शा.द.)

## एवं चात्माकात्स्न्र्यम् २–२–३४

अनेन जीवस्य देहपरिमाणत्वं दूषयति। आत्मनोऽकात्स्न्र्यं परिच्छिन्नत्वमपि दोषः। एवं मध्यमपरिमाणवत्त्वे कृत्स्नदेहव्यापित्वमपि आत्मनोऽसंभवि। आगमापायि अनन्तावयवत्वं जीवस्याङ्गीकृत्य तत्तच्छरीरानुगुण्येनावयवानामागमापायौ भवत इति शङ्कायामुत्तरसूत्रम्-

## नच पर्यायादप्यविरोधो विकारादिभ्यः २–२–३५

आत्मनोऽवयवोपगमापगमवत्त्वे विकारवत्वप्रसङ्गः। ओमित्युक्तेऽनि त्यत्वप्रसङ्गः। अङ्गीकारे बन्धमोक्षाभ्युपगम विरोधः। किं चान्यदिति। अवशिष्टकूटस्थावयवस्य दुर्ज्ञानत्वादात्मज्ञानाभावान्न मुक्तिरित्यर्थः। एवमात्मन आगमापायिशीलावयवत्वे कियन्तोऽवयवा आगच्छन्ति कियन्तो गच्छन्तीति ज्ञानासम्भवादात्मनिश्चयाभावादनिर्मोक्ष इत्याह किं चेति। अथवेति। स्थूलसूक्ष्मशरीरप्राप्तावकात्स्न्र्योक्तिद्वारा आत्मनोऽनित्यतायामु क्तायां सुगतवत् सन्तानरूपेण आत्मनित्यतामाशङ्क्यानचोत्तरमुच्यत इत्यर्थः। तथा च पर्यायात् सन्तानादप्यात्मनित्यत्वस्याविरोध इति न च। कुतो विकारादिभ्यः सन्तानस्यावस्तुन आत्मत्वे शून्यवादः, सन्तानस्य वस्तुत्वे सन्तानिव्यतिरेके च कूटस्थात्मवादः। अनतिरेके जन्मादिविकारो विनाशो मुक्त्यभाव इति दोष प्रसङ्गात्

सन्तानात्मपक्षोऽनुपपन्न इति सूत्रार्थः। विसिचाम्। सिक् वस्त्रम्, तद्रहिताः विसिचः दिगम्बराः।

स्थूलं सूक्ष्मं वा यद्देहं गृह्णाति तद्देहपरिमाण एव जीव इति नियमं दूषयति।

### अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः २–२–३६

अन्त्यशरीरपरिमाणस्यावस्थितेः नित्यत्वदर्शनादुभयो - शमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषः त्रयाणां नित्यपरिमाणानां साम्यं स्यात्, विरुद्धपरिमाणानामेकत्रायोगादिति सूत्रार्थः। आद्यमध्यमपरिमाणे नित्ये, आत्मपरिमाणत्वादन्त्य परिमाणवत्। नचाप्रयोजकता परिमाणनाशे सत्यात्मनोऽपि नाशादन्त्यपरिमाणनित्यत्वायोगादिति। पूर्वं कालत्रये परिमाणत्रयमङ्गीकृत्यान्त्यदृष्टान्तेन नित्यत्वमनुमाय साम्यमापादितम्। संप्रत्यन्त्यस्य मुक्तपरिमाणस्याणुत्वस्थूलत्वयोरन्यतरत्वेनावस्थितेः, तदेवा न्त्यमाद्यमध्यमकालयोरपि नित्यत्वात् स्यात् प्रागसतो नित्यत्वायोगात् तथा चाविशेषः - कालत्रयेऽपि जीवपरिमाणाभेद इत्याह अथवेति। तस्माज्जैनसिद्धान्तस्य भ्रान्तिमूलकत्वात्तेनाविरोध इति।

इत्येकस्मिनसंभवाधिकरणम्

## ७. अधिकरणम्

### पत्युरसामञ्जस्यात् २–२–३७

ब्रह्मप्रकृतिकं जगदिति वेदान्तसमन्वयो विषयः। कर्तैवेश्वरो न प्रकृतिरिति माहेश्वरमतेन विरूध्यते नवेति संशयः। सत्वासत्वयोरेकत्रसम्भ-वादेकत्राधिष्ठानत्वोपादानत्वयोरसम्भव इति दृष्टान्तसंगत्या पूर्वपक्षः। ज्ञानोत्कर्षः क्वचिद्विश्रान्तः सातिशयत्वात् परिमाणवदित्यनुमानेन माहेश्वरा ईश्वरं साधयन्ति) माहेश्वरास्तु मन्यन्त इति। कार्यं महदादिकम्। कारणं प्रधानमीश्वरश्च। योगः समाधिः। विधिः त्रिषवणस्नानादिः,

दुःखान्तो मोक्षः। पशवः जीवाः। तेषां पाशो बन्धः। विमतं सकर्तृकं कार्यत्वाद्घटवदिति वैशेषिकाः। कर्मफलं सपरिकराभिज्ञदातृकं कालान्तरभाविफलत्वात् सेवाफलवदिति गौतमा दिगम्बराश्च। ईश्वरो न द्रव्यं प्रत्युपादानं चेतनत्वात् कुलालवदिति पूर्वपक्षः। कुलालस्यापि सुखादिकं प्रत्युपादानत्वात् साध्यवैकल्यं स्यादतः साध्ये द्रव्यं प्रतीति। सिद्धान्तस्तु किं श्रुतिसिद्धस्यैवेश्वरस्यानुपादानत्वमनुमीयते उतानुमितस्य। नाद्यः, अनुपादानत्वानुमानस्यागमबाधितत्वात्। न द्वितीयः। यदि कुलालदृष्टान्तेनानुपादानत्वमीश्वरस्य साध्यते तर्हि तद्दृष्टान्तेनैवेश्वरस्य रागादिमत्त्वं स्यात्। ईश्वरः स्वार्थे रागादिमान् प्रवर्तकत्वात्। ईश्वरो रागादिमान् पुरुषत्वात् कुलालवदिति। आगमसिद्धस्य त्वागमप्रामाण्येनैव रागाद्यभाव उपादानत्वं च सिध्यति। अनुमानसिद्धस्यापि कर्मापेक्षित्वेनादोष इति वक्तुं न शक्यमन्योन्याश्रयापत्तेः। यदीश्वरो विषमसृष्टिकारी स्यात् वैषम्यनैर्घृण्यवान् स्यादिति प्रतिकूलतर्कः। यदीश्वरः कर्मापेक्ष्य प्रवर्तयति तर्हि अस्वतन्त्रः स्यादिति। यदीश्वरः प्रवर्तकः स्यात्तर्हि दोषवान् स्यात् (प्रवर्तनालक्षणा दोषा इति सूत्रात्) अस्माकं त्वेष ह्येव साधु कर्म कारयति निरवद्यमिति श्रुतिमूलं पूर्वकर्मापेक्षाकल्पनमिति वैषम्यम्।

## सम्बन्धानुपपत्तेश्च २–२–३८

ईश्वरः प्रधानपुरुषप्रेरको न भवति तदसम्बद्धत्वात्। सम्बन्धो हि संयोगो वा समवायो वाऽन्यो वा। सर्वगतत्वात् निरवयत्वाच्च संयोगो न सम्भवति। प्रधानपुरुषेश्वराणामाधाराधेयभावविरहेण समवायो न। ईश्वरप्रधानपुरुषाः सम्बद्धाः प्रपञ्चकार्यकारणत्वादित्यनेनान्यः कश्चन सम्बन्धः कल्प्यत इति चेन्न सन्दिग्धासिद्धेः। ईश्वरप्रेरितप्रधानकार्यं जगदिति सिद्धं चेत् सम्बन्धकल्पना स्यात् तस्याद्याप्यसिद्धेः। माया ब्रह्मणोस्त्वनिर्वाच्य तादात्म्यसम्बन्धः देवात्मशक्तिमितिश्रुतेः।

## अधिष्ठानानुपपत्तेश्च २–२–३९

प्रधानं चेतनाधिष्ठेयं न भवत्यप्रत्यक्षत्वादीश्वरवत् व्यतिरेकेण मृदादिवत्।

## करणवच्चेन्न भोगादिभ्यः २–२–४०

पूर्वोक्तानुमाने चक्षुरादौ व्यभिचार इति पूर्वपक्षः। भोगोपकरणत्वाभाववत्त्वे सतीति हेतौ विशेषणान्न व्यभिचारः। भोगादीत्यादि पदेन विषयानुभवो ग्राह्यः। करणग्रामसाम्ये चाभ्युपगम्यमाने इति भाष्येण प्रधानस्य भोगोपकरणत्वाङ्गीकारे स्वरूपासिद्धिरिति शङ्कोच्यते। तदेश्वरस्य भोक्तृत्वं स्यादिति समाधिः

परार्थपाचकाधिष्ठेयकाष्ठे व्यभिचारवारणाय विशेष्यम्। अतीन्द्रियत्व रूपाप्रत्यक्षत्वस्य विवक्षितत्वान्नेश्वरप्रत्यक्षे प्रधानादौ व्यभिचारः।

अन्यथेत्यादि व्याख्यानान्तरे - अधिष्ठानानुपपत्तेश्च। भवदभिमत ईश्वरः प्रपञ्चनियामको न भवति शरीराभावाद्व्यतिरेके राजवत्।

करणवच्चेन्न भोगादिभ्यः। करणवत् शरीरं चेदभ्युपगम्यते। ईश्वरो यदि शरीरवान् स्यात्तदा संसारी स्यादिति।

## अन्तवत्त्वमसर्वज्ञता वा २–२–४१

प्रधानपुरुषेश्वरा अन्तवन्तो ज्ञातेयत्ताकत्वाद्घटवत्। प्रधानपुरुषेश्वराणामन्तवत्त्वे सतीति। विनाशिभावत्वेनादिमत्त्वमनुमीयते। शून्यवादप्रसङ्ग इति। सर्वस्य शून्यपर्यवसायित्वप्रसङ्गः। यदीश्वरः प्रधानादीनामियत्तां न परिच्छिनत्ति तदाऽसर्वज्ञः स्यादिति। प्रधानादयः संख्यापरिमाणवन्तो द्रव्यत्वान्माषादिवदित्यनुमानेनेयत्ताऽस्तीति तदज्ञाने स्यादसर्वज्ञता। इयत्तायां चान्तवत्त्वमिति।

इति पत्यधिकरणम्

# ८. अधिकरणम्

## उत्पत्त्यसम्भवात् २–२–४२

जीवाभिन्नेश्वरे समन्वयविरोधाद्भागवतमतखण्डनसंगतिः। जीवाभिन्नेश्वरे समन्वयः जीवोत्पत्तिप्रतिपादक पांचरात्रागमेन विरुध्यते नवेति सन्देहः। वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनमभिगमनम्। पूजाद्रव्याणामर्जनमुपादानम्। इज्या पूजा। स्वाध्यायोऽष्टाक्षरादिजपः। योगो ध्यानम्। जीवोत्पत्तिप्रतिपादक पांचरात्रसंहितान्तर्गतत्वादभिन्ननिमित्तोपादानत्वप्रतिपादकांशवदिति पूर्वपक्षः। सिद्धान्तः। पूर्वपक्ष्यनुमाने वेदाविरुद्धार्थप्रतिपादकत्वमुपाधिः।

## नच कर्तुः करणम् २–२–४३

मनोरूपं करणं कर्तुर्नोत्पद्यते करणत्वात् परशुवत्। जीवो मनोरूपकरणकर्ता न भवति, करणान्तररहितत्वेसति कर्तृत्वात्। यत्करणजननोपयोगिकरणरहितत्वे सति यत्करणजन्यकार्यकर्तृत्वं यत्र तत्करणकर्तृत्वभावः। यथा छेदन कर्तरि परश्वकर्तरि। एवं तन्मनोऽसृजतेति श्रुत्या इश्वरसृज्यत्वस्यमनसिश्रवणान्मनसो जीवादुत्पत्तिः श्रुत्यनुमानबाधितेति।

## विज्ञानादिभावे वा तदप्रतिषेधः २–२–४४

वासुदेववत् संकर्षणादीनां विज्ञानादिभावे प्रकारान्तरेण तदप्रतिषेधः। चतुर्णामीश्वरत्वे एक एव भगवान् वासुदेव इति सिद्धान्तहानिः। एकस्यैव व्यूहाश्चत्वार इति पक्षे उत्पत्यसम्भवः।

## विप्रतिषेधाच्च २–२–४५

क्वचिज्ज्ञानैश्वर्यतेजांसि वासुदेवस्य गुणाइति क्वचिच्च गुणा एव वासुदेव इति परस्परविरोधः। एवं प्रद्युम्नानिरुद्धौ भिन्नावात्मन इत्युक्त्वा

आत्मान एवैते इति परस्परविरोधः १ परस्परविप्रतिषेधादनादरणीयं भागवतमतमिति।

एवं सांख्यवैशेषिकसौगतार्हतमाहेश्वरभागवतैर्मतैः निरवद्यादद्वैताद्ब्रह्मणो जगत्सर्वं ब्रुवन् समन्वयो न विरुध्यत इति सिद्धम्।

इति उत्पत्त्यसम्भवाधिकरणम्

इति श्रीगोडासुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
द्वितीयाध्यायस्य द्वितीयःपादः।



# अथ द्वितीयाध्यायस्य तृतीयःपादः

## १.अधिकरणम्

### न वियदश्रुतेः २-३-१

### अस्ति तु २-३-२

पूर्वपादे श्रुतिविरोधान्मिथोविरोधात् पूर्वापरविरोधाच्च परपक्षा उपेक्ष्या इत्युक्तम्। तथा परस्परविरोधाच्छ्रुतिपक्षोऽप्युपेक्ष्य इति शङ्कायां तादृशविरोधपरिहाराय पादद्वयारम्भादध्यायसङ्गतिः। अत्र पादद्वयेऽपि प्रथमं श्रुत्योर्विरोधेनाप्रामाण्यमिति पूर्वपक्षः। तदनन्तरमेकदेशिमतेन विरोधपरिहारः , ततः सिद्धान्तप्रतिपादनमिति क्रमः। श्रुत्यर्थनिर्मलत्व मर्थाभासनिवृत्त्या सम्यगर्थधीः। अस्य वाक्यस्यायमेवार्थ इति निर्धारणविषयत्वम्। पूर्वपादेन दृष्टान्तसंगतिश्च। आकाशस्योत्पत्तिप्रति पादकश्रुतिः तस्योत्पत्त्यप्रतिपादकछान्दोग्यवाक्येन विरुध्यते नवेति सन्देहः। महापूर्वपक्षिणैकदेशिना च विरुध्यत इति। सिद्धान्ते न विरुध्यत इति। वियन्नोत्पद्यते उत्पत्तिमत्वेनाश्रूयमाणत्वात्। आद्यसूत्रद्वयेन श्रुतिविप्रतिषेधप्रतिपादनेन परस्परविरोधाच्छ्रुतिपक्षो नादरणीय इति महापूर्वपक्षः।

### गौण्यसंभवात् २-३-३

वियदुत्पत्तिश्रुतिर्गौणी। वियत उत्पत्त्यसम्भवादित्यर्थः।

वियदुत्पत्तिरहिता सामग्रीशून्यत्वात्। वियदुत्पत्तिपूर्वकालोत्तरकाला वृत्तिविशेषरहितत्वात्। उत्पत्तिमतां चेत्यादिना द्वितीयहेतुः प्रपञ्चितः। अनवकाशमित्यादि - महाद्रव्याश्रयत्वयोग्यो देशोऽवकाशः। तद्विरुद्धा द्रव्याश्रयत्वयोग्यं सुषिरम्। अणुद्वयतत्संयोगाश्रयं छिद्रम्। एतत्त्रयरहितं न किञ्चित् प्रागासीदिति विशेषणानामर्थः। तत्र श्रुत्योर्विरोधेऽध्ययनविध्युपा त्तयोरप्रामाण्यायोगाद्वियदुत्पत्त्यसम्भवरूपतर्कानुगृहीतछान्दोग्यश्रुतिर्मुख्या, इतरा गौणीत्यविरोध इत्येकदेशिमतम्।

## शब्दाच्च २–३–४

वायुश्चान्तरिक्षंचैतदमृतमिति आकाशस्य नित्यत्वश्रवणान्नित्यभावस्य चानादित्वान्नोत्पत्तिः। अत उत्पत्तिश्रुतिर्गौणीति। श्रुत्यन्तराणि भाष्ये॥ आकाशशरीरमित्यत्र शरीरपदं स्वरूपपरम्। विभुत्वनित्यत्वाभ्यां शरीरत्वोपचारः।

## स्याच्चैकस्य ब्रह्मशब्दवत् २–३–५

पदोत्तरं सूत्रमिति –शङ्काप्रतिपादकपदघटितवाक्योत्तरं सूत्रमित्यर्थः। 'आत्मन आकाशस्संभूत' इत्यत्र संभूतशब्दो गौणो न भवति, आकाशाद्वायुरिति वाक्यघटकमुख्यार्थबोधकसंभूतशब्दविशिष्टत्वात्। यश्शब्दो यदर्थप्रतिपादकशब्दविशिष्टस्तदर्थभिन्नार्थप्रतिपादको न भवति। यथा अग्निहोत्रं जुहुयादिति वाक्यघटकाग्निहोत्रशब्दार्थभिन्नार्थाप्रतिपादकद ध्नाग्निहोत्रं जुहोतीतिवाक्यघटकाग्निहोत्रशब्दवत्। वैशिष्ट्यं च स्वगतानुपूर्वी समानानुपूर्वीकत्व,स्वप्रकरणगतत्वोभयसंबन्धेनेति पूर्वपक्षे ब्रह्मशब्दवदिति समाधानम्। तपो ब्रह्म तपसा ब्रह्म विजिज्ञासस्वेत्यत्र ब्रह्मशब्दे व्यभिचारः। एवमाकाशंनोत्पद्यत इत्येकदेशिमतम्। तत्र सिद्धान्ती आक्षिपति कथं पुनरिति। आकाशो यदि उत्पत्तिमान्न स्यात्तर्हि ब्रह्मज्ञानप्रयोज्यज्ञानविषयो नस्यात्। एवं ब्रह्म सद्वितीयमपि स्यादिति सिद्धान्त्याक्षेपः।

परिहरत्येकदेशी तदुच्यत इति। स्वकार्य विज्ञानस्यैव प्रतिज्ञातत्वेन प्रतिज्ञाश्रुतिविरोधाभावेनाद्याक्षेपे इष्टापत्तिः। ब्रह्म आकाशेन सद्वितीयं न भवति, आकाशलक्षणानन्यलक्षणकत्वात्। ब्रह्म तत्कार्यसमानदेशकाल त्वाच्च, ब्रह्मज्ञानेनैवाकाशमपि ज्ञातं भवति। तथा च श्रुतिविप्रतिषेधाच्छुति पक्षोऽनादरणीयइतिमहापूर्वपक्षे प्राप्ते आकाशस्योत्पत्तिरेव नास्त्युत्पत्तिश्रुति गौणीति श्रुतिविरोधे एकदेशिना परिहृते सिद्धान्ती आकाशस्योत्पत्तिरस्ति श्रुतिविरोधः परं नास्तीति सिद्धान्तयति। सिद्धान्तसूत्रम् —

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः २–३–६

आकाशो ब्रह्मण उत्पद्यते ब्रह्माव्यतिरिक्तत्वे सत्यनादिषट्क[1]भिन्नत्वात्। यदि आकाशं ब्रह्मणो नोत्पन्नं स्यात्तर्हि ब्रह्माव्यतिरिक्तं न स्यात्। ओमित्युक्ते प्रतिज्ञाहानिः स्यात्। आकाशो ब्रह्माव्यतिरिक्तो ब्रह्मज्ञानप्रयोज्यज्ञानविषयत्वात्। आकाशं यदि ब्रह्मोत्पन्नं न स्यात्तर्हि अप्रमाणभूतप्रतिज्ञासमर्थकप्रकृतिविकारभावप्रयोज्याव्यतिरेकसूचकशब्द, सृष्टि प्रतिपादकशब्दश्च स्यात्। अश्रुतेरित्यसिद्धं तैत्तिरीयके श्रूयमाणत्वात्।

यत्तु महापूर्वपक्षिणोच्यते छान्दोग्यश्रुतिः तैत्तिरीयकश्रुतिविरुद्धा, तेजोनिष्ठसाक्षाद्वायुजत्वविरुद्धतेजोनिष्ठसाक्षाद्ब्रह्मजत्वप्रतिपादकत्वादिति। तन्न। तेजसि साक्षाद्ब्रह्मजत्वस्य छान्दोग्येऽनुक्तत्वात् स्वरूपसिद्धिः। नहीयं श्रुतिरितिं भाष्यम्। छान्दोग्यश्रुतिराकाशाद्यनुत्पत्तिबोधिका तेज आदिमात्रसृऽष्टिप्रतिपादकत्वादित्याशङ्कायां वाक्यभेदापत्तिरिति। मात्रार्थस्य, श्रुत्यलभ्यत्वात् स्वरूपासिद्धिरित्यर्थः।

तेजःप्राथम्यस्वीकारे आकाशसृष्टिरूपधर्मीतद्धर्मः क्रमः प्राथम्यं चेति द्वयं बाधनीयम्। आकाशप्राथम्ये तु आर्थिकतेजः सर्गप्राथम्यमात्रबाध इति लाघवमिति मत्वाह - नेत्युच्यते। नहि तेजःप्राथम्यानुरोधेनेति। धर्मित्यागाद्वरं धर्मत्याग इत्याशयः। मायालीकवञ्चनादिभिरिति। माया भ्रान्तिः तया अलीकं मिथ्याभाषणं। तेन वञ्चनमयथार्थबोधनम्। अदिपदात् विप्रलिप्सा।

## यावद्विकारन्तु[2] विभागो लोकवत् २–३–७

आकाशो नोत्पद्यते सामग्रीशून्यत्वादित्यत्र सत्प्रतिपक्षमाह–आकाशो विकारो विभक्तत्वाद्घटवदिति। दिगादिषु व्यभिचारमाशङ्क्य

---

१. जीव ईशो विशुद्धाचित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

२. यावत्पदं व्याप्त्यर्थकम् । विकारव्याप्यो विभागः ।
व्याप्यत्वं तादात्म्यसम्बन्धेन ।

पक्षसमत्वान्नेत्याह - एतेन दिक्कालेति। आत्मनि व्यभिचारमाशङ्क्ते नन्वात्मापीति। धर्मिसमसत्ताकविभागवत्वस्य हेतुत्वान्नेत्याशयः। न चाविद्यादौ व्यभिचार इति वाच्यम्। अनादिपञ्चकभिन्नत्वे सतीति हेतोर्विशेषणीयत्वात्। तथाचानादिपञ्चकभिन्नत्वे सति योग्यसम्बन्धस्वस मान सत्ताकत्वोभयसम्बन्धेन विभागवत्वादिति हेतुः। आत्मा कार्यो विभक्तत्वात्, वस्तुत्वादित्याभाससाम्यमित्याशङ्क्य यद्यात्मा कार्यं स्यात् सर्वकारणं न स्यात्, ओमित्युक्ते आत्मा शून्यपर्यवसायी स्यादिति बाधकसत्वात्तस्याभासत्वेऽपि प्रकृतानुमानस्य नाभासत्वमित्याह — 'आत्मन आकाशस्संभूत' इति।

अथवा आत्मनि व्यभिचारवारणाय हेतुरेवात्मनि नास्ति। आत्मा विभक्तत्ववान्न सर्वकारणत्वात्। शून्यवादे इष्टापत्तिं ब्रुवाणं प्रत्याह - आत्मत्वादिति। आत्माभावः केनचिज्ज्ञायते नवा आद्ये ज्ञातुः परिशेषान्नशून्यता। द्वितीये प्रमाणाभावः। आत्मनः स्वतः स्फूर्तिकत्वात् स्वतः सत्ताकत्वाच्च न बाध्यत्वमित्येव। तथा चात्मनोऽविद्यासहितस्योपादा नकारणस्यादृष्टादेर्निमित्तकारणस्य च सत्वेन वियदनुत्पत्तिसाधकसामग्री शून्यत्वहेतुः स्वरूपासिद्ध इत्यभिप्रेत्याह कार्यत्वं चेति। आत्माविद्ययोर्विजा तीयत्वान्नाकाशारम्भकत्वंमित्युक्तमनूद्य दूषयति यत्तूक्तमिति। किं कारणमात्रस्य साजात्यनियमः उत समवायिनः नाद्य इत्याह — न च निमित्तकारणानामपीति। द्वितीयमाशङ्क्ते स्यादेतदिति। किं समवायितावच्छेदकधर्मेण साजात्यमुत सत्तादिना। तत्राद्यं निराचष्टे तदपीति सूत्रगोवालैरिति। द्वितीये इष्टापत्तिः, आत्माविद्ययोर्वस्तुत्वेन साजात्यादित्याह सत्त्वेति। उपादानस्य साजात्यनियमं निरस्य संयुक्तानेकत्वनियममद्वितीयस्यासंगस्यात्मन उपादानत्वसिद्धये निरस्यति नाप्यनेकमिति। अदृष्टवदात्मसंयुक्ते परमाणौ कर्मण उत्पत्तावपि कर्मसमवायी परमाणुरेक एव नानेक इति अनेकत्वनियमभङ्गः। प्रागभावशून्यत्वादाकाशो नोत्पद्यत इत्याशङ्कामनूद्य निरस्यति यच्चोक्तमिति।

येनैव विशेषेणेति। शब्द एव विशेषः। पृथिव्यादिवैधर्म्यम् — विभुत्वास्पर्शद्रव्यत्वनिरवयवद्रव्यत्वानि।

इति वियदधिकरणम्

## २. आधिकरणम्

### एतेन मातरिश्वा व्याख्यातः २–३–८

पृथगधिकरणारम्भवैयथर्यशङ्कां निरस्यति ननु वायो राकाशस्य चेति। वायुर्ह्येवैतान् सर्वान् वृङ्क्ते इत्यादिशब्दमात्रं शङ्कामूलं नार्थः। शङ्कामाह संवर्गेति। बृहदारण्यक तृतीयाध्यायकृतायाः अनेन ह्यात्मनैतत्सर्वं वेद — इति सर्वविज्ञानप्रतिज्ञायाः उपपादनाय वायुश्चान्तरिक्षमित्यादिक मात्म कार्यप्रदर्शनपरम्। अत एव पश्चान्नेति नेतीत्यादिना जगन्निषिद्धम्। तथा चोपपाद्यस्य प्रतिज्ञावाक्यस्यानुसारेणामृतत्वादि गौणतया नेयम्। अमृतत्वादिश्रुतिः वायूपासनाश्रुतिपरतया सावकाशा। अद्वैतश्रुतयश्च स्वार्थपरा एव, उपक्रमादिमत्त्वात्। प्रतिज्ञायाः प्रधानत्वाद्वाय्वाद्युक्तेः तदर्थतः। अद्वैतश्रुतिबाहुल्याज्जनौ वायोर्न गौणता। (शा. द.)

इति मातारिश्वाधिकरणम्

## ३. अधिकरणम्

### असम्भवस्तु सतोऽनुपपत्तेः २–३–९

''नचास्यकश्चिज्जनिता नचाधिपः'' त्वं जातो भवसिविश्वतोमुख इति श्रुतिविप्रतिषेध इति महापूर्वपक्षः। यथावाय्वादेरमृतत्वादिकमुत्पत्तिश्रुति मूलादापेक्षिकं तथा ब्रह्मानादित्वमपीति दृष्टान्तसंगत्याएकदेशिपूर्वपक्षः। ब्रह्म कुतश्चिज्जायते कारणत्वादाकाशवदित्यनुमानानुगृहीतजन्मश्रुत्या ब्रह्मणोऽपि जन्मवत्वमिति पूर्वपक्षः। सिद्धान्तः— असम्भवस्त्विति। ब्रह्म न जायते कारणशून्यत्वात् नरविषाणवत्, व्यतिरेकेण घटवच्च,

विपक्षे अकारणककार्यवाद प्रसङ्गः। एतादृशानुमानानुगृहीतब्रह्मानादित्वश्रुतयो बलीयस्य इति। नच हेत्वसिद्धिः कारणस्यानिरूपणात्। तथाहि — किं सन्मात्रस्य ब्रह्मणः सन्मात्रं कारणं, सद्विशेषो वा असद्वा। त्रयमपि निराचष्टे सन्मात्रं हीति। कारणस्यानभ्युपगमे यदृच्छावादप्रसंगः। अनादिकारणानभ्युपगमेऽनवस्थाप्रसंगः। तदभ्युपगमे ब्रह्मवाद प्रसङ्गः कारणान्तरस्य प्रधानादेर्निरासात्।

इत्यसम्भवाधिकरणम्

## ४.अधिकरणम्

### तेजोतस्तथाह्याह २–३–१०

तत्तेजोऽसृजत - वायोरग्निरिति श्रुत्योर्विरोधोऽस्ति नवेति सन्देहः। पूर्वत्र सामान्यात् सामान्योत्पत्तिर्मास्तु सामान्याद्ब्रह्मणोविशेषस्य तेजस उत्पत्तिरस्त्विति प्रत्युदाहरणसंगत्या पूर्वपक्षः। सर्वत्र एकवाक्यत्वासम्भवसम्भवौ संशयबीजम्। पूर्वपक्षे श्रुतीनां विरोधादप्रामाण्यं सिद्धान्ते प्रामाण्यम् कार्यमात्रस्य विवर्तत्वात् कल्पितस्य वायोस्तेजः कल्पनाधिष्ठानत्वायोगाद् ब्रह्मैव तेजस उपादानं, सर्वकार्याणां ब्रह्मैवोपादानमित्यर्थे श्रुतीनां भूयस्त्वाच्च वायोरग्निरिति क्रमार्थापञ्चमीत्यविरोध इत्येकदेशिमतं प्राप्तं तावदिति। एवं प्राप्ते इति। वायोरग्निरित्यत्र पञ्चमी प्रकृतित्वार्थिका जायमानार्थपदसमभिव्याहारादात्मन इति पञ्चमीवत्। प्रकृतित्वार्थकपञ्चमी प्रायपठितत्वादिति सिद्धान्तः तथा च न विरोध इति।

इति तेजोधिकरणम्

## ५. अधिकरणम्

### आपः २–३–११

मुण्डके एतस्माज्जायते .......खं वायुर्ज्योतिरापः इति श्रूयते, तस्याग्नेराप इति श्रुत्या विरोधो नवेति सन्देहे तुल्यत्वाद्विरोध इति महापूर्वपक्षः। अपामग्निदाह्यत्वेन विरोधादग्निजत्वासम्भवात् क्रमार्था

पञ्चमीत्येकदेशिमतम्। त्रिवृत्कृतयोर्विरोधेऽपि अत्रिवृत्कृतयोः नास्ति विरोध इति अपामग्निजत्वं सम्भवत्येवेति न श्रुत्योर्विरोध इति सिद्धान्तः।

इत्यबधिकरणम्

## ६. अधिकरणम्

### पृथिव्यधिकाररूपशब्दान्तरेभ्यः २-३-१२

ता अन्नमसृजन्त, अद्भ्यः पृथिवीति श्रुत्योर्विरोधः। ता अन्नमसृजन्त इत्यत्रान्नशब्देन व्रीहियवाद्योदनादि वा ग्राह्यमिति पूर्वपक्षः। अन्नशब्देन पृथिव्येव ग्राह्या, महाभूतसृष्ट्यधिकारात्, कृष्णरूपत्वात्। समानाधिकारे श्रुत्यन्तरेऽद्भ्यः पृथिवीति पृथिव्या एवाब्जन्यत्वोक्तेः। पृथिवी अब्जन्या पृथिवीत्वादन्नवत्। एवं तैत्तिरीयानुसारेण छान्दोग्यश्रुतेर्नयनादविरुद्धो भूतसृष्टिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धान्तः।

इति पृथिव्यधिकाराधिकरणम्

## ७. अधिकरणम्

### तदभिध्यानादेव तु तल्लिङ्गात् सः २-३-१३

आश्रयाश्रयिभावसंगत्या प्रवृत्तिः। भूतान्याश्रित्य तेषां स्वातन्त्र्यं पारतन्त्र्यं वेति विचारणात्। आकाशादिश्रुतेः य आत्मनि तिष्ठन्निति श्रुतेश्चाकाशादिस्वातन्त्र्यपारतन्त्र्यविषयतया विरोधेनाप्रामाण्यमिति पादसंगतपूर्वपक्षः। तत्रैकदेशी आकाशादयश्चेतनाः ईक्षणवत्त्वात्, आकाशादयोऽबादिकर्तारः स्रष्टृत्वेन श्रूयमाणत्वादिति पूर्वपक्षयति।

सिद्धान्तः — आकाशादयो न स्रष्टारोऽचेतनत्वात्। ईक्षणवत्वहेतुः स्वरूपासिद्धः। सद्रूपचेतनगतेक्षणवत्वस्य तत्रोक्तत्वात् गौणत्वाद्वा। ईश्वर एव वाय्वादिकर्ता तदनुकूलेक्षणवान्। अन्तर्यामि ब्राह्मणे तन्नियामकत्वेनोक्त

त्वात्। तदन्यार्थतात्पर्यकत्वे सति तद्बोधकं तल्लिङ्गम्। स ईश्वरः तस्यान्तर्यामित्वलिङ्गात् तदभिध्यानात् ईश्वरेक्षणादेव भूतेषु श्रुतेक्षणोपपत्तिः। स ईश्वरः तत्तदात्मना स्थितः कर्ता।

इति तदभिध्यानाधिकरणम्

## ८. अधिकरणम्

### विपर्ययेण तु क्रमोऽत उपपद्यते च २–३–१४

उत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थो भवतीति प्रासङ्गिक्यावेव पादावान्तरसंगती। भूतप्रलयोऽनियतक्रमो नियतत्वेनाश्रूयमाणत्वात्। अथवा भूतप्रलयो भूतोत्पत्तिसमानक्रमः श्रौतत्वाद्भूतोत्पत्तिवदिति पूर्वपक्षः। भूतप्रलयः उत्पत्तिक्रमविपरीतक्रमः तत्त्वेनलोकसिद्धत्वात् तथा स्मर्यमाणत्वात् सत्प्रकृतिकत्वात्। भूतप्रलयः कारणलयपूर्वको न भवति प्रलयत्वात् संप्रतिपन्नवत्। अत्रोत्पत्तिक्रमाद्विपरीतक्रमनिर्णयात् सिद्धान्ते भूतानां प्रातिलोम्येन लयध्यानपूर्वकं प्रत्यग्ब्रह्मणि मनस्समाधानं फलम्। पूर्वपक्षे सर्वलयाधार ब्रह्मासिद्धेस्तदभावः।

इति विपर्ययाधिकरणम्

## ९. अधिकरणम्

### अन्तराविज्ञानमनसी क्रमेण तल्लिङ्गदिति चेन्नाविशेषात् २–३–१५

उक्तभूतोत्पत्तिलयक्रमः करणानामुत्पत्तिक्रमेण विरुध्यते नवेति संशयः विरुध्यते अतोऽप्रामाण्यमिति महापूर्वपक्षः। एकदेशिमते उत्पत्तिक्रमस्यानुक्तत्वेन करणोत्पत्तेः भूतक्रमाविरोध इति। सिद्धान्तस्तु — अविशेषात् — करणानां भौतिकत्वेन करणोत्पत्तौ भूतोत्पत्तिक्रमाद्विशेषो नास्तीति। प्राणेन्द्रियमनांसि भौतिकानि

भूताधीनवृद्धिमत्वात् देहवदिति। अन्तरा = ब्रह्मणो भूतानां च मध्ये, विज्ञानमनसी = बुद्धीन्द्रियमनांसि क्रमेणोत्पद्यन्ते। तल्लिङ्गात् = एतस्माज्जायते प्राण इत्यादि श्रुति वाक्यरूपाल्लिङ्गादिति पूर्वपक्षभागार्थः। सूक्ष्मभूतात्मकप्रजापतिसर्गः प्रथमः ततो मन आदि सर्ग इति तथान्यत्रापि इत्यादि।

इति अन्तराविज्ञानाधिकरणम्

## १०. अधिकरणम्

### चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् २–३–१६

तद्व्यपदेशः = जन्मादिव्यपदेशः, चराचरदेहविषयो मुख्यः, जीवे तु भाक्तः औपाधिकजन्मादिविषयत्वादुपाधिजन्मादिभावे भावादिति सूत्रार्थः। एवं तावत् तत्पदवाच्यकारणत्वनिर्णयाय भूतोत्पत्तिश्रुतिविरोधो निरस्तः। इदनीमापादसमाप्तेः त्वंपदार्थशुद्ध्यै जीवविषयश्रुतिविरोधपरिहारः क्रियतें। तत्र यथापूर्वं करणोत्पत्तिश्रुत्या भूतोत्पत्तिश्रुतेरविरोध इत्युक्तम्। न तथेह जीवोत्पत्तिश्रुत्याऽविरोधः। तदुत्पत्तौ भूतोत्पत्तिक्रमभंगस्याव शयकत्वादिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। जीवनित्यत्वश्रुतीनां जीवजननमरणनिमित्तजातकर्मश्राद्धादिविधीनां च विरोधेन पूर्वपक्षः। जातकर्मादिविध्यन्यथानुपपत्त्या जीवस्योत्पत्तिरङ्गीकार्या। जीवनित्यत्वश्रु तयो भाक्ता इत्येकदेशिमतम्। श्राद्धादिविधेरन्यथोपपादयितुमशक्यत्वाज्जी वनित्यत्वमवश्यमङ्गकरणीयम्। जातकर्मादिविधीनां जीवसंयुक्तदेहजन्मनि मित्तं भवतीति सिद्धान्तः।

इति चराचराधिकरणम्

## ११. अधिकरणम्

### नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः २–३–१७

यथाग्नेर्विस्फुलिंगाः .......सर्व एत आत्मानो व्युच्चरन्ति। स एष इह प्रविष्ट आनखाग्रेभ्यः, 'सवा एष महानज आत्मे' त्यादिश्रुतीनां मिथो विरोधात् संशये स्वर्गादि भोगाय देहनाशेऽप्यात्मा न नश्यतीत्युक्तम्। तर्हि कल्पमात्रावस्थानेपि स्वर्गादिभोगसम्भवाज्जीवः कल्पाद्यन्तयोरुत्पत्ति विनाशवानिति प्रत्युदाहरणसंगतिः। जीवो ब्रह्मणउत्पद्यते, ब्रह्मज्ञानप्रयोज्य ज्ञानविषयत्वात्। नचाविकृतः परमात्मैवेति। जीवः परस्माद्भिन्नो विरुद्धधर्मवत्त्वात्। एवं जीवो विकारो विभक्तत्वात्। जीवरूपविकारात्मना प्रविष्ट इति प्रवेशश्रुतिः व्याख्येयेत्येकदेशिमतम्। "तत्सृष्ट्वा तदेवानुप्राविशत्"। अनेन जीवेनेत्यादिश्रुतिभ्यो जीवब्रह्मणोरभेदः, भेदस्त्वौपाधिकः। अतो विभक्तत्वस्य सत्यस्य हेतुत्वेऽसिद्धिः। औपाधिकस्य हेतुत्वेऽप्रयोजकत्वम्। तथा चात्मा नोत्पद्यते उत्पत्त्यश्रवणात्। ताभ्यः श्रुतिभ्यो नित्यत्वान्नित्यत्वावगमात्। अविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात् प्रतिज्ञोपरोधोऽपि नास्तीति सिद्धान्तः। जीवस्य ब्रह्माभेदविरोधीनि अनित्यत्वास्वप्रकाशत्वाणुत्वस्वाभाविककर्तृत्वानि एतदाद्यधिकरणैर्निराक्रियन्ते। एवं ज्ञाताभेदयोग्यताकस्य ब्रह्मैक्यमंशो नानेत्यधिकरणे वक्ष्यते।

इति आत्माधिकरणम्

## १२. अधिकरणम्

### ज्ञोऽत एव २–३–१८

आत्मा स्वयंप्रकाशः शश्वत्सन्देहरहितत्वाद्व्यतिरेकेण घटवत्। न चाप्रसिद्धविशेषणत्वम् अयं घटः एतदन्यज्ञेयत्वानधिकरणभासमानान्यः प्रमेयत्वात् पटवदित्यनेन किञ्चिन्निष्ठे स्वप्रकाशत्वे सिद्धे आत्मन्यनुमानेन साधयितुं शक्यत्वात्।

आत्मैवास्य ज्योतिरित्याद्यात्मस्वप्रकाशत्वश्रुतयः पश्यञ्चक्षुः शृण्वन्श्रोत्रमित्यनित्य— ज्ञानवत्त्वश्रुतिभिर्विरुध्यन्ते नवेति संशयः। प्रागुक्तजीवानुत्पत्तिं हेतुमादाय स्वप्रकाशत्वसाधनाद्धेतुहेतुमद्भावसंगतिः। पूर्वपक्षे जीवस्य ब्रह्मैक्यायोग्यता। सिद्धान्ते तद्योग्यताफलम्। जीवगतचैतन्यमागन्तुकं सुषुप्त्यादिष्ववृत्तित्वादिति पूर्वपक्षः। (एकदेशिमतम्) जीवः चैतन्यस्वभावः ब्रह्माभिन्नतत्त्वात् ब्रह्मवत्। जीवो वेदनास्वरूपो यो वेदेदं जिघ्राणीति श्रुत्युक्तत्वात्। सुषुप्त्यादिष्ववृत्तित्वरूपपूर्वपक्षहेतुः स्वरूपासिद्धः।

इति ज्ञाधिकरणम्

## १३. अधिकरणम्

### उत्क्रान्तिगत्यागतीनाम् २–३–१९

सर्वव्यापीति सर्वगतत्वश्रुतेः 'एषोऽणुरात्मा' इत्यणुत्वश्रुतेश्चाविरोधप्रदर्शनायेदमधिकरणम्। स्वप्रकाशत्वमान्तरमपरिच्छिन्नत्वं बाह्यमित्यन्तर्बहिर्भावसंगतिः। जीवोऽणुपरिमाणो मध्यमपरिमाणशून्यत्वेसति विभुपरिमाणरहितत्वात्। जीवो न मध्यमपरिमाणो नित्यत्वात्। न विभुपरिमाणः उत्क्रान्त्यादिमत्वेन श्रूयमाणत्वात्। नाणुरतच्छ्रुतेरिति सूत्रात् अणुरिति श्रुतेरिति चानुकृष्य सूत्रं भाष्ये पूरितम्।

### स्वात्मना चोत्तरयोः २–३–२०

उत्क्रान्तिर्नाम देहस्वाम्यनिवृत्तिः तस्याश्च जीवस्य विभुत्वे सम्भवान्न तदर्थमणुपरिमाणस्वीकार आवश्यक इति शङ्कायामिदं सूत्रम्। उत्कान्तेरुत्तरयोर्गत्यागत्योः स्वात्मना जीवात्मना कर्त्रा सम्बन्धाज्जीवस्याणुत्वम्। वस्तुतो देहान्निर्गम एवोत्क्रान्तिरित्याह सत्योश्चेति। तत्र लिङ्गमाह — देहप्रदेशानामिति।

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २–३–२१

जीवोऽणुर्न महत्त्ववत्त्वेन श्रूयमाणत्वादिति पूर्वपक्षः। स्वरूपासिद्धोयंहेतुरीश्वर एव श्रूयमाणत्वात्। (ईश्वरप्रकरणे उक्तत्वादिति) इतराधिकारात् = ब्रह्मप्रकरणात्।

## स्वशब्दोन्मानाभ्यां च २–३–२२

जीवोऽणुः एषोऽणुरात्मेति साक्षादणुत्ववाचकाणुशब्देनोक्तत्वात्। वालाग्र शतभागस्येत्यनेनोन्मितत्वाच्च। उद्धृत्य मानमुन्मानम् अत्यन्ताल्पत्वमित्यर्थः।

## अविरोधश्चन्दनवत् २–३–२३

यत्रैकदेशवर्तित्वं (अणुत्वं) तत्र न सकलदेहावच्छिन्नोपलब्धिजनकत्वमिति व्याप्तिमूलकस्य यद्यात्मा अणुः स्यात् तर्हिसकलदेहावच्छिन्नोपलब्धिजनको न स्यादिति प्रतिकूलतर्कस्य चन्दनबिन्दौ व्यभिचारेण शिथिलमूलकत्वात्। (व्याप्ति) न तेन तर्केण विरोधः।

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २–३–२४

आत्मा सकलशरीव्यापी शरीरैकदेशमात्रवृत्तित्वेनाप्रमितत्वे सति शरीरव्यापिकार्यकारित्वात् त्वग्वदिति शङ्कापक्षः। तत्र हेतुविशेषणमसिद्धम्। हृदि ह्येष आत्मेत्यादिश्रुतिभिरेकदेशस्थत्वस्य प्रमितत्वादिति समाधानम्।

## गुणाद्वालोकवत् २–३–२५

प्रतिकूलतर्कभूताया यत्र यत्रैकदेशवर्तित्वं तत्र सकलदेशावच्छिन्नकार्याजनकत्वमिति व्याप्तेः प्रदीपे व्यभिचारः तस्यैकदेशवर्तित्वेऽपि प्रभाद्वारा सकलदेशावच्छिन्नकार्यजनकत्वात्। स्वरूपस्वगुणान्यतररूपेण सकलदेशवर्तिनः सकलदेशावच्छिन्नकार्यजनकत्वसम्भवेन प्रकृते जीवस्याणुत्वेनैकदेशवर्तित्वेऽपि तद्गुणस्य चैतन्यस्य सकलदेशावच्छिन्नोपलब्धिजनकत्वं

सम्भवतीति। प्रतिकूलतर्कतादवस्थ्यं शङ्कते कथं पुनरिति। ज्ञानं न गुणि-व्यतिरेकदेशव्यापिगुणत्वात् रूपवत्। नच प्रभायां व्यभिचारः तस्याद्रव्यत्वादिति शङ्काशयः।

## व्यतिरेको गन्धवत् २–३–२६

गुणस्य व्यतिरेकः आश्रयविश्लेषः। तथा च शङ्कितुरनुमानस्य गन्धे व्यभिचार इत्यर्थः। अक्षीयमाणमपीति। विमतमविश्लिष्टावयवं पूर्वावस्थातो गुरुत्वाद्यपचयहीनत्वात् सम्मतवदित्यनुमीयते। अप्रयोजकत्व माशङ्कते स्यादेतदिति। विश्लिष्टानामल्पत्वादवयवान्तराणां प्रवेशाच्च गुरुत्वाद्यपचयहीनत्वमुपपद्यते, विश्लेषः प्रवेशश्च न ज्ञायत इति। विश्लिष्यमाणानामवयवानां परमाणुत्वे रूपानुपलब्धिवद्गन्धस्याप्यनुप लब्धि प्रसङ्गः। त्रसरेणुत्वे गन्धः स्फुटो न स्यादिति समाध्याशयः। गन्धो न गुणिविश्लिष्टः गुणत्वाद्रूपवदिति शङ्कते रूपादिष्विति। प्रत्यक्षबाधमाह प्रत्यक्षेति।

## तथा च दर्शयति २–३–२७

आत्मनश्चैतन्यगुणेनैव देहव्याप्तिरिति श्रुतिः 'आलोमभ्य आनखाग्रेभ्य' इति दर्शयति।

## पृथगुपदेशात् २–३–२८

तत्रैव प्रज्ञया शरीरं समारुह्येत्यात्मज्ञानयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यद्वारा शरीरव्यापित्वं गम्यते। तथाच जीवोऽणुः तस्य गुणो ज्ञानं व्यापकमिति पूर्वपक्षः। (एकदेशिमतम्) आत्मा ज्ञानभिन्नः तत्प्रति—पादकशब्दविशिष्टशब्दबोध्यत्वात्। वैशिष्ट्यं च स्वघटित वाक्यघटकत्व - स्वप्रकृतिकविभक्तिविरुद्धविभक्तिप्रकृतित्वोभयसम्बन्धेन।



११

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् २–३–२९

जीवोऽर्णुर्न (विभुः) अविकृतंब्रह्माभिन्नत्वात्। नचाणोरित्यादिपूर्वोक्त प्रतिकूलतर्क एव व्यवस्थाप्यते। ज्ञानं न गुणिव्यतिरेकदेशव्यापि गुणत्वादिति पूर्वोक्तानुमाने प्रदर्शितं गन्धे व्यभिचारमुद्धरति गन्धोऽपीति। गन्धो नाश्रयाद्विश्लिष्टो गुणत्वात् रूपवदित्यत्रागममाह — तथा चोक्तमिति। नच प्रत्यक्षबाधः गन्धस्य प्रत्यक्षत्वेऽपि निराश्रयत्वस्याप्रत्यक्षत्वात्। चैतन्यस्य गुणत्वमेवासिद्धमित्याह यदि चेति। एवमात्मनो विभुत्वे सिद्धेऽणुत्वव्यपदेशमुपपादयति सूत्रकारः। अन्तरा विज्ञानमनसी इति हृदीति च प्रकृता बुद्धिस्तच्छब्देन परामृश्यते। बुद्धिगुणानामात्मन्यध्यासाद णुत्वाद्युक्तिर्न स्वत इति, आनन्त्यश्रुतिविरोधात्। उत्तरसूत्रमवतारयति स्यादेतदिति। यद्यात्मा तद्गुणसारः स्यात् तर्हि बुद्धिसम्बन्धवान् स्यात्, ओमित्युक्ते ज्ञानेन विना निवृत्तसंसारः स्यादिति शङ्काशयः।

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् २–३–३०

बुद्धिसंयोगस्य यावत्संसार्यात्मभावित्वान्न दोषः। देहवियोगेऽपि बुद्धिसंयोगस्य ससमानः सन्नुभौ लोकावनुसञ्चरतीति श्रुतौ दर्शनात्। सति मूले कार्यवियोगो न सम्भवतीति उपपत्तिमाह अपि चेति। यावदात्मा जीवः तत्त्वज्ञानानुत्पत्तिविशिष्टः तावद्भावित्वादुपाधिसम्ब न्धस्य नोक्तदोषः। यावदात्मभावित्वस्यासिद्धिमाशङ्कते ननु सुषुप्तप्रलययो रिति।

## पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगात् २–३–३१

अस्य बुद्धिसम्बन्धस्येति।

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवान्यथा २–३–३२

प्रतीयमानरूपाद्युपलब्धिः कादाचित्कनिमित्तका कादाचित्कत्वात् घटवत्। रूपाद्यनुपलब्धिः कादाचित्कनिमित्ताभावप्रयुक्ता कादाचित्कत्वात्

अन्यथा विपक्षे सार्वैदिकी प्रसज्यते। सिध्यतो निमित्तस्य आत्मेन्द्रियशक्तिप्रतिबन्धरूपताऽसंभवेन यत्किञ्चित्सम्बन्धरूपतेति तत्सम्बन्धाश्रयस्य मनसः सिद्धिरिति।

इति उत्क्रान्तगत्यधिकरणम्

## १४.अधिकरणम्

### कर्ता शास्त्रार्थवत्वात् २-३-३३

तद्गुणसारत्वाधिकारेण-अधिकारः प्रसङ्गः। अत्र 'असङ्गो ह्ययं पुरुष' इति श्रुतीनां विध्यादिश्रुतीनां चात्मकर्तृत्वाकर्तृत्ववादिनीनां बन्धमोक्षावस्थाविषयत्वेन विरोधः परिह्रियते। सांख्यमतानुसारेणाकर्ता जीव इति पूर्वपक्षे सिद्धान्तः-यदि जीवः कर्ता न स्यात्तर्हि निष्प्रयोजनकशास्त्रकः स्यादिति। वस्तुतः असङ्गत्वमविद्यातः कर्तृत्वमिति श्रुतिद्वयाविरोधः।

### विहारोपदेशात् २-३-३४

स्वे शरीरे यथाकामं परिवर्तत इति संचरणस्योपदेशादकर्तुः तदसंभवात् कर्तृत्वम्।

### उपादानात् २-३-३५

'प्राणानां विज्ञानेन विज्ञानमादाये' ति करणोपादानश्रवणात् कर्तृत्वम्। प्राणानां मध्ये विज्ञानेन बुद्ध्या विज्ञानं इन्द्रियजातमादाय शेते।

### व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः २-३- ३६

'विज्ञानं यज्ञं तनुते' इत्यादिश्रुतिभिर्लौकिकवैदिकक्रियायां कर्तृत्वव्यपदेशाच्च। न चेत्- विज्ञानशब्दो यदि न स्यात्

तदा निर्देशविपर्ययः स्यात् विज्ञानेनेति। अत्राहेति- यो यज्जातीयक्रियास्वतन्त्रः स तज्जातीयेष्टकर्त्रीति व्याप्तेः आत्मनः स्वातन्त्र्यं न संभवतीति शङ्का।

## उपलब्धिवदनियमः २-३-३७

पूर्वोक्तव्याप्तेः उपलब्धिक्रियाकर्तीरि व्यभिचार इत्यर्थः। चक्षुरादीनां विषयोपनायकत्वात् तदुपलब्धौ चात्मनश्चेतनत्वेन स्वातन्त्र्यादुपलब्धि दृष्टान्तस्य नासिद्धिरित्याह- न विषयप्रकल्पनेत्यादि। आत्मनः कारणापेक्षितया न स्वातन्त्र्यमित्याशङ्क्याह न च सहायापेक्षस्येति। स्वान्यानपेक्षत्वं न स्वातन्त्र्यम्। तथा सति ईश्वरस्यापि प्राणिकर्मापेक्षत्वेनास्वातन्त्र्यप्रसङ्गात्। किन्तु स्वेतरकारकप्रयोक्तृत्वे सति इतरकारकाप्रयोज्यत्वम्। तादृशश्च करणापेक्षत्वेऽप्यक्षतमेव।

## शक्तिविपर्ययात् २–३–३८

बुद्धिः कर्त्री न भवति करणशक्तिबोधकतृतीयान्तशब्दबोध्यत्वात्। अन्यथा बुद्धेः करणशक्तिविपरीता कर्तृशक्तिः स्यादित्यर्थः। सत्यां च बुद्धेरिति। योऽहं-बुद्धिगम्यः स एव कर्ता जीवश्च। तदपेक्षितकरणमेव मन इति जीवकर्तृत्वसिद्धिः।

## समाध्यभावाच्च २–३–३९

आत्मनोऽकर्तृत्वे 'आत्मा वा अरे द्रष्टव्य' इत्यादौ विहितस्य ब्रह्मसाक्षात्कारसाधनस्य समाधेरभावप्रसङ्गादात्मनः कर्तृत्वसिद्धिरिति।

इति कर्त्रधिकरणम्

# १५. अधिकरणम्

## यथा च तक्षोभयथा २–३–४०

पूर्वाधिकरणे स्थापितमात्मनः कर्तृत्वं स्वाभाविकमुतौपाधिकमिति संशयः। उपजीव्योपजीवकभावसंगतिः। कर्तृत्वसाधकहेतुभिः स्वाभाविक

मेव तत्सिद्ध्यतीति पूर्वपक्षः। सिद्धान्तस्तु आत्मगतकर्तृत्वं स्वाभाविकं न ज्ञाननाश्यत्वात्। आत्मनः कर्तृत्वे स्वाभाविकेऽनिर्मोक्षप्रसंगमुक्त्वा असंगत्वादिबोधकश्रुतिविरोधमाह अपि चेति। नहि विवेकिनामिति। जीवः स्वाभाविककर्तृत्ववान्न ब्रह्माभिन्नत्वात्। बुद्ध्यादिसंघातव्यतिरिक्तो यदि परस्मादन्यश्चेतनो न स्यात् तदा पर एव संसारी प्रसज्येत। तच्चानिष्टम्। परस्य नित्यमुक्तत्वव्याघातादिति शङ्कते पर एवेति। अविद्यान्तःकरणादौ प्रतिबिम्बितस्य चैतन्यस्याविद्यया शुद्धचितो भिन्नस्य बन्धमोक्षौ। कल्पितभेदोऽपि बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थापकतया लोके दृष्ट इति समाध्याशयः। उक्तार्थे प्रमाणमाह यत्र हीत्यादिना। नचैवं संतीति बुद्धि विशिष्टात्मनः कर्तृत्वे विशेषणीभूतबुद्धेरेव करण त्वोपपत्तेः न करणान्तरकल्पनप्रसङ्गः। विध्यादिश्रुतीनां कल्पितकर्तृत्वोपजीवित्वात् असङ्गश्रुतीनां च वास्तवासङ्गत्वबोधकत्वान्मिथो विरोधाभावान्नित्यशुद्धे ब्रह्मणि समन्वयसिद्धिः। स्वाभाविककर्तृत्वसाधकान् हेतूननूद्य खण्डयति यत्तूक्तमिति। शास्त्रार्थवत्वविहारोपादानानि लोकसिद्धकर्तृत्वमनूद्य प्रवृत्तेः न स्वाभाविककर्तृत्वसाधकानि। व्यपदेशरूपो हेतुः बुद्धेरेव कर्तृत्वप्रापकः विज्ञानशब्दस्य तत्र प्रसिद्धेः। स्वस्वव्यापारेषु सर्वकारकाणां कर्तृत्वस्वीकाराच्छक्तिवैपरीत्यप्रसङ्गोऽपि न दोषः। यथाप्राप्तं कर्तृत्वमुपादाय समाधिविधानात् समाध्यभावहेतुरपि न स्वाभाविककर्तृत्वसाधक इति। यथा स्वशरीरेणोदासीनस्तक्षा सुखी वास्यादीनि करणानि व्यापारयन् दुःखी एवमात्मा स्वतोऽकर्ता बुद्ध्याद्युपाधिना तु कर्तेत्युभयथा इति सूत्रार्थः।

इति तक्षाधिकरणम्

## १६. अधिकरणम्

### परात्तु तच्छ्रुतेः २-३-४१

उपजीव्योपजीवकभावसंगतिः। 'एष ह्येव साधु' इत्यादिश्रुतीनां विधिश्रुत्यादिभिर्विरोधसन्देहे बुद्ध्यादिकारकसम्पत्तौ प्रवृत्तेर्व्यतिरेकादर्शनान्ने

श्वरः प्रयोजकः, प्रयोजकत्वे नैर्घृण्यादिप्रसङ्ग इति पूर्वपक्षः। श्रुतिबलादीश्वरस्य प्रयोजकत्वमिति परादीश्वरादविद्यातिमिरान्धस्य जीवस्य कर्तृत्वादि संसार सिद्धिः तदनुग्रहे तु विज्ञानेन मोक्षसिद्धिर्भविष्यति। तच्छ्रुतेः -ईश्वरस्य प्रयोजकताश्रुतेरित्यर्थः।लोके हि द्विविधः प्रेरको दृष्टः। वाय्वादिकमिच्छामनुपहृत्यैव प्रेरयति। आचार्यादिस्त्विष्टसाधनतां बोधयन्निच्छामुपहृत्यैव प्रेरयति। ततश्च जीवे इच्छादिपूर्विकायाः प्रवृत्तेरुपलब्धेः ज्योतिष्टोमादिशास्त्राच्चेश्वरस्य प्रेरकतेच्छोपहारेणैव कल्प्यत इति शास्त्रद्वयमुख्यतोपपत्तौ नान्तर्यामिशास्त्रं प्रशंसामात्रार्थं कल्पनीयमिति सिद्धान्ताशयः।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैय्यर्थ्यादिभ्यः २–३–४२

धर्माधर्माभ्यामेव फलवैषम्यसिद्धेरलमीश्वरेणेत्याशङ्क्य बीजैरेवाङ्कुरवैष म्यसिद्धेः पर्जन्यवैयर्थ्यं स्यात्। यदि विशेषहेतूनां साधारणहेत्वपेक्षत्वान्न वैयर्थ्यं तर्हीश्वरस्यापि साधारणहेतुत्वान्न वैयर्थ्यमित्याह — यथा लोके इति। तस्मात् कर्मसापेक्षेश्वरस्य कारयितृत्वादेषह्येवेत्यादि श्रुतेर्विध्यादि श्रुत्यविरोध इति।

[नच ईश्वरतन्त्रस्य जीवस्य विधिनिषेधवैय्यर्थ्यापत्तिर्बाधिका विधिनिषेधप्रमितयोरिष्टानिष्टसाधनयोः रागद्वेषोपसंहारमुखेनेश्वरस्य प्रेरकत्वात्। (शास्त्रदर्पणे)]

इति परायत्ताधिकरणम्

## १७. अधिकरणम्

## अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके २–३–४३

नित्यः स्वप्रकाशो व्यापकोऽकर्ता जीव इति शोधिततत्वं पदार्थस्य ब्रह्मैक्यसाधनेन भेदाभेदश्रुतीनां विरोधसमाधानात् पादसंगतिः।

पूर्वोक्तोपकार्योपकारकभावाक्षिप्तं जीवेश्वरयोः सम्बन्धं विषयीकृत्य द्विविधदृष्टान्तदर्शनाद्विरुध्यत इति संशयः। तत्रैकदेशी जीवईश्वर-दासः ईश्वरनियम्यत्वे सति ईश्वरोपकार्यत्वादिति विरोधं परिहरति, सिद्धान्तस्तु जीवः ईश्वरांशः (ईश्वरदासो न) ईश्वरोपकार्यत्वे सति ईश्वरप्रतियोगिकभेदाभेदवत्वात्। जीवः ईश्वरस्यांश इवांशो नतु स्वाभाविकोंऽशः निष्कलमिति श्रुतेः। नाना-व्यपदेशात् य आत्मनि तिष्ठन्नित्यादिषु भेदव्यपदेशात्। अन्यथा चाप्यभेदेनापि व्यपदेशात्। तथाहि - एके दाशकितवादित्वमप्यधीयत इति। (ब्रह्मदाशा इत्यादि) पूर्वपक्ष्यनुमानमागमबाधितमिति। युक्तिमप्याह चैतन्यश्चेति। जीवो ब्रह्मैव चेतनत्वात् ब्रह्मवदित्यर्थः। नानाव्यपदेशात् - लौकिकभेदव्यवहारमपेक्ष्य जीवो नियम्यत्वादि-भेदवान् श्रुतावुक्तः नतु तात्पर्यतः। चस्त्वर्थः। अपिरेवार्थकः। एके शाखिनः अन्यथैव - अभेदेनैवाधीयते। तथा च भेदश्रुतिरतात्विकभेदानुवादमात्रम्।अभेदश्रुतिस्तु तात्विकाभेदतात्पर्यवतीति न विरोधः।

## मन्त्रवर्णाच्च २–३–४४

जीव ईश्वरांशो ब्रह्मपादत्वेन (पदोऽस्य विश्वाभूतानीति) व्यपदिश्यमानत्वात्।

## अपि च स्मर्यते २–३–४५

जीव ईश्वरांशः तथा स्मर्यमाणत्वात्। ममैवांशो जीव-लोक इति। अत्राहेति। ईश्वरो यदि जीवांशकः स्यात्तदा सकलजीवगतदुःखादिमान् स्यात् हस्तावच्छिन्न-जीवगतदुःखेन शरीरावच्छिन्नजीवस्य दुःखोपलम्भवत्। ओमित्युक्ते मुक्तावीश्वरं प्राप्ता जीवा अपि दुःखवन्तः स्युः। तथा सति सम्यग्दर्शनानर्थक्यप्रसङ्गः। अस्यां शङ्कायां समाधानपरं सूत्रम्।

## प्रकाशादिवन्नैवं परः २–३–४६

ईशः स्वांश (जीव) धर्मेण धर्मवानंशित्वात् देवदत्तवदिति शङ्कितुरनुमानेऽविद्याकामकर्मवत्त्वमुपाधिः। एवमङ्गुल्याद्यवच्छिन्नप्रकाशरूपांशवति महाप्रकाशे महाकाशे, प्रतिबिम्बे च योंऽशी स वस्तुतः स्वांशधर्मवानिति व्याप्तेः व्यभिचार इति। दृष्टान्ते साध्यवैकल्यं प्रदर्शयति जीवस्यापीति।

## स्मरन्ति च २–३–४७

स्मृत्यानुमानं बाधितमित्यर्थः। आगमबाधमाह — चशब्दादिति।

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्। २–३–४८

यद्येक एवात्मा स्यात् संकीर्णविधिनिषेधकः स्यादितिशङ्कायां समाधानम्। एकत्वमेव नास्ति देहभेदेन भेदादित्यापादकाभावान्नापत्तिरिति। अनुज्ञापरिहारौ विधिनिषेधौ देहसम्बन्धात्। देहतादात्म्यात् (आध्यासिकात्) तथा च देहाद्युपाधिभेदेनांशजीवानामाब्रह्मबोधात् कल्पितभेदाद्भेद व्यवहारोपपत्तिः। ब्रह्मविन्नियोज्यो विवेकित्वात् कर्मिवदिति शङ्कते शरीरव्यतिरेकेति। परोक्षज्ञानवत्वेनापरोक्षभ्रमानिवृत्तेः देहतादात्म्य भ्रमवत्वमुपाधिः। ब्रह्मविन्न नियोज्योऽभ्रान्तत्वात् सुषुप्तवदिति समाधत्ते नहीति। ज्योतिरादिवदिति। अग्निः क्रव्यात्परिह्रियते नेतरः। एवं प्रकाशभौमावपि।

## असन्ततेश्चाव्यतिकरः २–३–४९

विधिनिषेधयोरुपपादनेऽपि कर्मफलसांकर्यं भवतीति शङ्का। बुद्ध्युपाधिकस्यैव भोक्तृत्वात् बुद्धेः यावदात्मज्ञानभावित्वाच्च बुद्धिभेदेन भोक्तृभेदान्न सांकर्यमिति। तत्तदन्तःकरणानामदृष्टाश्रयाणामसन्ततेः = असाधारणत्वात् अव्यतिकरः भोगासांकर्यमिति सूत्रार्थः।

[अभेदे भेदगीर्बाधाद्भेदेऽभेदश्रुतेर्हतेः। भेदाभेदविरोधाच्च नेश्वरोऽस्तीति मन्महे। इत्यंशाधिकरणपूर्वपक्षः। अप्राप्तेः प्रक्रमादेश्च वेदान्तैर्ब्रह्म मीयते। तस्यैव प्रतिबिम्बत्वाज्जीवानां स्याद्व्यवस्थितिसिद्धान्तः। (शा.द.)]

## आभास एव च २–३–५०

देवदत्तात्मा यज्ञदत्तकृतकर्मफलभागी स्यात्। यज्ञदत्ताभिन्नत्वात् यज्ञदत्तवदित्यत्र देवदत्तस्वरूपप्रतिबिम्बभिन्नप्रतिबिम्बत्वमुपाधिः। बिम्बप्रति बिम्बयोर्भेदमात्रं कल्पितम्। प्रतिबिम्बस्य स्वरूपतः सत्यत्वम्। नास्ति दर्पणे मुखमिति संसर्गस्यैव बाधात्। तथाच स्वमते स्वरूपैक्येऽप्युपहितभेदा भेदादसांकर्यमुपपाद्य सांख्यवैशेषिकमतयोरेवाव्यवस्थामाह येषामिति। काणादानामपीति। यज्ञदत्तो देवदत्तीयसुखदुःखभाक् देवदत्तीयमनस्संयोग वत्वात्। यज्ञदत्तो देवदत्तीयसुखाद्यभाववान् देवदत्तादृष्टाभावादिति व्यवस्थामुपपादयाम इति शङ्कायांसूत्रम्।

## अदृष्टानियमात् २–३–५१

देवदत्तादृष्टाभावरूपहेतुरसिद्धः। अदृष्टस्यापि सर्वात्मसाधारण्यात्। यज्ञदत्तो देवदत्तादृष्टाभाववान् अहमिदं फलं प्राप्तवानीत्यभिसन्धिरहित त्वादिति हेत्वसिद्धिपरिहारे खण्डनार्थं सूत्रम् —

## अभिसन्ध्यादिष्वपि चैवम् २–३–५२–

अयमपि हेतुः स्वरूपासिद्धः साधारणात्ममनस्संयोगसाध्येषु अभिसन्ध्यादिष्वपि नियमहेत्वभावादिति।

## प्रदेशादिति चेन्नान्तर्भावात् २–३–५३

आत्मनां विभुत्वेऽपि स्वस्वशरीरावच्छिन्न एवात्मप्रदेशे मनस्संयोग इत्यभिसन्ध्यादिषु नियमो भवतीति चेन्न। सर्वात्मनां सर्वशरीरेष्वन्तर्भावेना

स्यात्मन इदं शरीरमिति नियमाभावान्नियमो नोपपद्यते।

इति अंशाधिकरणम्

इति श्रीगोडासुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां द्वितीयाध्यायस्य तृतीयः पादः।



# अथ द्वितीयाध्याये चतुर्थः पादः

## १. अधिकरणम्

### तथा प्राणाः २–४–१

भूतभोक्तृविचारानन्तरं भौतिकप्राणविचार इति हेतुहेतुमद्भावः पादयोः सङ्गतिरिति वियदादिविषय इति भाष्येण प्रदर्श्यते। प्रलयेऽपि प्राणस्थितिप्रतिपादकानां, प्राणोत्पत्तिप्रतिपादकानाञ्च वचनानां विरोधादप्रामाण्यमिति पूर्वपक्षः। प्रलयेऽपि प्राणस्थितिप्रतिपादकानां वचनानामन्यथा नेतुमशक्यत्वात् प्राणानामुत्पत्तिप्रतिपादिका श्रुतिः जीवोत्पत्तिप्रतिपादक श्रुतिवत् गौणी व्याख्येयेत्येकदेशिमतमाह अथवेति। यद्यपि प्राणानामनुत्पत्तावेकविज्ञानप्रतिज्ञानुपपत्तौ वियदधिकरणन्यायादुत्पत्तिः सिद्ध्यति। तथापि प्रलये प्राणसद्भावश्रुतेः गतिप्रदर्शनार्थमेतदधिकरणमित्यपौनरुक्त्यम्। प्राणविषयः प्राणोत्पत्तिसंख्यादि विषयः। यथा वियदादय उत्पद्यन्ते तथा प्राणा इति सूत्रार्थः। पानव्यापच्च तद्वदिति सूत्रे यथाऽश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षार्थःतत्पदेन परामृश्यत इति व्यवहित परामर्शकता, यथा पूर्वपक्षे वारुणेष्टिः लौकिकेऽश्वदाने भवतीत्युक्तं तद्वदियमपीष्टिः लौकिकसोमवमन एवेति एवमस्मिन्नपि तथेति पदमपि व्यवहितं तृतीयपादादौ वियदादय उत्पद्यन्त इति यथा तथेति परामृशति।

पूर्वाधिकरणेन कर्तृत्वरूपं विचार्य तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयति। भूतभोक्तृविचारानन्तरं भौतिकप्राण विचार इति हेतुहेतुमद्भावः पादसङ्गतिः। वियदधिकरणेन गतार्थत्वेऽपि प्रलये प्राणसत्त्वश्रुतेः गतिप्रदर्शनार्थमधिकरणम्। अत्र तथा शब्दाद्वियदादिवदुत्पत्तिमात्रमतिदिश्यते। न तन्न्यायः। भेदात्। तत्र हि द्वयोः प्रथमजत्वेन पूर्वपक्षः। अत्र तु प्राणानामुत्पत्तेः पूर्वं जगदुत्पत्तेः सद्भावप्रयुक्तानुत्पत्तितः पूर्वपक्षः। तदाहुः किं तदासीदिति। एतस्माज्जायते प्राणो मन इति च श्रुतिविप्रतिषेधेनाप्रामाण्यमिति महापूर्वपक्षः। उत्पत्तिश्रुतिर्गौणीत्येकदेशि

परिहारः। प्राणा उत्पद्यन्ते उत्पत्तिमत्त्वेन श्रुतत्वादिति सिद्धान्तः। "पानव्यापच्च तद्वत्" इति लौकिकसोमपाने वमने सौमेन्द्रचरुः तद्वत्। लोकिकाश्वदाने वारुणेष्टिरिति पूर्वपक्षे इवेत्यर्थः। अश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षार्थः तत्पदेन परामृश्यत इति व्यवहितपरामर्शकता। एवं तथेत्यनेन व्यवहितवियदधिकरण सिद्धान्त परामर्शकता। तथा च यथा वियदादय उत्पद्यन्ते तथा प्राणा इति सूत्रार्थः।

## गौण्यसम्भवात् २–४–२

तृतीयपादादौ वियदादय उत्पद्यन्त इति यथा तथेति परामृशति। अवान्तर इति। अवान्तरप्रकृतिः हिरण्यगर्भः। तत्प्राणास्तित्वविषयं एतद्वाक्यमित्यर्थः । हिरण्यगर्भः समवर्तताग्रे, आदिकर्ता स भूतानामित्यादिश्रुतिस्मृत्योः मूलकारणावस्थाविशोषाणां हिरण्यगर्भादीनां प्रकृतिविकारभावेन प्रसिद्धेरवान्तरप्रकृतिरस्तीत्याह व्याकृत विषयाणामपीति

उत्पत्तिश्रुतिर्गौणीति वक्तुं न शक्यते। तस्या असम्भवात्। प्रतिज्ञाहानिप्रसङ्गात्। प्राणा उत्पद्यन्ते जीवभिन्नत्वे सति ब्रह्मज्ञानाभिन्नज्ञान विषयत्वात्। अवान्तरप्रकृतिरवान्तरप्रलयः।

हिरण्यगर्भः समवर्तताग्रे, आदिकर्ता स भूतनामित्यादिश्रुतिस्मृत्योः कार्यावच्छिन्नानां मूलकारणावस्थाविशेषाणां प्रकृतिविकारभावेन प्रसिद्धेरवान्तरप्रकृतिरस्तीत्याह व्याकृतविषयाणामिति।

## तत्प्राक्श्रुतेश्च २–४–३

तस्य जायत इति जन्मवाचिपदस्याकाशादिषु मुख्यस्य पाठापेक्षया प्राचीनेषु प्राणेषु श्रुतत्वाच्च प्राणानां मुख्यं जन्मेति सूत्रार्थः। प्राणा उत्पद्यन्ते मुख्योत्पत्तिबोधक 'जायते' इति पदबोध्यार्थवत्त्वात्। तस्य = आकाशादिषु मुख्योत्पत्तिबोधक जायत इति पदस्य प्राक् = आकाशादिपदेभ्यः प्राक् श्रुतेः प्राणादिसमभिव्याहृतत्त्वेन श्रुतत्वादिति सूत्रार्थः।

## तत्पूर्वकत्वाद्वाचः २–४–४

तच्छब्देन तेजोऽबन्नान्युच्यन्ते। वाच इति वाक् प्राणमनसामुपलक्षणम्। प्राणेन मनसा च सहिताया वाचः तेजोऽबन्नकार्यत्वादस्ति तदुत्पत्तिश्रुतिरित्यर्थः। छान्दोग्ये प्राणानामुत्पत्तिर्न श्रुतेति पूर्वपक्षे समाधानम्। वाक्प्राणमनसां तेजोऽबन्नपूर्वकत्वोक्तेरश्रवणमसिद्धमिति। तच्छब्देन तेजोऽबन्नान्युच्यन्ते। वाच इति वाक्प्राणमनसामुपलक्षणम्। प्राणेन मनसा च सहिताया वाचः तेजोऽबन्नकार्यत्वोक्तेः तदुत्पत्तिश्रुतिरस्तीति सूत्रार्थः। लिङ्गशरीरविचारात्मकाधिकरणानां लिङ्गशरीरात् त्वंपदार्थविवेकः फलम्।

इति प्राणोत्पत्यधिकरणम्

## २. अधिकरणम्

### सप्तगतेर्विशेषितत्वाच्च २–४–५

उत्पत्तिविषयश्रुतिविरोधं परिहृत्य जन्मलब्धसत्ताकानां संख्याविषयश्रुतिविप्रतिषेधपरिहारादुपजीव्योपजीवकभावसङ्गतिः। क्वचित् सप्त प्राणाः चक्षुर्घ्राणरसनवाक्त्वक्श्रोत्रमनांसीति, क्वचिदष्टौ (ग्रहाइति) घ्राणरसनवाक्चक्षुःश्रोत्रमनोहस्तत्वच इति। क्वचिन्नव। द्वे श्रोत्रे, द्वे चक्षुषी, द्वे घ्राणे, एका वाक्, पायूपस्थौ बुद्धिमनसीवा, क्वचिद्दश पूर्वोक्ता एव नाभ्या सह। क्वचिदेकादश बुद्धीन्द्रियाणि कर्मेन्द्रियाणि मन इति। क्वचिद्द्वादश बुद्धिकर्मेन्द्रियाणि, मनः बुद्धिरिति। क्वचिदेत एवाऽहङ्काराधिकाः त्रयोदशेति श्रुतिविप्रतिषेधात् संशयः। एकदेशिमतमाह सप्तगतेरिति। प्राणाः सप्त सप्तत्वेन श्रुतिबोध्यत्वात्, सप्त वै शीर्षण्या इति शीर्षण्यत्वेन विशेषितत्वाच्च। अन्येषां सप्तस्वेवान्तर्भाव इत्याशयः। सिद्धान्तसूत्रम् —

## हस्तादयस्तु स्थितेऽतो नैवम् २–४–६

प्राणाः सप्ताधिकसंख्यावन्तः सप्तत्वाधिकसंख्यवद्धस्तादिप्राणकत्वात्। प्राणा एकादशत्वरूपसंख्यावन्तः एकादशत्वेन श्रूयमाणत्वात्। प्राणगतसप्तत्वाधिकसंख्या एकादशत्वरूपा अष्टत्वाद्यविरुद्धत्वे सति प्राणगतैकादशकार्यानुरोधित्वात्। हस्तादयः सप्तभ्योऽतिरिक्ताः श्रूयन्ते प्राणानां सप्तत्वातिरेके स्थिते अतोऽस्मिन् सति नैवम् लाघवात् प्रथम्याच्च सप्तत्वमिति नेत्यर्थः। अत इति ल्यब्लोपे पञ्चमी। इदं सप्तत्वमादायैकादशत्वस्य स्थिते = रक्षणे सम्भवति नैवम् = एकादशत्वस्य बाधो युक्तः। तुर्हेतौ। ततो हेतोः हस्तादय एकादशैवेन्द्रियप्राणा इति सूत्रर्थः।

अस्मिन् पादे सप्तदशकरूपाल्लिङ्गशरीराज्जीवं विवेचयितुं तदवयवभूताः प्राणा निरूप्यन्ते। तत्र प्रथमाधिकरणे पूर्वपक्षे प्राणानामनुत्पत्तौ जीववन्नित्यत्वेन जीवात्तेषां विवेको न सम्यक् सिद्ध्यति। सिद्धान्ते तु नित्यत्वनियत्वाविरुद्ध धर्माक्रान्ततया जीवप्राणयोर्विवेकः सिद्ध्यति।

एतदधिकरणपूर्वपक्षे प्राणानां सप्तत्वे तेभ्य एव जीवभेदोऽनुसन्धेयः। सिद्धान्ते त्वेकादशभ्य इति फलभेदः।

अस्यां योजनायां गतेरित्यस्यावगतेरित्यर्थकल्पना क्लिष्टा। श्रुत्यन्तर गताधिकप्राणसंख्यायाः वृत्तिभेदविषय - कल्पनाक्लेशः। ये सप्त त एव प्राणा इति योजनायां परिसंख्यापत्तिः। अतो व्याख्यान्तरमाह — इयमपरा योजनेति। इन्द्रियाणामेकादशत्वसंख्यामङ्गीकृत्यैवोत्क्रामदि न्द्रियसंख्याविषय विरोधपरिहारार्थं वर्णकान्तरम्। तत्र सप्तैवोत्क्रामन्ति। अन्यानि तु प्रतिजन्मशरीरवज्जायन्त इति पूर्वपक्षः। एकादशाप्युत्क्राम न्तीति सिद्धान्तः।

इति सप्तगत्यधिकरणम्

## ३. अधिकरणम्

### अणवश्च २–४–७

एकादशप्राणानामुत्क्रान्तिरुक्ता, सा न सम्भवति। तेषां व्यापित्वादित्याक्षेपसङ्गतिः। प्राणा विभव इति पूर्वपक्षः। प्राणा अणवः परिच्छिन्नाः सूक्ष्मा इत्यर्थः। उत्क्रान्तिगत्यागतिमत्त्वात्। अनुद्भूतरूपस्पर्शवत्त्वं सौक्ष्म्यम्। परिच्छेदोऽल्पत्वम्। पादसङ्गतिः प्रासङ्गिकी। वादविप्रतिपत्तिनिरासः प्रसङ्गः। रत्नप्रभारीत्या तु — प्राणाः सर्वेऽनन्ता इति श्रुतेरुत्क्रान्तिगत्यागतिश्रुतिभिर्विरोध इति पादसङ्गतिः।

इति अण्वधिकरणम्

## ४. अधिकरणम्

### श्रेष्ठश्च २–४–८

अतिदेशत्वान्न पृथक् सङ्गत्यपेक्षा। एतस्माज्जायते प्राण इति प्राणोत्पत्तिश्रुतिः, आनीदवातमिति प्रलये प्राणव्यापारश्रवणात् प्राणसत्त्व ज्ञापकश्रुत्या विरुध्यते नवेति सन्देहः। उत्पत्तिश्रुतिर्गौणीति एकदेशिपूर्वपक्षः। आनीदवातमिति श्रुतौ आनीच्छब्दः कारणसद्भावं दर्शयति। अवातं = प्राणरहितमिति श्रवणात् प्राणव्यापारो नात्राभिधीयते। आनीदित्यस्यासीदित्यर्थः। अतोऽनया श्रुत्या प्राणोत्पत्तिश्रुतेर्न विरोध इति सिद्धान्तः।

इति प्राणश्रैष्ठ्याधिकरणम्

## ५. अधिकरणम्

### न वायुक्रिये पृथगुपदेशात् २–४–९

उत्पत्तिचिन्तानन्तरमुत्पत्तिमतः स्वरूपचिन्तेति प्रसङ्गसङ्गतिः। प्रणवायुभेदाभेदश्रुत्योर्विरोध इति महापूर्वपक्षः। श्रुत्योः विरोधे स्मृत्या तत्तात्पर्यं निर्णेतव्यमतः सांख्यस्मृत्या करणानां साधारणवृत्तिः प्राणो

वायुभिन्न इति सिद्धान्त्येकदेशिमतम्। प्राणा न वायुर्नापि क्रिया = करणव्यापारः, पृथगुपदेशादिति सिद्धान्तः। इन्द्रियादिव्यापाराः सम्भूयैकव्यापारहेतुभूताः इन्द्रियव्यापारसहकृतव्यापारत्वादिति शङ्कते ननु पञ्जरचालनेति। एकव्यापारानुकूलसमानजातीयव्यापारत्वमुपाधिरिति दूषयति अत्यन्तेनेति। रूपाद्यालोचनरूपाः प्रत्येकं चक्षुरादिव्यापारा न प्राणव्यापारानुकूलाः प्राणव्यापारविजातीयाश्च। सुषुप्तौ चक्षुरादीनामभावे ऽपि प्राणनदर्शनात्। स्यादेतदिति। प्राणस्य करणवृत्तित्वाभावे प्राधान्यात् श्रेष्ठत्वाच्च जीववद्भोक्तृत्वं स्यादितिशङ्का। सूत्रेण परिहारः—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः २–४–१०

प्रणो न भोक्ता भोगोपकरणत्वात् चक्षुरादिवत्। चक्षुरादिकरणैः सहशिष्टत्वात् प्राणस्य करणत्वमिति न हेत्वसिद्धिः। आदिपदेन संहतत्वाचेतनत्वभौतिकत्वानि पुरुष शेषत्वसाधकानि ग्राह्याणि। संहतत्वं शरीरादिवत् पञ्चीकृतभूतकार्यत्वम्। स्यादेतदिति। प्राणो यदि जीवोपकरणभूतस्तदा जीवोपकरणचक्षुरादिकार्यभिन्नकार्यकः स्यात्। चक्षुरादिविषयभिन्नविषयकश्च स्यात् यद्भोगोपकरणं तत्सविषयमिति व्याप्तेरिति शङ्काभावः।

सूत्रेण परिहारः—

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति २–४–११

उक्तव्याप्तेः शरीरे व्यभिचारः। उत्क्रान्त्याद्यसाधारणकार्यसत्त्वात् प्रथमे इष्टापत्तिः। चक्षुरादिवदकरणत्वात् ज्ञान करणत्वाभावन्न दोषः। तथाहि श्रुतिः — प्राणस्य विशेषव्यापारं देहधारणरूपं दर्शयति। तान् वरिष्ठः प्राण उवाचेत्यादिना। पापिष्ठं निर्जीवम्।

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते २–४–१२

प्राणस्य विशेषकार्यवत्त्वे हेत्वन्तरमुच्यते। इन्द्रियाणां सुषुप्तौ मूर्च्छायां लये विषयान्तरसम्बन्धे वा प्राणनादिपञ्चवृत्तीनामन्येनानिर्वाहात् प्राण

आवश्यकः। प्रागवृत्तिः बहिर्नासिकातो निस्सरणवृत्तिः। अवाग् वृतिः - अन्तराकर्षणवृत्तिः। अर्थान्तरमाह —जीवोपकरणेति। प्राणो जीवोकरणभूतः पञ्चवृत्तित्वान्मनोवदिति।

इति वायुक्रियाधिकरणम्

## ६. अधिकरणम्

## अणुश्च — २-४-१३

उत्क्रान्त्यादिश्रुतेः सम एभिस्त्रिभिर्लोकैरिति प्राणविभुत्वश्रुतेश्च मिथो विरोधोऽस्ति नवेति सन्देहः। अन्तरङ्गबहिरङ्गलक्षणसङ्गतिः। चक्षुरादिवत् प्राणोऽप्यणुः परिच्छिन्नः सूक्ष्मश्च। सम एभिरिति श्रुतिः आधिदैविकेन हैरण्यगर्भेण रूपेण विभुत्वं प्रतिपादयतीत्याह तदुच्यत इति। अणवश्चेत्यत्र साङ्ख्योक्ताहंकारिकत्वकृतं व्यापित्वमिन्द्रियाणां निरस्तम्। अत्र तु श्रुत्यवगतं मुख्यप्राणस्य व्यापित्वमविरोधेन व्यवस्थाप्यत इति न तुल्यन्यायता। इन्द्रियाणामपि श्रुत्यवगतं व्यापित्वमनेनैव व्यवस्थापितं भवति।

इति श्रेष्ठाणुत्वाधिकरणम्

## ७. अधिकरणम्

## ज्योतिराद्यधिष्ठानन्तु तदामननात् २-४-१४

अग्निर्वाग्भूत्वा आदित्यश्चक्षुर्भूत्वा इत्याद्यायाः इन्द्रियाणां देवताधीनचेष्टावत्त्वश्रुतेः चक्षुषा हि रूपाणि पश्यतीत्यादिश्रुत्या विरोधोऽस्ति नवेति सन्देहः प्रसङ्गसङ्गतिः। चक्षुरादयो देवतापेक्षां विनैव कार्यं कुर्वन्ति निरपेक्षकारणत्वेन श्रूयमाणत्वात्। यद्यादित्यादिदेवताश्चक्षुराद्याधिष्ठानभूताः स्युस्तर्हि चक्षुरादिजन्य—भोगवन्तः स्युः। ओमित्युक्ते एकस्मिन् देहेऽनेकभोक्तॄणां विरोधात् दुर्बलस्य जीवस्य भोक्तृत्वं न स्यादिति पूर्वपक्षः। चक्षुरादयो देवतापेक्षयैव प्रवर्तन्ते।

देवताद्यधिष्ठितत्वेनाम्नायमानत्वात्। यदुक्तं स्वकार्यशक्तियोगादिति तद्युक्तमिति। यत्र निरपेक्षकारणत्वं तत्र चेतनापेक्षां विनैव कार्यकारित्वमिति व्याप्तेः शकटादिषु व्यभिचारः। कारणानि चेतनाद्यधिष्ठितान्यचेतनत्वे सति प्रवर्तमानत्वात् वास्यदिवदित्यनुमाने जीवाद्यधिष्ठितत्वेन सिद्धम्।

## प्राणावता शब्दात् २–४–१५

यत्रेन्द्रियाद्यधिष्ठातृत्वं तत्र भोक्तृत्वमिति पूर्वोक्तप्रतिकूलतर्कमूलभूत व्याप्तौ सारथौ व्यभिचारः। उपकरणोपकरणिभावसम्बन्धवत्त्वमुपाधिः। प्राणवता जीवेनैवेन्द्रियाणां सम्बन्धो भोक्तृपकरणभावरूपः शब्दात् स चाक्षुषः पुरुषो दर्शनाय चक्षुरिति। स चक्षुरुपाधिः सन् चाक्षुष इत्युच्यते। तस्य भोक्तुः दर्शनाय चक्षुः इत्यर्थः। अपि चानेकत्वादिति। आदित्यादिदेवता एतस्मिन् देवदत्तशरीरे भोक्तारो न भवन्ति तदवच्छिन्नसकलभोगानुसन्धानृतृत्वाभावात्।

## तस्य च नित्यत्वात् २–४–१६

देवताः देवदत्तशरीरावच्छिन्नभोगरहिताः। तच्छरीरनित्यसम्बन्धरहित त्वात्। तदनुकूलकर्माभावात्। पूर्वपक्षे केवलेभ्य इन्द्रियेभ्यो विवेकोऽनु-सन्धेयः। सिद्धान्ते देवतासहितेभ्य इति फलभेदः। तस्य जीवस्य स्वकर्मार्जिते देहे भोक्तृत्वेन नित्यत्वात् भोक्तृत्वनियमादिति सूत्रार्थः।

इति ज्योतिराद्यधिकरणम्

# ८. अधिकरणम्

## तइन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् २–४–१७

सत्सु इन्द्रियेषु तेषामधिष्ठातृचिन्ता, तान्येव प्राणवृत्तिरेकेन न सन्तीत्याक्षेपात् सङ्गतिः। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि

चेति मुख्यप्राणादिन्द्रियाणां तत्त्वान्तरत्वश्रुतेः त एतस्यैव सर्वे रूपमभवन्निति प्राणात्मकत्वमिति श्रुत्या विरोधात् संशयः। चक्षुरादयः प्राणादभिन्नाः प्राणपदवाच्यत्वात् प्राणवदिति पूर्वपक्षः। सिद्धान्तस्तु ते प्राणाः श्रेष्ठादन्यत्र अन्ये प्राणाः इन्द्रियाणीति अपर्यायशब्दाभ्यां तद्व्यपदेशात् प्राणान्यत्वव्यपदेशात्। मुख्यप्राणं वर्जयित्वा इन्द्रियाणीति तद्व्यपदेशाच्चक्षुरादीनां व्यपदेशात्। चक्षुरादयः प्राणादन्ये इन्द्रियत्वेनोपदिश्यमानत्वे सति प्राणशब्दविशिष्टशब्दप्रतिपाद्यत्वात्। वैशिष्ट्यञ्च स्वभिन्नत्व स्वघटितवाक्यघटकत्वोभयसम्बन्धेन। इन्द्रियत्वेनोपदिश्यमानत्वे सति तच्छब्दविशिष्ट—शब्दप्रतिपाद्यत्वं यत्र तत्र तद्भिन्नत्वमिति व्याप्तिः। मनसि व्यभिचारवारणाय व्याप्यकोटौ सत्यन्तम्।

त इन्द्रियाणीति सूत्रस्य ते चक्षुरादयः श्रेष्ठात् प्राणादन्यत्र प्राणात् तत्त्वान्तराणीति प्रतिज्ञा। पुनः श्रेष्ठादन्यत्रेति पदावृत्या श्रेष्ठव्यतिरेकेणार्थात् श्रेष्ठोत्पत्तिव्यतिरेकेण तद्व्यपदेशादिन्द्रियोत्पत्तिव्यपदेशादित्यर्थः भाष्यकाराभिप्रेतः। अत एव कोऽयं व्यपदेशभेद इति हेत्वर्थविवरणं कृतम् पूर्वोक्तरीत्या सूत्रार्थवर्णने तु भेदश्रुतेश्चेत्यस्य पौनरुक्त्यं स्यात्।

## भेदश्रुतेश्च २–४–१८

भेदकश्रुतेरित्यर्थः। भिन्नप्रकरणकत्वादित्यर्थः। चक्षुरादयः प्राणाद्भिन्नाः प्राणगत असुर (पाप्म) विध्वंसकत्वाभावात्। पूर्वमपर्यायशब्दवत्त्वं भेदकमिदानीमसुरविध्वंसकत्वम्।

## वैलक्षण्याच्च २–४–१९

प्राणाः मुख्यप्राणादन्ये तज्जागरणकालीनसुप्तिमत्त्वात्। इन्द्रियाणां श्रमरूपमृद्ध्याप्तत्वं मुख्यप्राणस्य तदनाप्तत्वमित्यादिकं वैलक्षण्यम्।

इति इन्द्रियाधिकरणम्

## ९. आधिकरणम्

### संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् २–४–२०

एतावत्पर्यन्तमुत्पत्तिश्रुतिविरोधं परिहृत्यानेनाधिकरणेनोत्पादनश्रुतिविरोधः परिह्रियते। नामरूपभेदात् करणानां प्राणाद्भेद इत्युक्तम्। तत्प्रसङ्गेन स्थूलनामरूपक्लृप्तिः जीवकर्तृका उत ईश्वरकर्तृकेति विचार्यते। नामरूपव्याकरणं जीवकर्तृकं नामरूपव्याकरणत्वात् डित्थादिनाम घटादिरूपव्याकरणवत्, नच गिरिनदीतिभाष्येण पूर्वपक्षहेतौ जीवकर्तृकत्व योग्यत्वमुपाधिरुच्यते। नामरूपव्याकरणं जीवकर्तृकं न तदयोग्यत्वात्। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतौ जीवेनात्मनेति व्याकरणं जीवोपभोगार्थमिति ज्ञापनार्थमिति न वैयर्थ्यम्।

### मांसादिभौमं यथा शब्दमितरयोश्च २–४–२१

अन्नात्मिकायाः त्रिवृत्कृतायाः कार्यं भौमं मांसादि। आदिशब्देन पुरीषमनसी गृह्येते। एवमितरयोरप्तेजसोः यथा शब्दं कार्यमवगन्तव्यम्। मूत्रं लोहितं प्राणश्चापां कार्यम्। अस्थिमज्जावाक् च तेजसः कार्यमिति।

ननु सर्वेषां त्रिवृत्करणाविशेषात् पृथिवीत्याद्यसाधारणव्यवहारः कथं सङ्गच्छत इत्याशङ्कायां सूत्रम् —

### वैशेष्यात्तु तद्वादस्तद्वादः २–४–२२

स्वभागाधिक्यात् पृथिव्यादिवादः। तदेवं सर्वासां श्रुतीनामविरोधे सति प्रामाण्यान्निरवद्याद्वितीये ब्रह्मणि समन्वयःसिद्ध इति।

इति संज्ञामूर्तिक्लृप्त्यधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
द्वितीयाध्यायस्य चतुर्थः पादः

द्वितीयाध्यायश्च समाप्तः।

# अथ तृतीयाध्यायस्य प्रथमः पादः

## अधिकरणम् – १

### तदन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ३–१–१

अविरुद्धे वेदान्तार्थे तज्ज्ञानसाधनविचार इति हेतुहेतुमद्भावोऽध्याय संगतिः। लिङ्गोपाधिसिद्धौ तदुपहितजीवसंसारचिन्तेति हेतुहेतुमद्भावसंगतिः पादस्य। सोपायसाधननिरूपणमध्यायार्थः। तत्र वेदान्तमूलकं ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनमिति पुरुषार्थोऽतः शब्दादित्यधिकरणे निरूपितम्। तच्च जीवाभिन्नब्रह्मविषयमिति "आत्मेति 'तूपगच्छन्ति'' इत्यधिकरणे निरूपितम्। तत्त्वमसीति वाक्यार्थविषयकस्यास्य ज्ञानस्य तत्त्वंपदार्थज्ञान पूर्वकत्वात् द्वितीयपादे न स्थानतोपीत्यतः प्राक् त्वंपदार्थशोधनम्। ततः प्रभृति तत्पदार्थशोधनम्। प्रथमपादेवैराग्यं, द्वितीयपादान्त्याधिकरणे परमेश्वरप्रसादः, तृतीयपादे सगुणविद्यापरिशीलनं, चतुर्थपादे कर्म तत्सन्यासशमदमादिकं निरूपितम्।

पञ्चसु द्युपर्जन्य पृथिवीपुरुषयोषित्सु अग्नित्वध्यानं पञ्चाग्निविद्या। शास्त्रादिसूत्रे नित्यानित्यविवेककृतं वैराग्यमुक्तम्। इह तद्दार्ढ्याय गत्यागतिक्लेशभावनाकृतं तदुच्यते इत्यपौनरुक्त्यम्।

परलोकं गच्छन् जीवः किं भूतसूक्ष्मपरिष्वक्तः नवेति सन्देहः।असंपरिष्वक्त इति पूर्वपक्षः। परलोकं गच्छन् जीवः भूतसूक्ष्मसंपरिष्वक्तः। प्रश्नप्रतिवचनप्रतिपाद्यार्थवत्त्वात्। लोकान्तरे पुरुषाकारेण परिणममानात्मशब्दप्रतिपाद्ययुक्तत्वात्।

अस्य हेतोर्वैय्यधिकरण्यशङ्कायां सूत्रम् ———

### त्र्यात्मकत्वात्तु भूयस्त्वात् ३–१–२

त्रिवृत्करणश्रुत्या अपामितरभूतद्वयमेलनेन त्र्यात्मकत्वात्। तेज आद्यपेक्षया अपां भूयस्त्वादप्शब्दप्रयोगः।

"तंविद्याकर्मणी समन्वारभेते" इति कर्मणामनुगमनमुक्तम्। कर्मणि चाग्निहोत्रादीनि दध्यादिद्रवद्रव्यसमवायीनि। अतः आहुत्यपूर्वरूपाआपः सन्ति। अतः भूतोपादानाश्रवणं निरस्तम्। आपश्च पञ्चीकृततत्वादितरभूत सहिताः। कर्मारब्धे देहे पञ्चभूतकार्यस्य स्वेदादेर्दर्शनात् कर्मसु पञ्चभूतान्वयसिद्धिः। देहपाञ्चभौतिकत्वे अनुमानम्, देवदत्तशरीरं पृथिवी समवेतत्वविशिष्टउदकतेजोवाय्वाकाशासमवेतत्वरहितं कार्यत्वात् हिमकरकवत्। यद्यपि हिमकरकः परेषां पृथिवीतरभूतचतुष्टयासमवेतः तथापि न पृथिवीसमवेतः। ततश्च पृथिवी समवेतत्वविशिष्ट तदितरभूतचतुष्टयासम वेतत्वं तत्र नास्त्येव। विशेषणाभावे विशिष्टस्याप्यभावात्। ततः दृष्टान्तसिद्धिः'। देवदत्तशरीरस्य पृथिवीसमवेतत्वे सति तदितरभूतचतुष्टयास मवेतत्वरहितत्वं पृथिवीसमवेतत्वाभावाद्वा तदितरभूतचतुष्टयासमवेतत्वाभा वाद्वा। आद्यो व्याहत इति द्वितीयःस्यात्। तथा च जलादिसमवेतत्वसिद्धिः। ततश्च आप इत्यस्योपलक्षणत्वात् शरीरारम्भकप ञ्चभूतानि अनुगच्छन्ति। पाञ्चभौतिकत्वे संकररूपजातिबाधकपरिहारः ब्रह्मविद्याभरणे वर्तते। पूर्वप्रज्ञा अतीतमनुष्यमर्कटादि जात्युचितव्यवहारवासना।

## प्राणगतेश्च ३–१–३

गच्छन्तः प्राणाः साश्रयाः प्राणत्वात्। यद्वा उत्क्रान्तौ प्राणाः देहबीजपञ्चभूताश्रयाः प्राणत्वात् जीवदेहस्थप्राणवत्।

## अग्न्यादिगतिश्रुतेरिति चेन्नभाक्तत्वात् ३–१–४

नैव प्राणा इति। प्राणा गच्छन्त्येवेति यत् तन्नेत्यर्थः। गच्छन्तः प्राणा इत्यनुमाने आश्रयासिद्धिः। प्राणानामग्न्यादिषु लयश्रवणात्। (यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति) इति शंका। वागादयोऽग्न्यादिषु न लीयन्ते तत्प्रकृतिकत्वाभावात्। अग्न्यादि प्रेरणाभावे न तत्र लीनत्वव्यव हारः।

## प्रथमेऽश्रवणादिति चेन्नता एव ह्युपपत्तेः ३–१–५

लोकान्तरे परिणममानाप्पशब्दप्रतिपाद्ययुक्तत्वादितिहेतौ स्वरूपा सिद्धिः। प्रथमेऽग्नावभावादिति शङ्का। प्रथमवाक्यघटकश्रद्धाशब्दः अप्प्रतिपादकः, द्वितीयाहुतिप्रतिपादकवाक्यैकवाक्यत्वात्। श्रद्धासरूपत्वात् श्रद्धापूर्वककर्मसमवायित्वात्, श्रद्धाहेतुत्वाच्च आपः श्रद्धाशब्देनोच्यन्ते।

## अश्रुतत्वादिति चेन्नेष्टादिकरिणां प्रतीतेः ३–१–६

अपामेव श्रुतेः प्रश्नप्रत्युक्त्योश्चेतनाश्रुतेः। पृथगापः प्रयान्तीतः परलोके च वेष्टनम् इति पूर्वपक्षः। सोमराजश्रुतेः साम्यात् पञ्चाग्निपितृयाणयोः। अप्सु भोक्त्रन्वयः सिद्धयेदपां भोक्तरिचान्वयः इति सिद्धान्तःशास्त्रदर्पणे।

जीवस्य गमनमसिद्धमश्रुतत्वादिति शङ्का। अथ य इमे ग्रामइष्टापूर्तेदत्तमित्युपासते ते धूममभिसम्भवन्ति इत्यादि आकाशाच्चन्द्रमसमिति इष्टादिकारिणां गतिप्रतीतेरित्यर्थः।

पितृयाणेमार्गे "आकाशाच्चन्द्रमसमेषसोमो राजा" इत्यत्र इष्टादिकारी चन्द्रलोकंगतः सोमराजशब्देन श्रुतः। पञ्चाग्निविद्यायामपि श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा भवतीति अन्यत्र निर्ज्ञातः सोमराजशब्दः आम्नातः। ततश्च यत्र पञ्चाग्निविद्यायामापः श्रुताः तत्र कर्ता प्रतीयते। यत्र पितृयाणे कर्ता श्रुतः तत्रापि पञ्चाग्निविद्यायां श्रुता आपः प्रतीयेरन्। न च केवलमापो गत्वा शरीरमारभन्ताम्, तेन चावच्छिन्ने जीवे सोमराजप्रत्यभिज्ञा भवत्विति वाच्यम्। यतः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति इति श्रद्धाशब्दवाच्याहुतेरमृतमयशरीरावच्छिन्नस्य कर्तुः सम्भवो विधीयमानः अप्स्वपि कर्त्रन्वयं गमयति। अन्यथा अमृतमयशरीरमात्रमुत्पद्येत। तेन चावच्छेदोत्तरकालं सोमराजसम्भवः प्रसज्येत।

द्युलोकं गतानामिष्टादिकारिणां एष सोमो राजेति सोमभावस्य आरोहवाक्ये प्रतिपादनात् पञ्चाग्निविद्यावाक्ये च द्युलोकं गतानामपां सोमराजभावेन परिणामप्रतिपादनात् उभयत्र ऐकार्थ्यपर्यवसानात् अबुपलक्षितैः भूतसूक्ष्मैः परिवेष्टितः जीवो गच्छतीति निष्कर्षः।

अपि च पर्जन्याग्निं प्रस्तुत्य "तस्मिन्नेतस्मिन्नग्नौ देवाः सोमराजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति इत्युच्यते। चन्द्रलोकादवरोहवाक्येऽपि मेघोभूत्वा प्रवर्षति इति वर्षभावः प्रतिपाद्यते। तथा चावरोहवाक्य प्रत्यभिज्ञयापि भूतपरिष्वक्तस्य रंहणं सिद्ध्यति। धूमादिवाक्ये पञ्चाग्निवाक्ये च सोमराजत्वप्राप्तिश्रवणात्। श्रद्धाशद्धिताद्भिः वेष्टिता द्युलोकं गच्छन्तीति ज्ञायते।

ननु इष्टादिकारिणां धूमादिमार्गेण चन्द्रलोकं गतानां "तद्देवानामन्नं तं देवा भक्षयन्ति" इति देवैर्भक्ष्यत्वं श्रूयते। अतः कथं तेषां स्वकर्मफलभोगसिद्धिरित्यत आह———

## भाक्तं वा नात्मवित्त्वात्तथाहि दर्शयति ३–१–७

इष्टादिकारिणामन्नत्वं भाक्त्वम्, न मुख्यम्। अतस्तेषामनात्मवित्त्वात् देवोपभोग्यत्वमेवान्नत्वम्। तथा हि दर्शयति –अथयोन्यां देवतामुपास्ते इति श्रुतिः। तस्मात्परलोकभोगार्थं भूतसंपरिष्वक्तस्य गमनमिति सिद्धम्। एवं गतिपर्यालोचनया वैराग्यम्।

इति तदनन्तरप्रतिपत्त्यधिकरणम्

## अधिकरणम् – २

## कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ३–१–८

कर्मसमवायिनीनामपां पञ्चम्यामाहुतौ पुंपरिणामहेतुमाश्रित्य अद्भिः परिवेष्टितजीवगमनमुक्तम्। तत्र स्वर्गादवरोहतः कर्मैव नास्ति,

कुतस्तत्समवायिन्य आपः, कुतस्तरां पुंपरिणाम इत्याक्षेपसङ्गतिः। निरतिशया अवरोहन्ति आहोस्वित् सानुशया इति संशयः। ''यावत्संपातमुषित्वा'' इति श्रवणात् निरनुशयानामवरोह इति पूर्वपक्षः। अपि चेति। विमतं प्रायणं स्वसन्निहितस्य अविशेषेणानारब्धफलस्य कर्मणः अभिव्यञ्जकं अभिव्यञ्जकत्वात् प्रदीपवत्। अनुशयः अनुशेते भोक्तारमनुगच्छतीति कर्मसमूहः।

कृतस्य कर्मणोत्यये नाशे सति अनुशयवानवरोहति दृष्टस्मृतिभ्याम्। दृष्टं श्रुतिः तद्य इह रमणीय चरणा इत्यादि। अथवा इष्टेन भोगेन अनुशयसिद्धिः जन्मारभ्यदृष्टोभोगः कर्महेतुकः भोगत्वात् स्वर्गभोगवदिति दृष्टभोगपक्षकानुमानेन अनुशयसिद्धिरित्याह – दृष्टश्चायमिति। स्मृतिः – वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्यकर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुत वृत्तवित्तसुखमेधसोजन्म प्रतिपद्यन्ते इति॥ केचिदित्यादिनान्येषामदिकरणरचनां वर्णयति॥ तत्र सन्देहः – अनुशयो नाम दत्तफलस्य कर्मणः शेषः। किं तादृशानुशयेनावरोहति उत अनुपभुक्त फलकर्मवशादिति। तत्र भोगेन सर्वस्यापि कर्मणो नाशितत्वान्निरनुशया अनुपभुक्त कर्माण एवावर्तन्त इति पूर्वपक्षः। सानुशया एवावर्तन्ते दृष्टानुसारात्। भाण्डे स्नेहलेशवद्भुक्त कर्मणः शेषसद्भावात्। स्मृतेश्च ततः शेषेणेति॥ इदं वर्णकान्तरं खण्डयति॥ नचैतद्युक्तमिवेति॥ स्वर्गभोगार्थं चोदितस्य कर्मणो मर्त्यभोगहेतुत्वे शास्त्रविरोधः। स्वर्गहेतुकर्मशेषादवरोहे कपूययोन्यापत्ति श्रुतिविरोधः। तथा च अनुशयो नाम ऐहिकफलकं कर्मेत्यर्थः। ते च येन मार्गेण चन्द्रलोकमारूढाः तेनैवावरोहन्ति किं तद्विपरीतेनेत्याकांक्षायामाह – यथोतमनेवं च। यथेतं धूमादिमार्गेण अनेवं अभ्रादिमार्गेण च॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ३–१–९

रमणीयचरणा इति श्रुतिः चरणाद्योन्यापन्तिं दर्शयतिनानुशयात्। चरणं शीलमित्यर्थः। तथा च निरनुशयानामेवावरोहणमिति शङ्काभागार्थः।

चरणमित्यनुशयोपलक्षणमिति कार्ष्णाजिनिराचार्यो मन्यते। चरणशब्दःअनुशये लाक्षणिक इत्यर्थः।

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ३–१–१०

चरणशब्दस्य मुख्यार्थसम्भवेलक्षणाकल्पनाया आनर्थक्यमिति शङ्का। शीलस्य कर्माङ्गत्वान्न पृथक्फलापेक्षा, अंगिफलेनार्थवत्त्वात्, न चाङ्गमात्राद्योत्यापत्तिः फलमिति वाच्यम्। अङ्गस्य निष्फलत्वेन मुख्यार्थस्याचारस्य ग्रहणायोगाल्लक्षणा युक्तेतिं समाधानार्थः।

## सुकृतदुष्कृते एवेति तु बादरिः ३–१–११

लोके धर्मं चरतीति कर्मचरणयोरभेदेन प्रयोगदर्शनात् चरणशब्दस्य सुकृतदुष्कृते अर्थ एव। लक्षणा नावश्यकीति बादरिराचार्यो मन्यते॥

तस्मादनुशयबलादागत्यवश्यंभावानुसन्धानात् वैराग्यमिति सिद्धम्॥

इति कृतात्ययाधिकरणम्

## अधिकरणम् – ३

## अनिष्टादिकारिणामपि च श्रुतम् ३–१–१२

पूर्वं इष्टादिकारिणश्चन्द्रलोकं गच्छन्तीत्युक्तम्। तद्युक्तम्। अनिष्टादिकारिणोऽपि गच्छन्तु इत्याक्षेपसंगत्या पूर्वपक्षः। अनिष्टादिकारिणश्चन्द्रमसं गच्छन्ति नवेति संशयः। अनिष्टादिकारिणः चन्द्रमसं गच्छन्ति, सर्वे गच्छन्तीत्युक्तत्वात् इष्टादिकारिवत् इति पूर्वपक्षः।
सिद्धान्तसूत्रम्———

## संयमनेत्वनुभूयेतरेषामारोहावरोहौ तद्गति दर्शनात् ३–१–१३

पूर्वपक्ष्यनुमाने प्रयोजनवत्त्वमुपाधिः। ननु आरोहानन्तरं यमयातनानुभवः तदनन्तरमवरोहः, एवं स्थिते सूत्रे आरोहावरोहावुभावपि

यमयातनानुभवानन्तरमुच्येते इत्याशङ्क्याध्याहारेण सूत्रं योजयति –ते तु इति। तथा च इतो यमसदनारोहानन्तरं संयमनेनुभूय ततोवरोहन्ति इत्येकं अध्याहारसहितं सूत्रवाक्यम्। इतरेषामेवंभूतौ आरोहावरोहाविति वाक्यान्तरमिति।

इतरेषां अनिष्टादिकारिणां संयमने यमालये अनुभूय यामीर्यातनाः आरोहावरोहौ भवतः। तद्गति दर्शनात् यमं प्रति गतिदर्शनात् पुनः पुनः वशमापद्यतेमें इति।

## स्मरन्ति च ३–१–१४

मनुव्यासप्रभृतयः संयमने पुरे पापिनां नरकभोगं स्मरन्ति। अतः पुण्यवतामेव चन्द्रलोकगमनं नान्येषामिति।

## अपि च सप्त ३–१–१५

सप्त रौरवादीन्नरकान् पापिनः प्राप्नुवन्ति इति पौराणिकाः स्मरन्ति। अतस्तेषां चन्द्रलोकगमनं नास्तीत्यर्थः।

## तत्रापि च तद्व्यापारादविरोधः ३–१–१६

पापिनो यामीर्यातना अनुभवन्तीति न युक्तम्। रौरवादिषु चित्रगुप्तादीनामधिष्ठातृत्वस्मरणादित्याशङ्क्याचामुत्तरम्। रौरवादिष्वपि यमस्यैवाधिष्ठातृत्वव्यापारादविरोध इति॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ३–१–१७

पापिनः तृतीयमार्गयुक्ताः विद्याकर्मप्राप्यमार्गरहितत्वादित्यनुमाने स्वरूपासिद्धिवारणाय विद्याकर्मणोरिति सूत्रम्। एतयोः पथोरित्यत्र एतच्छब्दः विद्याकर्मबोधकः। प्रकृतत्वादिति॥ एवं येवैकेचास्माल्लोकात्प्रयन्तीति अविशेषश्रुतेः मार्गान्तराभावाच्च अनिष्टादिकारिणामपि चन्द्रलोकप्राप्तिरिति पूर्वपक्षं निराकृत्य यत्र यत्र पुरुषाकारत्वं तत्र

पंचाहुति सम्बद्धभूतसूक्ष्मारब्धत्वमिति व्याप्तिमूलकं तत्पूर्वपक्षं दूषयितुमुपक्रमते—

## न तृतीये तथोपलब्धेः ३–१–१८

तृतीये मार्गे प्रविष्टानां पापिनां देहप्राप्त्यर्थमाहुतिसंख्यानियमो नादर्तव्यः तथोपलब्धेः जायस्व म्रियस्वेत्येतत् तृतीयं स्थानमिति। पुरुषाकारत्वं पापिनां नास्ति। तेषां कीटपतङ्गाद्याकारत्वादिति नाहुतिसंख्यानियमः। किञ्च मनुष्यदेहस्यापि नाहुतिसंख्यानियमः। विधिनिषेधरूपार्थद्वये वाक्यभेदापत्तेः। तादृशनियमे व्यभिचारंप्रदर्शयति—

## स्मर्यतेपि च लोके ३–१–१९

द्रोण धृष्टद्युम्नादिषु पुरुषाकारत्वसत्त्वेऽपि पंचाहुतिसम्बद्धभूतसूक्ष्मारब्ध त्वाभावाद्व्यभिचारः। लोक्यतेऽनेनेति लोकः भारतादिः।

## दर्शनाच्च ३–१–२०

जरायुजाण्डजस्वेदजोद्भिज्जरूपचतुर्विधदेहेषु स्वेदजोद्भिज्जयोः स्त्रीपुंस योगं विनैवोत्पत्तिदर्शनान्नाहुतिसंख्यानियम इत्यर्थः॥

## तृतीयशब्दावरोधः संशोकजस्य ३–१–२१

अण्डजं जीवजमुद्भिज्जमित्यत्र श्रुतौ तृतीयेनोद्भिज्जशब्देनैव संशोकजस्य स्वेदजस्य अवरोधः उपसंग्रह इत्यर्थः। तथा च अनिष्टादिकारिणां न चन्द्रलोकप्राप्तिः। किन्तु इष्टादिकारिणामेवेति सिद्धम्।

इति अनिष्टाधिकरणम्

## अधिकरणम्—४

### साभाव्यापत्तिरुपपत्तेः ३-१-२२

अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुंवायुर्भूत्वा धूमोभवति धूमोभूत्वाऽभ्रंभवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षतीति वाक्यं विषयः। आकाशं वायुमिति कर्मत्वनिर्देशात् भवति श्रुतेश्च संशयः। अवरोहन्तः किमाकाशस्वरूपमेव प्रतिपद्यन्ते किं आकाशसाम्यमिति। पूर्वं मार्गद्वयमुक्त्वा तृतीयत्वोक्तेस्थानशब्दस्य मार्गलक्षकत्वं युक्तम्। इह तु भवति श्रुतेर्विकारस्वरूपापत्तौ मुख्यत्वात् सादृश्यापत्तिलक्षणायां बीजं नास्तीति प्रत्युदाहरणसंगत्या आकाशादिस्वरूपमेव प्रतिपद्यन्त इति पूर्वपक्षः।

आकाशाद्यात्मकत्वं स्यात्कर्मिणां भवति श्रुतेः। अन्यस्यान्यात्मता दृष्टानन्दीशनहुषादिषु॥ भूत्वेति कर्मणो वायोस्तादात्म्यप्रतिपादनात्। आकाशस्यापि तादात्म्यं कर्मत्वेऽपि प्रतीयते॥ इति पूर्वपक्षः। सिद्धस्यासिद्धरूपेण परिणामो हि दृश्यते। सिद्धाकाशादिरूपेण नान्यस्य परिणामिता॥ इति सिद्धान्तः। साभाव्यापत्तिः – सादृश्यापत्तिः। अवरोहन्तः आकाशसाम्यमेव प्रतिपद्यन्ते नतु आकाशस्वरूपम्। नह्यन्यस्यान्यभावो मुख्य उपपद्यते इति॥

इति स्वाभाव्यापत्यधिकरणम्

## अधिकरणम् — ५

### नातिचिरेण विशेषात् ३-१-२३

उपजीव्योपजीवकभावसङ्गतिः। किं जीवः चिरकालमेव सादृश्येनावस्थाय अपरसादृश्यं गच्छति उतात्पमल्पमिति संशयः। दुर्निष्प्रपतरमिति दुःखेन निःसरणं ब्रूते नतु विलम्बेनेति नियमकारणाभावादनियम

इति पूर्वपक्षः। स्थूलशरीराभावे सूक्ष्मशरीरं न दुःखभागिति विलम्बमेव लक्षयतीति अल्पमल्पं कालमिति सिद्धान्तः। आकाशभावानन्तरं धूमभावः अल्पकालेन भवति व्रीह्यादिभावानन्तरं दीर्घकालेन सम्भवद्रेतोभाव भिन्नत्वात्॥

अनुशयिनामाकाशादिभावश्चिरभावी अनुशय्यवस्थात्वात् व्रीह्याद्य वस्थावत् इति पूर्वपक्षः। व्रीहिभावचिरावस्थानश्रुतार्थापत्तिबाधितमनुमान मिति सिद्धान्तः॥

इति नातिचिराधिकरणम्।

## अधिकरणम् – ६

### अन्याधिष्ठितेषु पूर्ववदभिलापात् ३–१–२४

त इह व्रीहियवाओषधिवनस्पतयस्तिलमाषा इति जायन्ते इति वाक्यं विषयः। किमनुशयिनां भोगाधिष्ठानं व्रीहियवादयः स्थावरा भवन्ति अथवा क्षेत्रज्ञान्तराधिष्ठितेष्वेषु अनुशयिनः संसर्गमात्रमनुभवन्तीति। जायन्त इति श्रुतेः, कर्मपूर्वकत्वाश्रुतेश्च संशयः। दुर्निष्प्रपतरशब्देन चिरनिर्गमनलक्षणोक्ता न युक्ता दुःखेन निर्गमनमिति मुख्यसम्भवादित्याक्षे पसङ्गत्या पूर्वपक्षः। देहत्यागमनुपश्चात् देहान्तरेशेरते इत्यनुशयिनः। इष्टादिकर्मजातस्य पशुहिंसादियोगात् स्थावरादिजन्मस्वनुभवनीय फलसम्भ वात् जायत इत्यस्य मुख्यार्थत्वोपपत्तेश्च स्थावरजात्यापन्ना भवन्ति। अनुशयिनःस्थावरजन्मवन्तः स्थावरदेहावच्छिन्न भोगानुकूलकर्मवत्त्वादिति पूर्वपक्षः। श्रुतिस्मृत्योरिति। स्थाणु मन्येनु सयन्तीत्याद्या श्रुतिः। शरीरजैःकर्मदोषैर्याति स्थावरतां नरः इत्याद्या स्मृतिः। पूर्वपक्षे स्थावरत्वनिवृत्तये यत्नगौरवम्। सिद्धान्ते व्रीह्यादिसंश्लेषमात्रमिति यत्नलाघवम्। अनुशयिनः अन्यजीवाधिष्ठितव्रीह्यासंयुक्ताः कर्मपरामर्शं

विना उक्ततद्भावकत्वात् आकाशादिभावापन्नानुशयिवत्। अनुशयिनां व्रीह्यादिजन्म न मुख्यम्। अस्मिन्प्रकरणे कर्मजन्यत्वमन्तरेण कीर्तितत्त्वे सति अन्यस्यान्यभावरूपत्वात्, आकाशादिभाववत् इति वा। यदत्र प्रकरणे कर्मविशेषपरामर्शपूर्वकमुच्यते, तज्जन्मेति व्यतिरेकमाह — यत्र तु सुखदुःखभाक्त्वमिति। यदि अनुशयिनां व्रीह्यादिभावः स्यात् तदा व्रीह्यादिरूपदेहनाशे देहिनामुत्क्रान्तेरवश्यंभावात् रेतःसिग्योगो नस्यादित्याह अपि च मुख्ये इति।

## अशुद्धमिति चेन्न शब्दात् ३–१–२५

ज्योतिष्टोमीयहिंसा अनुशयिनां व्रीह्यादिजन्मप्रापिका निषिद्धकर्म त्वादिति पूर्वपक्षः। वैदिकं कर्म अशुद्धं न भवति शास्त्रविहितत्वादिति समाधानार्थः।

## रेतःसिग्योगोऽथ ३–१–२६

अनुशयिनः व्रीह्यादिजन्मरहिताः रेतःसिक्संश्लेषवत्त्वात्। अनुशयिनां व्रीह्यादिभावः संश्लेषरूपः संश्लेषमात्र प्रतिपादकोत्तरवाक्य समभिव्याहृतत्वात्। योयोह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति।

## योनेः शरीरम् ३–१–२७

अनुशयिनः व्रीह्यादिशरीरवन्तो न भवन्ति। योनिप्राप्त्यनन्तरं शरीरवत्त्वेनोक्तत्वात्॥

## ६–अधिकरणानि

एवं कर्मिणां गत्यागतिसंसारोदुर्वार इत्यनुसन्धानात् कर्मफलाद्वैराग्यं तत्त्वज्ञानंसाधनं सिद्धमिति पादार्थः॥

इति श्री गोडा सुब्रह्मण्यशास्त्रि विरचितायां भाष्यप्रदीपिकायां तृतीयाध्यायस्च प्रथमः पादः



# अथ तृतीयाध्याये द्वितीयः पादः

## अधिकरणम् –१

### सन्ध्ये सृष्टिराह हि ३–२–१

एवं गत्यागतिनिरूपणेन विरक्तस्य महावाक्यार्थज्ञानाय तत्त्वंपदार्थविवेकः अस्मिन् पादे क्रियते इति हेतुहेतुमद्भावसङ्गतिः। नस्थानतोऽपीत्यतः प्राक् उद्देश्यत्वेन प्रथमं जिज्ञासिततत्वंपदार्थस्य विवेकः। ततः प्रभृति तत्पदार्थविचारः। गत्यागतिचिन्तया जाग्रदवस्था विचारिता। अस्मिन्नधिकरणे स्वप्नावस्था विचार्यते।

द्वयोर्लोकस्यानयोरिति। मुमूर्षोः सर्वेन्द्रियोपसंहारादेतल्लोकाननुभवे सति वासनामात्रेणेम लोकं स्मरतः कर्मबलाद्धृदये मानसपरलोकस्फूर्तिरूपः स्वप्नो भवति। लोकद्वयसन्धौ भवतीति सन्ध्यः स्वप्नः। तथा च श्रुतिः – तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च इति।

स यत्र स्वपिति – न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते इति वाक्यं विषयः। स्वप्नरथादयः जाग्रथादिवत् व्यावहारिकसत्ताका उत प्रातीतिकसत्ताका इति संशयः। भाष्ये पारमार्थिकीति व्यावहारिकसत्ताका इत्यर्थः। आरम्भणाधिकरणे पारमार्थिक सत्ताया निरस्तत्वात्। स्वप्नपदार्थः सत्यः प्रमाणप्रतिपाद्यत्वात् अग्निहोत्रवत्। श्रुतौ सृष्टत्वेनोक्तत्वात्। सकर्तृकत्वात्।

### निर्मातारं चैके पुत्रादयश्च ३–२–२

स्वप्नपदार्थः सत्यः प्राज्ञकर्तृकत्वेनोक्तत्वात्। आकाशादिवत्। (य एषसुप्तेषु' जागर्ति कामं कामं पुरुषो निर्मिमाणः।) पुत्रादयश्च तत्र कामा अभिधीयन्ते। न च हेत्वसिद्धिः। जीवकर्तृकत्वादिति वाच्यम्।

प्राज्ञप्रकरणात् प्राज्ञस्यैव निर्मातृत्वात्। तत्रैव साध्ये जाग्रत्पदार्थसमानदेश कालत्वादिति हेतुमाह – अथो खल्वाहुर्जागरित देश एवास्यैष इति यानित्वेव जाग्रत्पश्यति तानि सुप्तः इति॥

## मायामात्रं तु कात्स्न्र्येनानभिव्यक्त स्वरूपत्वात् ३–२–३

मायामात्रम् – प्रतिभासव्याप्यसत्ताकमात्रं स्वाप्न देहेन्द्रियादिकं न तु अर्थक्रियाकारि, कात्स्न्र्येन – कालदेशादिना अनभिव्यक्तं स्वरूपं अर्थक्रियाकारिता व्यापकं यत्र तथात्वात्। अत्र तु शब्दः पूर्वपक्षोक्तहेतूनां पारमार्थिकसत्तासाधकताव्यावर्तकः सन् स्वप्नसत्यत्व व्यावर्तकः।' मात्रशब्दस्तु साक्षादेव सत्यताव्यावर्तकः।

पूर्वपक्ष्यनुमाने कल्प्तसामग्रीजन्यत्वमबाध्यत्वं चोपाधिः। स्वप्नरथा दयः प्रातिभासिकाः लौकिकपदार्थसामग्रीविलक्षणसामग्रीकत्वात् शुक्तिरू प्यवत्। बाध्यत्वाच्चेति हेत्वन्तरमाह — बाध्यन्ते चैते इति॥

स्वप्नपदार्थो यदि मायिकः स्यात् तर्हि अप्रमाणभूतपरमार्थसूचकत्व बोधक स्वप्नाध्यायकः स्यादित्याशंकायामाह—

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ३–२–४

यत्र यत्र परमार्थसूचकत्वं इति तत्र तत्र परमार्थत्वं इति न व्याप्तिः रेखाक्षरादौ प्रतिबिम्बादौ च व्यभिचारात्। तथा च मिथ्याभूतोऽपि स्वप्नः परमार्थसूचको भवति श्रुतेः (पुरुषं कृष्णमित्यादि)। आचक्षते च तद्विदः स्वप्नाध्यायविद इति सूत्रार्थः। स्वप्नकर्तृत्वं न मुख्यम्। सामग्रयभावात् बाधितत्वाच्च किन्तु स हि कर्तेत्यस्य स्वप्नजन्यमोद त्रासादिहेतुसुकृतदुष्कृतादिकर्तेत्यर्थः। तथा च भाक्तमिति। द्वितीयसूत्रोक्तं प्राज्ञकर्तृकत्वमप्यसिद्धम्। जीवस्यैव कर्तृत्वात् प्राज्ञप्रकरणेऽपि तादृशजी वस्य ब्रह्मभावोपदेशपरत्वात्। "तदेव शुक्रं तद्ब्रह्मेति"॥ सर्वेश्वरत्वेन

प्राज्ञकर्तृकत्वं न निषिध्यते इत्याह न चास्माभिरिति। वियदादिष्वपरं प्राज्ञस्य कर्तृत्वं नास्तीति॥

प्रमाणबोध्यत्वहेतुरप्यसिद्धः। प्रमाणतात्पर्यविषयत्वस्यैव प्रमाणबोध्य त्वरूपत्वेन तादृशस्याभावात्। स्वप्नो यदि परमार्थः तर्हि स्वप्नावस्थायां विवेचनीय स्वयं ज्योतिष्ट्वज्जीवको न स्यादिति – अपि च जागरिते इति—

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ३–२–५

जीवसृष्टिः सत्या ब्रह्माभिन्नजीवकर्तृकत्वात् आकाशादिवदिति शङ्कायासूत्रम् अतिरोहितसत्यसङ्कल्पत्वादिमत्कर्तृकत्वमुपाधिरित्यर्थः। जीवेश्वरयोरभेदेऽपि ऐश्वर्यं जीवस्य अविद्यया तिरेहितम्। तच्च परस्य ईश्वरस्य अभिध्यानात् अभिव्यज्यते। ततो हि ईश्वरादेव, अज्ञातात्, बन्धः, ज्ञातात्तद्विपर्ययो मोक्षः इति।

## देहयोगाद्वासोऽपि ३–२–६

उक्तैश्वर्यतिरोधाने देहाभिमानो हेतुरिति कथनार्थं सूत्रम्। यत्पुनरुक्तं जागरितेति॥ न तत्साम्येति॥ देशादिसाम्यवचनं स्वप्नस्य जाग्रत्तुल्यभानाभिप्रायमित्यर्थः।

सिद्धान्ते स्वप्नस्य मिथ्यात्वसिद्धौ तदानीन्तनैः शरीरेन्द्रियादिभिः जीवस्यासंस्पृष्टत्वं सिद्ध्यति। तद्दृष्टान्तेन जाग्रत्यपि तदसंस्पृष्टत्वं सिद्ध्यतीति त्वंपादार्थ शोधनोपयोगी विचारः।

इति सन्ध्याधिकरणम्

# अधिकरणम् – २

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ३–२–७

सुषुप्तिवाक्यानि विषयः। प्रतियोग्यनुयोगिभावसङ्गत्या मनोलयात्मिकां सुषुप्तावस्थां विचारयति। जीवः नाडीस्थानकत्वाद्यन्यतमवान् तत्त्वेनोक्तत्वात्। नाडीपुरीतत्परमात्मानः विकल्पिताः समुच्चितावास्थानमिति संशयः। विकल्पिता इति पूर्वपक्षः। जीवः नाड्यादितित्रितयस्थानकः तत्त्वेनोक्तत्वात्।

नाडी पुरी तत्परमात्मसु सप्तमीश्रवणादाधारतया विकल्प इति पूर्वपक्षः। जीवस्य ब्रह्मतादात्म्येन ब्रह्मण आधारत्वानुपपत्तिः। यद्यपि जीवः सुषुप्तावज्ञानोपहितः तथापि तस्यं परमार्थतो ब्रह्मात्मकत्वात् यावदुपाधिभेदकल्पनश्च स्थूलसूक्ष्मोपाध्योश्च निवृत्तत्वात् तादात्म्यव्यपदेशः। अल्पोपाध्यवशेषात् तत्राधिकानन्दाभिव्यक्तिश्च। सप्तमीनां भिन्नार्थकत्वात् (सप्तमीनां नानार्थत्वात्) श्रुत्युनुसारेण समुच्चये आश्रयितव्ये विकल्पनमनुपपन्नम्। तस्याष्टदोषदुष्टत्वात्। नाडीं परित्यज्य पुरी तदायतनत्वेन क्वचित् सुषुप्तावाश्रितायां नाडीवाक्यस्य प्रमितप्रामाण्यपरित्यागः, अप्रमिताप्रामाण्यस्वीकारः। पुनः सुषुप्त्यन्तरे नाडीनामाश्रयत्वाश्रयणे नाडीवाक्यस्य पूर्वस्वीकृताप्रामाण्यपरित्यागः। परित्यक्तप्रामाण्योपादानमिति नाडीवाक्ये चत्वारो दोषाः। एवं पुरीतद्वाक्ये चत्वारः इत्यष्टदोषाः। शास्त्रत्रयसन्निपातात् द्वादश दोषा भवेयुः। सति चैवं नाडीषु पुरीतति च सप्तम्यौ सामीप्यपरतया नेतव्ये। प्रासादे शेते, पर्यङ्के शेते इतिवत्। ब्रह्मणि तु सप्तमी तादात्म्यप्राप्त्यभिप्राया। इत्येतत्सर्वं भाष्ये सोदाहरणं निरूपितम्।

पूर्वपक्षे सुषुप्तौ विपरीतज्ञानाभावेऽपि ब्रह्मतादात्म्यापत्तिं विना नाडीषु पुरीतति वा.स्थितौ ब्रह्मभावे विपरीतज्ञाननिवृत्तेरप्रयोजकत्वम्। तथा च सम्यग्ज्ञानस्य निष्प्रयोजनतया कर्मण एव प्रयोजकत्वं स्यादिति फलम्।

सिद्धान्ते तु विपरीतज्ञानाभावदशायां सुषुप्तौ ब्रह्मभावापत्त्या विपरीतज्ञानाभावसम्पादकतया सम्यज्ज्ञाने प्रवृत्तिरुपपद्यत इति फलम्॥

तदभावः स्वप्नाभावः सुषुप्तिरित्यर्थः। नाडीषु आत्मनि चेति समुच्चय एव, न विकल्पः तच्छ्रुतेः। समुच्चये नाडीपुरीततोर्न तुल्यवत्समुच्चयः किन्तु नाडीपुरीततोर्गुणभूततया परमात्मनस्तु प्राधान्येनेति।

## अतः प्रबोधोऽस्मात् ३–२–८

सुषुप्तो जीवः ब्रह्माधारः ब्रह्मापादानकोत्थानवत्त्वेन श्रुतत्वात्। सत आगम्य न विदुः सत आगच्छामहा इति। तस्मादुपाधिलये जीवस्य ब्रह्माभेदादौपाधिक एव भेद इति विवेकाद्वाक्यार्थभेद इति सिद्धम्॥

इति तदभावाधिकरणम्

## अधिकरणम् – ३

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ३–२–९

प्रतिबुध्यमानः किं स एव उतान्य इति संशयः। सुषुप्त्यनन्तरं ब्रह्मणः सकाशात् प्रबोधश्रवणात् तदात्मनैव सुषुप्तस्तिष्ठतीत्युक्तम्। तद्युक्तम्। सुषुप्तादन्यस्यापि प्रबोधसम्भवेन सुषुप्तस्य नाड्यादिस्थानवत्त्व सम्भवादित्याक्षेपसङ्गतिः। सुषुप्तादुत्थितः सुषुप्तपुरुषमात्रो न भवति लीनत्वात् जलराशौ लीनोद्धृत जलबिन्दुवत् इति पूर्वपक्षः।

पूर्वपक्षे सुषुप्तस्यैवापुनरावृत्तिरूपमोक्षसिद्धेर्ज्ञानवैय्यर्थ्यम्। सिद्धान्ते त्वज्ञातब्रह्मात्मना स्थितस्य अज्ञानबलेन पुनस्तस्यैवोत्थानावश्यंभावादज्ञान नाशाय ज्ञानापेक्षेति फलम्। सुषुप्तादुत्थितः सुषुप्त एव सुषुप्तकृतकर्मशेषकर्तृत्वात्। अनुस्मृतिसुषुप्तानुभूतस्मर्तृत्वात्। शब्द—सुषुप्ताभिन्नत्वेन श्रुतत्वात् (पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव, त इह व्याघ्रो वा)।

विधि – सुषुप्त कृतविद्याकर्मफलभाक्त्वात्। यद्यन्यःस्यात् फलभाङ्न स्यात्। ओमित्युक्ते तद्बोधककर्मविद्याविधीनामप्रामाण्यं स्यात्। अपि चान्योत्थानपक्षे इति भाष्यम्। सुषुप्तेरुत्थितो जीवः सुषुप्ताभिन्नः सुषुप्तेतरत्वाभाववत्त्वे सति यत्किञ्चित्पुरुषरूपत्वात्।

विमतः शरीरान्तरजीवो न शरीरान्तरव्यवहारकालीनोत्थितिमत्त्वात्। शरीरान्तरसुप्ताभिन्नो न भवति। अभेदप्रयोज्यप्रयोजनरहितत्वात्। मुक्ताभिन्नो न भवति संसारित्वात्। संसारित्वमस्तु साध्यं मास्त्विति चेत् मोक्षस्यान्तवत्त्वंस्यात्। ईश्वराभिन्नो न भवति अविद्यावत्त्वात्। एतैरनुमानैःपूर्वोक्तानुमाने हेतुविशेषणसिद्धिः।

लीनत्वरूप पूर्वपक्षिहेतौ विवेचनकारणाभाववत्त्वमुपाधिः। विवेचन कारणं पक्षेकर्माविद्ये। अपि च जीवो नामेति। लयाधिकरणभेदवत्त्वमप्युपाधिः। अप्रयोजकत्वञ्च। पूर्वाधिकरणोक्ता ब्रह्मसम्पत्तिः नान्यथा कर्तुं शक्यते। परन्तु मुक्ताविव सा नात्यन्तिकी। अन्तःकरण देहाद्युपाध्यवच्छिन्नस्यैवांशस्य तदुपाध्युपशमेन स्वरूपावस्थानाभ्युपगमात्। अज्ञानोपाधिकस्तु भेदः तदाप्यनुवर्तत एव। सति सम्पद्य न विदुः इत्यादिवाक्यैः न किञ्चिदवेदिषमिति प्रतिबुद्धानुसन्धानेन च सुप्तावज्ञानपरिशेषोपगमात्। कर्मानुस्मृतिशब्दविधिभ्यश्च पुण्यपापादीनामपि संस्कारात्मनावस्थानोपगमात्। ततश्च अज्ञान तत्कार्य वासनाविशिष्टतया सुप्तौ विद्यमानस्य जीवस्य पुनर्भोगप्रदकर्मोद्बोधनेनोत्थाने न काचिदनुपपत्तिः॥

इति कर्मानुस्मृति शब्दविध्यधिकरणम्

## अधिकरणम् – ४
## मुग्धेर्धसम्पत्तिः परिशेषात् ३–२–१०

मूर्च्छावस्था किं प्रसिद्धावस्थान्तर्गता अतिरिक्ता वेति संशयः। यथा सोऽहमिति प्रत्यभिज्ञानात् सुषुप्तप्रतिबुद्धैक्यमुक्तं एव विशेषाभावप्रत्य

भिज्ञानात् सुषुप्तिरेव मूर्च्छा इति दृष्टान्तसङ्गत्या पूर्वपक्षः। मूर्च्छावस्था जाग्रदाद्यवस्थानामन्यतमा तदन्यत्वेनाप्रसिद्धत्वे सत्यवस्थात्वात् जाग्रदाद्यव स्थावत्। सुषुप्तिरूपा विशेषविज्ञानाभाववत्त्वे सति मरणावस्थाभिन्नत्वात् सुषुप्तिवत् इति पूर्वपक्षः। सिद्धान्तस्तु मूर्च्छावस्था प्रसिद्धावस्थात्रयभिन्ना जाग्रदाद्यवस्थाभिन्नत्वे सति अवस्थात्वात्। न च हेतुविशेषणासिद्धिः। मूर्च्छा जाग्रदवस्थाभिन्ना इन्द्रियजन्यज्ञानाभावात्। इषुकार इत्यादिग्रन्थेन इष्वासक्त मनस्कस्य जाग्रदवस्थायां व्यभिचारशंकायाम् ज्ञानसामान्याभा वादिति हेतकरणान्नदोष इति। देहपतनहेतुत्वादिति जाग्रदवस्थासाधको द्वितीयो हेतुः। एवं मुर्च्छावस्था स्वप्नावस्थाभिन्ना ज्ञानसामान्याभावात्। मरणावस्था न भवति।

विद्यमान प्राणोष्मकत्वात्। सुषुप्तिभिन्ना सुषुप्त्यवृत्ति भयानक नेत्रत्वादिधर्मवत्त्वात्। विलक्षणनिमित्तकत्वात्, सुषुप्तित्वेनाप्रसिद्धविषयत्वात्। सर्वैः सुषुप्तिधर्मैरसंपन्नत्वात् सुषुप्तो न भवति। मरणावस्थाधर्मैरसम्पन्नत्वान्मृ तोऽपि न भवति। अतः सुषुप्तेः मरणस्य चार्धसम्पत्तिर्मूर्च्छा। मूर्च्छाया अवस्यान्तरत्वे ततो विवेकार्थं प्रयत्नान्तरं करणीयमिति सिद्धान्ते फलम्। पूर्वपक्षे न यत्नान्तरमिति। विशेषज्ञानहीनत्वे पुनरुत्थानवत्त्वतः। मुग्धिः सुप्तिश्चिरोच्छ्वासाद्यवान्तरविभेदतः॥ (पूर्वपक्षः) प्रह्मभावाविशेषेऽपि लक्षणान्यत्त्वमो यथा। सुप्तेर्मृतेर्भिदा मुग्धेस्तथा लक्षणभेदतः॥ (सिद्धान्तः) पूर्वपक्षानुमानं प्रसन्नवदनत्वादिना सोपाधिकम्॥

इति मुग्धाधिकरणम्

## अधिकरणम् – ९

### न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ३–२–११

उद्देश्य त्वंपदार्थविचारानन्तरं तत्पदार्थमवसरसङ्गत्या शोधयति :– सविशेषत्व, निर्विशेषत्व बोधकोभयश्रुत्यनुरोधात् उभयरूपं ब्रह्म, उतैकरूपमिति संशयः। उभयश्रुतयोविषयः। अत्र ब्रह्मणः सविशेषत्वस्या

नृततया परामार्थतो निर्विशेषमेव ब्रह्मेति प्रतिपाद्यते। तथा चेदमधिकरणमारम्भणाधिकरणेनैव गतार्थम्। तत्र लौकिकमानविरोध माशङ्क्य तेषां दुर्बलताप्रतिपादनेन व्यावहारिकता प्रतिपाद्यते। अत्र तु सविशेषत्वनिर्विशेषत्वप्रतिपादकवाक्ययोरेव श्रौतयोः विरोधपरिहारेण निर्विशेषत्वं व्यवस्थाप्यत इति न पौनरुक्त्यम्। तदा अयं विचारः वियत्प्राणपाद्योरेव कर्तव्यस्यादिति शङ्का। इहाप्यध्याये महावाक्यार्थज्ञान साधनतया पदार्थशोधनस्य कर्तव्यताप्राप्तेः तत्पदार्थशोधनप्रसङ्गेन निर्विशेष सविशेष प्रतिपादक श्रुतिविरोधस्य परिहारः कर्तव्य इति सङ्गतिरस्तीति समाधिः। उभयश्रुत्यनुरोधादुभयरूपं ब्रह्मेति पूर्वपक्षः।

सिद्धान्तस्तु ब्रह्म औपाधिक (वास्तव) विरुद्धोभयरूपं न। एकरूपत्वात् अपिना स्वाभाविकविरुद्धोभयरूपं न एकरूपत्वात्॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ३–२–१२

ब्रह्म सविशेषं श्रूयमाणविशेषकत्वात्। भिद्यत इति भेदो विशेषः इति शङ्काभागार्थः। उपाधितः अपारमार्थिकविशेषवत्त्वाङ्गीकारे इष्टापत्तिः। अस्माभिः औपाधिक वास्तवोभयरूपराहित्यस्यैव साधनात्। औपाधिक पारमार्थिकविशेषाभ्युपगमः परं न सम्भवति। प्रत्येकमतद्वचनात्। प्रत्येकं प्रत्युपाधि अतद्वचनात् अभेदवचनात्। "यश्चायमस्यां पृथिव्यां तेजोमयोमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोमृतमयः पुरुषोऽयमेव सयोयमात्मेति"॥

## अपि चैवमेके ३–२–१३

अपि चैके शाखिनः द्वैतनिन्दापूर्वकमद्वैतमेव समामनन्ति। अनश्च निर्विशेषं ब्रह्म। "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। नेह नानास्ति किञ्चनेति।

द्विविधश्रुतिषु सतीषु निर्विशेषत्वे किं नियामकमिति शङ्कायां सूत्रम्—

## अरूपवदेव हि तत्प्रधानत्वात् ३-२-१४

ब्रह्म निर्विशेषं श्रुतिमहातात्पर्यविषयत्वात्। तत्परातत्परविरोधे तत्परस्यैव प्राबल्यम्॥

## प्रकाशवच्चावैयर्थ्यम् ३-२-१५

सविशेषश्रुतीनां गतिप्रदर्शनार्थं सूत्रम्। यथा सूर्यादिप्रकाशः अङ्गुल्यादि उपाधिसम्बन्धादृजुवक्रादिभावं प्रतिपद्यते एवं पृथिव्याद्युपाधिवशात्तदाकारमिव भवति। तादृशाकारविशेषोपदेश उपासनार्थं सविशेषश्रुतिभिः क्रियते इति तासामवैयर्थ्यमिति॥

## आह च तन्मात्रम् ३-२-१६

श्रुतिः ब्रह्म चैतन्यमात्रमित्याह। अतश्च विशेषो मिथ्या "स यथासैन्धवघनोनन्तरो। एवं वा अरेयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति"॥

## दर्शयति चाथो अपि स्मर्यते ३-२-१७

"अथातआदेशो नेति नेति" इत्यादिश्रुतिः प्रपञ्चनिषेधमुखेनैव दर्शयति। यदि सविशेषं स्यात्तथैवोपदिशेत्। अथो = तथा स्मर्यतेऽपि भगवद्गीतासु निषेधमुखेनैव ब्रह्म – अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत इति॥

द्विधा हि वेदान्तानां प्रवृत्तिः। वस्तु प्रकाशनेन उपासनाविधानेन च। वस्तुज्ञापनमपि द्विधा। परप्रतिषेधेन विधिमुखेन च। यथा "नेति नेति" "सत्यं ज्ञानमनन्तं ब्रह्म" "ऐतदात्म्यमिदं सर्वम्"। तत्र ये निषेधाधिकारपठिताः प्रपञ्चाः द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेत्यादयः। ते सृष्टिवाक्यैः ब्रह्मसम्बन्धित्वेनारोपिताः प्रतिषेधायानूद्यन्ते। ये तु विधिमुखप्रतिपादनप्रकारणपठिताः ते सत्यं ज्ञानमनन्तं ब्रह्म,

ऐतदात्म्यमिदं सर्वमित्यादिशब्दैः प्रतिपिपादयिषिताद्वैतप्रमित्यर्थं कार्य कारणानन्यत्वन्यायेन ब्रह्मव्यतिरेकेणाभावाय ब्रह्मकार्यत्वेन निर्दिश्यन्ते। आत्मन आकाशस्सम्भूतः, तत्तेजोऽसृजत इत्यादिभिः ये पुनः स क्रतुं कुर्वीत इत्याद्युपासनाप्रकरणे "मनोमयः प्राणशरीरः" इत्यादिभिः प्रपञ्चा अभिधीयन्ते। ते उपासनाविध्यर्थत्वात् तद्वाक्यानं न ब्रह्मणः सप्रपञ्चतामावहन्ति। अन्यपरादपि शब्दात्प्रतीतं तथेत्याश्रयिष्यते यदि न प्रमाणान्तरैः प्रतिषेधयिष्यते। सन्ति च नेह नानास्ति किञ्चन इत्याद्या द्वैतबाधिन्यः श्रुतयः तत्पराः। अद्वैतस्य मानान्तरानवगम्यमान त्वात्, निर्दुःखपरमानन्दत्वेन पुरुषार्थत्वाच्च तत्प्रतिपादकश्रुतीनां तत्परत्वम्। द्वैतस्य तु , लोकसिद्धत्वादपुमर्थत्वाच्च तद्वाक्यानामतत्परत्वमिति। तस्मान्मायामयी सप्रपञ्चता, निष्प्रपञ्चता तु तात्त्विकीति सिद्धम्।

## अत एव चोपमा सूर्यकादिवत् ३–२–१८

आत्मनो निर्विशेषत्वादेव औपाधिकं संविशेषत्वमादाय सूर्यकादिवत् सूर्यप्रतिबिम्बवदित्युपमा उपादीयते — "यथाह्ययं----" इत्यादि॥

## अम्बुवदग्रहणात्तु न तथात्वम् ३–२–१९

मन आदयश्चैतन्यप्रतिबिम्बग्राहिणो न भवन्ति तदविप्रकृष्टत्वात्तदनन्य त्वाच्च॥ चैतन्यं मनः प्रतिफलितं न भवति। अमूर्तत्वात्, सर्वगतत्वाच्च वायुवदिति शङ्का—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामंजस्यादेवम् ३–२–२०

पूर्वोक्तानुमानस्याकाशे व्यभिचारः। यथा जलान्तर्गतसूर्य प्रतिबिम्बस्य जलगतवृद्धिह्रासभाक्त्वं न वास्तवम् एवं निर्विशेषस्यात्मनो देहाद्युपाध्यन्तर्भावेण देहादिगतसुखदुःखादिरूप वृद्धिह्रसभाक्त्वं न वास्तवम् इत्येतावतांशेन (एवं) उभयोः दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यम्।

## दर्शनश्च ३–२–२१

परस्यैव ब्रह्मणो देहादिषूपाधिषु अन्तरनुप्रवेशस्य श्रुतौ दर्शनात् — "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः सपक्षीभूत्वा पुरः पुरुष आविशदि"ति॥ पक्षी = जीवः त्तैत्तिरीयके आनन्दमयपर्याये जीवस्य पक्षित्वरूपणात्॥

अत्र केचित् द्वे अधिकरणे कल्पयन्ति॥ द्वितीयाधिकरणम्। अत्र द्वे अधिकरणे इति – न स्थानतोऽपीति सूत्रमारभ्य अरूपवदेव हि तत्प्रधानत्वादित्येवमन्तानि सूत्राणि परमात्मनो निर्विशेषत्वव्यवस्थापक तया एकमधिकरणम्। प्रकाशवच्चावैयर्थ्यादित्यादीनि तु परस्परभिन्न सत्ताज्ञानरूपं ब्रह्मेति पूर्वपक्षे परस्पराभिन्न सत्ताज्ञानरूपं परं ब्रह्मेति व्यवस्थापयितुमपरमधिकरणमिति। आह च तन्मात्रमित्यारभ्य सिद्धान्तसूत्राणि। ज्ञानमात्रमाह श्रुतिः। मात्रपदं ज्ञानस्य सत्पदार्थभेदव्यावृ त्त्यर्थम्। तथा च सत्यज्ञानात्मकमखण्डं ब्रह्मेति सिद्धान्तः।

ब्रह्म किं लक्षणम्? किं सल्लक्षणम् उत प्रकाशलक्षणम् उतोभयलक्षणमिति सन्देहः। तत्र पूर्वपक्षः। प्रकाशवच्चावैयर्थ्यात्। प्रकाशवत् ज्ञानवत्, चकारात् सत्तावच्च सत्यं ज्ञानमिति श्रुतिगत सत्यज्ञानशब्दद्वयावैयर्थ्यादिति सूत्रार्थः। सद्रूपं चिद्रूपञ्च ब्रह्म सत्यं ज्ञानं, सदेव सोम्येति द्विरूप श्रुतेरवैयर्थ्यादिति। सिद्धान्तः – आह च तन्मात्रम्। प्रकाशमात्रम्। सत्ताप्रकाशयोरनतिरेकादिति॥

अस्य द्वितीयाधिकरणस्य किं ब्रह्मणोऽनेकरूपत्वनिरासः फ़लं, बोधरूपत्वनिरासः उत सत्तारूपत्वनिरासः। नाद्यः। प्रथमाधिकरणेनैव गतार्थत्वात्। न द्वितीयः। विज्ञान घन एवेति श्रुतेः जडस्यजीवाभेदासम्भवाच्च। न तृतीयः। अस्तीत्येवोपलब्धव्य इति श्रुतेः। पूर्वपक्षोऽपि न सम्भवदुक्तिकः। निष्प्रपञ्चैकरूपत्वरूपपूर्वाधिकरणसिद्धान्त विरोधात् भिन्नोभयरूपत्वपूर्वपक्षानुत्थानात् इति॥

एवमाकारश्रुतीनां कल्पिताकारागतिरिति स्वमतमुक्तम्। अथ प्रपञ्च प्रविलयवादिमतमनुवदति – यदप्याहुरिति॥ ते हि मनोमयः प्राण शरीर इत्याद्याकारश्रुतीनां तदितराकारप्रविलयो गतिः। मनोमय इत्यस्य मनोतिरिक्तोपाधिशून्य इत्यर्थः। एवं प्राणशरीर इत्यनेन प्राणातिरिक्तोपाधि निषेधान्मनसोऽप्यभावसिद्धिः। एवं सर्वे शब्दा अनाकारब्रह्मपरा इत्याहुः। तन्मतं निराचष्टे – तदपि न समीचीनमिति॥ ज्ञेय ब्रह्मप्रकरणस्थानां निषेधपरत्वेऽपि उपासनाप्रकरणस्थानां न तत्परत्वम्, उपासनापरत्वात्। मनोमयवाक्यप्रतिपाद्यं निराकारब्रह्म न, उपासनाविषयत्वेनोक्तत्वात्, मोक्षविलक्षणफलत्वात्। नचाकारानाकारवाक्यानामेकवाक्यता नियोगै क्यादिति वाच्यम्। ब्रह्म वाक्येषु नियोगाभावात्। ब्रह्मणि नियोगाऽसम्भवेऽपि प्रपञ्चप्रविलये नियोगो युज्यत इति चेत्तत्र वक्तव्यम्। किं प्रपञ्चस्य सत्यस्य लये विधिः उत कल्पितस्येति। आद्यं निरज्यति यदि तावदिति॥ सत्यस्य ज्ञानेन नाशायोगात्, नाशे वा शुकादिमुक्त्यैव नष्टत्वात् विधिवैयर्थ्यम्। द्वितीयं निरस्यति – अथेत्यादिना। उपदेशजन्यज्ञानादेव अविद्या तत्प्रयुक्तप्रपञ्चलयसिद्धेः नियोगस्य वैय्यर्थ्यात्। नियोज्याभावादपि नियोगासम्भवः इत्याह – नियोज्योपीति। नियोज्याभावाच्च नियोगाऽसम्भवः। नियोज्यो जीवः किं प्रपञ्चान्तर्भूतः प्रह्म वा। आद्ये जीवनाशाद्विध्ययोगः, द्वितीये नियोज्यासिद्धिः।

तस्मात्साकारवाक्यानामाकारलयद्वारा निर्गुणवाक्यैकवाक्यतेति गतिप्रदर्शनमयुक्तम्। किन्तु तेषां कल्पिताकारो विषयः। तदुपासनयाऽभ्युद यसिद्धिः। निर्गुणवाक्यानां तु परमार्थालम्बनत्वमिति॥

इत्युभयलिंगाधिकरणम्

## अधिकरणम् – ६

### प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ३–२–२२

पूर्वं निषेधश्रुतिभिः ब्रह्म निर्विशेषं सिद्ध्यतीत्युक्तमयुक्तम्। ताभिः ब्रह्मणोऽपि निषिद्धत्वादित्याक्षेप सङ्गतिः। अथात आदेशो नेति नेतीति

वाक्यं विषयः। अत्र प्रपञ्चो ब्रह्म चेत्युभयं निषिध्यते, उत प्रपञ्चो ब्रह्म वैकमिति सन्देहः। अथात आदेशो नेति नेतीत्यत्र नञ्पदं, ब्रह्म मूर्तामूर्तोभयनिषेधबोधकं ब्रह्म मूर्तामूर्तोभयपरामर्शीति पदसमभिव्याहृत त्वात्। अथवा ब्रह्म नेतीति निषिध्यते। वाङ्मनसातीतासंभाव्यमान स्वरूपकत्वात् सति पूर्वपक्षः। नेति नेतीत्यत्र नञ्पदं उभयनिषेधबोधकं न भवति। साधिष्ठाननिषेधबोधकत्वात्। ब्रह्म निषेधप्रतियोगि न एतद्वाक्यघटित प्रकरणतात्पर्यविषयत्वात्, निन्दितनिषेधकत्वात्, (असन्नेव स भवति) अस्तीत्युपलब्धव्यत्वेनोक्तत्वात्। नञ्शब्दः प्रपञ्चनिषेधबोधकः प्रपञ्चपरामर्शीतिशब्दसमभिव्याहृतत्वात्।

## तदव्यक्तमाह हि ३–२–२३

अग्राह्यत्वाद्ब्रह्म नास्तीति शङ्का निरासार्थं सूत्रम्। तद् ब्रह्म अव्यक्तमिन्द्रियग्राह्यं न सर्वसाक्षित्वात्। आहह्येवं श्रुतिः "न चक्षुषा गृह्यते नापि वाचा, अगृह्यो न हि गृह्यते।"

## आपि च संराधने प्रत्यक्षानुमानाभ्याम् ३–२–२४

अपि चैनं परमात्मानं संराधने समाध्यवस्थायां पश्यन्ति। प्रत्यक्षानुमानाभ्यां, श्रुतिस्मृतिभ्याम्। "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" इति श्रुतिः। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्" इति स्मृतिः॥ भक्तिध्यानप्रणिधानमिति भक्तिः = माहात्म्यज्ञानपूर्वकः स्नेहाख्यः अन्तःकरणवृत्तिविशेषः। ध्यानम् = अवधानेन प्रत्यावृत्तिः। ताभ्यां परमात्मनि चित्तस्य प्रणिधानं स्थापनम्।

संराध्यसंराधकभावाभ्युपगमाज्जीवपरयोः भेदाशङ्कायां सूत्रम्——

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ३–२–२५

यथा प्रकाशादयः कर्मणि उपाधिषु भिद्यन्ते न स्वतः एवं प्रकाशः चिदात्मापि बुद्ध्यादिकर्मण्युपाधौ भिद्यते, स्वतस्तस्यावैशेष्यम् अभेद एव। एकरूपत्वमेव तत्त्वमसीत्यभ्यासात्।

प्रकाशादिवदिति षष्ठ्यन्ताद्वतिः। प्रकाशादेरिव उपाधौ ब्रह्मणोपि आरोपितरूपेण प्रकाशः अवैशेष्यम् आरोपितविशेषरूपेण परमार्थतो ऽभावश्च उपपद्यते। इयञ्च व्यवस्था तत्त्वमस्याद्यभ्यासादवगन्तव्या इत्यर्थः ॥

## अतोऽनन्तेन तथा हि लिङ्गम् ३–२–२६

अतः भेदस्यौपाधिकत्वात् विद्यया भेदं विधूय जीवोऽनन्तेन परमात्मना एकतां गच्छति। तथा हि लिङ्गम् – "स यो ह्वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति"॥ जीवस्य, एकता इति पदयोरध्याहारेण सूत्रार्थः ॥

## उभयव्यपदेशात्त्वहि कुण्डलवत् ३–२–२७

भेदाभेदयोरुभयोर्व्यपदेशादवस्थावस्थावतोरिव भेदाभेदाविति मतम्॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ३–२–२८

एकदेशैकदेशिनोरिव भेदाभेदावित्यपरं मतम्।

प्रकाश तदाश्रय सवित्रोर्यथा तेजस्त्वाविशेषात् नात्यन्तभेदः, भेदश्च प्रतीयते। तद्वज्जीवेश्वरयोश्चैतन्यरूपत्वेन भेदाभेदावित्यर्थः। पूर्वसूत्रे एकस्यैव चैतन्यस्य अवच्छेदकभेदात् भेदाभेदः इत्युक्तम्। अनेन तु जीवचैतन्यमीश्वरचैतन्यञ्च परमार्थतो भिन्नमेव अभेदनिर्देशस्तु चित्त्वेन साजात्येन यथा आदित्यस्य तदाश्रितप्रभारूपद्रव्यस्य भेदे सत्यपि तेजस्त्वेन अभेदनिर्देश इति प्रतिपाद्यते॥

## पूर्ववद्वा ३–२–२९

पूर्वमतयोर्भेदस्य सत्यत्वादभेदवदनिवृत्तिः स्यात्। अतः पूर्ववत् प्रकाशादिवच्चावैशेष्यमित्यत्र भेदः काल्पनिकः अभेदः सत्य इति यदुक्तं स एव सिद्धान्तः।

## प्रतिषेधाच्च ३–२–३०

नान्योतोस्ति द्रष्टा इति परमात्मव्यतिरिक्तस्य चेतनस्य "नेति नेति" इति ब्रह्मव्यतिरिक्तप्रपञ्चस्य च प्रतिषेधात् ब्रह्माद्वितीयमित्येव सिद्धान्तः। तस्मान्निष्प्रपञ्चं चिदेकरसं ब्रह्म तत्पदलक्ष्यमस्तीति सिद्धम्।

इति प्रकृतैतावत्त्वाधिकरणम्

## अधिकरणम् – ७

### परमतः सेतून्मानसम्बन्ध भेदव्यपदेशेभ्यः ३–२–३१

अथ य आत्मा ससेतुरित्यादि वाक्यानि विषयः। ब्रह्मातिरिक्तं वस्त्वस्ति नवेतिसंशयः। पूर्वं नेति नेतीत्यनेन ब्रह्मातिरिक्तस्य निषेध इत्युक्तमयुक्तम्। ब्रह्मणः सेतुत्वादिव्यपदेशेन वस्त्वन्तरसत्त्वावगमात्। द्युभ्वाद्यधिकरणे सेतुत्वस्य गौणत्वेन नीतत्वेऽपि उन्मानादिनां गतेरदर्शनादित्याक्षेपसङ्गतिः। अत्र पूर्वपक्षे अद्वितीयत्वासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलभेदः। ब्रह्म स्वसमसत्ताकद्वितीयवत् पारवत्वरूप सेतुत्वात्, अन्मितत्वात् सम्बन्धित्वात् (प्राज्ञेनात्मना संपरिष्वक्तः) नगरवत्, भेदेनोक्तत्वाच्च घटवत् इति पूर्वपक्षः। उन्मानं = कैश्चिदवयवैरवच्छिन्नतया प्रतिपादनम्। चतुष्पात् अष्टा शफं षोडशकलमित्यादिना।

सेतुव्यपदेशबलात् ब्रह्मातिक्रम्य प्राप्तव्यमन्यत्तत्त्वमस्तीति गम्यते। ब्रह्मणश्चतुष्पात्त्वादिव्यपदेशबलात् ततोऽधिकं किञ्चिद्वस्तु अस्तीति गम्यते। जीवब्रह्मणोः सम्बन्धाभिदानात् ब्रह्मणोऽन्यत् जीवाख्यं तत्त्वमस्तीति गम्यते। अन्तरादित्यवाक्यपर्यालोचनया ब्रह्मणोन्यत् अत्र्याधारं किञ्चित्तत्त्वमस्तीति गम्यते। अतः अद्वितीयं ब्रह्म तत्त्वमिति सिद्धान्तो न सङ्गच्छत इति पूर्वपक्षः॥

## सामान्यात्तु ३-२-३२

उक्तानुमानानामागमबाधः। जडत्वादिकमुपाधिः। ब्रह्मणोऽन्यद्वस्तु किं सादि वा, अनादि वा। नाद्यः। सादिमात्रस्य ब्रह्मजन्यत्वेन ब्रह्मानन्यत्वात्। न द्वितीयः। प्रागुत्पत्तेः द्वितीयत्वावधारणात्। उक्तहेतवोऽन्यथासिद्धाः। विधारकत्वरूप सामान्यात्सेतुत्वम्। विधारकत्वं तु कल्पित द्वितीयापेक्षयाऽपि युज्यत इति भावः।

## बुद्ध्यर्थः पादवत् ३-२-३३

परिमितत्वमसिद्धम्। उन्मानव्यपदेशः बुद्ध्यर्थः, उपासनार्थः पादवत्, मनसः वाक्प्राणचक्षुः श्रोत्राणि, आकाशस्य अग्निवाय्वादित्य दिशः पादाध्यानाय यथा कल्प्यन्ते एवम्। कार्षापण पादवदिति लौकिक दृष्टान्तः।

## स्थानविशेषात् प्रकाशादिवत् ३-२-३४

सम्बन्धभेदौ कल्पितौ न सत्यद्वितीयसाधकौ।

## उपपत्तेश्च ३-३५

सम्बन्धभेदौ कुतो न मुख्यौ इत्याशंक्याह – न मुख्यसम्बन्धो जीवपरयोः सुषुप्तौ भवति स्वमपीतो भवतीति स्वरूपस्यैव सम्बन्धत्वव्यपदेशोपपत्तेः। भेदोऽपि न मुख्यः श्रुतिविरोधादिति॥

## तथान्यप्रतिषेधात् ३-२-३६

ब्रह्मातिरिक्तस्य प्रतिषेधादपि ब्रह्मणोऽतिरिक्तं वस्तु नास्तीति गम्यते। "सएवाधस्तात्। सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद। ब्रह्मैवेदं सर्वम्। नेह नानास्ति किंचने" त्यादि॥

## अनेन सर्वगतत्वमायाम शब्दादिभ्यः ३–२–३७

द्वितीयाभावे सर्वगतत्वश्रुतिविरोध इत्याशंकापरिहारार्थं सूत्रम्। अनेन, सेतुत्वादिव्यपदेशमुख्यत्वस्य वस्त्वन्तरस्य च प्रतिषेधेन ब्रह्मणः सर्वगतत्वं सिद्धम्। अन्यथाहि सत्यस्य द्वितीयवस्तुनः सत्त्वे सेत्वादिवद्ब्रह्मणः परिच्छिन्नता स्यात्। एवं सत्यवस्त्वन्तरस्य सत्त्वे असंगस्य निरवयवस्य च ब्रह्मणः तत्सम्बन्धासंभवात् सर्वगतत्वश्रुतिविरोधः प्रसज्यते। प्रपञ्चस्याध्यस्तत्वे तु अध्यस्तस्याधिष्ठानेन व्याप्तत्वादाध्यासिकतादात्म्येन सम्बद्धत्वाच्च सर्वगतत्वमुपपद्यते। आयामशब्दोव्यापकत्ववाचकः शब्दः। यावान्वा अयमाकाशः इत्यादि, आकाशवत् सर्वगतश्च नित्य इति। नित्यः सर्वगतः स्थाणुरिति च। न्यायः – अध्यस्तं जगदधिष्ठानेन व्याप्तम् अध्यस्तत्वात् रज्वाव्याप्तसर्पवदिति। अणुत्वे सर्ववस्तूपादनत्वानुपपत्तिः। मध्यमपरिमाणत्वे सावयवत्वं परिशेषात् सर्वगतत्वं सिद्ध्यतीत्यपि न्यायः॥

इति पराधिकरणम्

# अधिकरणम् – ८

## फलमत उपपत्तेः ३–२–३८

तत्पदवाच्यार्थोऽनेनोच्यते। ब्रह्मातिरिक्तस्य वस्तुनो निषेधे ब्रह्मणो निर्विशेषत्वेन, फलदातृत्वमपि न स्यादित्याक्षेपसङ्गतिः। कर्मफलं किमीश्वरादुत कर्मण इति संशयः। पूर्वपक्षे फलदातुरीश्वरस्य तत्पदवाच्यस्यासिद्ध्या लक्ष्यार्थासिद्धिः। सिद्धान्ते तत्सिद्धिरिति फलभेदः। अनेन सिद्धान्तः प्रतिपाद्यते। पूर्वपक्षस्तु धर्मं जैमिनिरित्यनेन वक्ष्यते। स्वर्गादिकं विशिष्टदेशकालकर्माभिज्ञदातृकं कर्मफलत्वात् सेवाफलवत् इत्युपपत्तेः। अतः अस्मात्परमेश्वरात्कर्मफलमिति॥

## श्रुतत्वाच्च ३–२–३९

"सवा एष महानज आत्माऽन्नादो वसुदान" इति फलदातृत्वस्य श्रुतत्वाच्च ईश्वरस्य फलदातृत्वम्॥

## धर्मं जैमिनिरत एव ३–२–४०

तत्र विधिश्रुतेरित्यादि भाष्यम्। विधिश्रुतेः विध्यर्थस्य प्रेरणरूपस्य विषयो यागः, तद्भावावगमाद्यागः स्वर्गसाधनमिति गम्यते। यागस्य इष्टसाधनत्वाभावे प्रेरणानुपपत्तेरित्यर्थः। अपूर्वद्वारा कर्मणः फलमुत्पद्यते। सिद्धान्तं दूषयति ईश्वरस्त्विति। केवलादीश्वरात् फलमिति चेत् कारणवैचित्र्यं विना कार्यस्य फलस्य वैचित्र्यानुपपत्तिः। यदि च कर्मापेक्षः फलं ददाति तदा तस्मादेव फलसिद्धेः ईश्वरवैयर्थ्यमिति पूर्वपक्षः। विधिश्रुतेर्विषयभावोपगमादिति = विधिश्रुतिः = लिङ् तद्विषयभावः = तत्समभिव्यहृताख्यात (धातु) प्रतिपाद्यत्वम्॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ३–२–४१

बादरायणस्तु पूर्वं पूर्वोक्तमीश्वरमेव फलहेतुं मन्यते। एष ह्येव साधु कर्म कारयति इति धर्माधर्म कारयितृत्वव्यपदेशात् अचेतनस्य कर्मणः स्वतः प्रवृत्त्ययोगात् सेवादि दृष्टान्तानुसारिश्रुतेर्बलीयस्त्वात् सर्ववेदान्तेष्वीश्वरस्य जगद्धेतुत्वश्रुतेश्च ईश्वराधिष्ठितात्कर्मणो जगदन्तःपाति फलसिद्धिरिति।

तदेवमधिकरणचतुष्टयेन निर्विशेषः प्रकाशरूपः, निषेधाविषयः, अद्वितीयः, कर्मफलदातृत्वेनोपलक्षितः तत्पदार्थः परमात्मा शोधितः॥ एवमस्मिन्पादे तत्त्वमर्थविचारः कृतः।

इति फलाधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः



# अथ तृतीयाध्यायस्य तृतीयः पादः

## अधिकरणम् – १

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ३–३–१

तत्त्वंपदार्थशोधनेन निर्विशेषब्रह्मणि निर्धारिते मोक्षसाधन तज्ज्ञानोपयोगिसगुणनिर्गुणबावयार्थनिर्धारणं क्रियत इति पादसङ्गतिः। हिरण्मयादिवाक्यं सगुणविषयम्, प्रतर्दनादिवाक्यं निर्गुणविषयमित्येवंरूप सगुणनिर्गुणवाक्यार्थ निर्धारणस्य प्रथमाध्यायेन कृतत्वेऽपि नानाशाखाम्नात गुणोपसंहारेण तन्निर्धारणं न कृतमिति तदर्थोऽयं पादः। तथा च गुणोपसंहार एव पादार्थः। तदुपयोगितया सर्वशाखासु विद्याया अभेदः प्रतिपाद्यते। विद्यानां भेदप्रतिपादनन्तु अभेदापवादेनेति न पादार्थभेदः। सूत्रे प्रत्ययपदं कर्मसाधनम्। सर्वबेदान्तैः प्रतीयमानानि विज्ञानान्यनूद्य एकवचनसामर्थ्यादवगतम् एकत्वं विधीयते। सगुणविद्यायाश्चित्तैकाग्र्यद्वारा निर्गुणज्ञांनसाधनत्वात् तद्वाक्यार्थचिन्ता क्रियते।

वेद्यभेदे तद्धर्मभेदे वा विद्याभेदचिन्ता स्यात् वेद्यस्य ब्रह्मण एकत्वात्। तस्य च एकरूपत्वाद्विद्याभेदपूर्वपक्षोऽयुक्तः। चोदनाऽभेदादभेद इति सिद्धान्तोऽप्ययुक्तः। ब्रह्मज्ञानस्याचोदनालक्षणकत्वात्। अतः पादारम्भोऽसङ्गत इति शङ्का। सगुणविद्यास्वेव भेदाभेदचिन्ता क्रियते। निर्गुणविद्यायांत्त्वैक्यं सिद्धमिति वाक्यार्थनिर्णयाय वाच्यार्थगुणोपसंहारमात्रं क्रियते इति समाधानम्।

पंचाग्नि प्राण, दहर, शाण्डिल्य, वैश्वानरादिविद्याः मिथोभिद्यन्ते भिन्ना इति नानाशब्दादिभेदादित्यत्र वक्ष्यते। ताः किं प्रतिशाखं भिद्यन्ते नवेति नामादिभेदाच्चोदनाद्यविशेषाच्च संशयः। नामभेदाद्रूपभेदात् धर्मभेदात् शब्दभेदाद्विद्याभेद इति। बृहदारण्यकस्थ शाण्डिल्यविद्या छान्दोग्यस्थ शाण्डिल्यविद्यातिरिक्ता। एतच्छाखाभिन्न शाखाविहितत्वात्, अन्यथा पुनरुक्तिः स्यादिति पूर्वपक्षः। (नाम रूप धर्मविशेषपुनरुक्ति

निन्दाशक्ति समाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे कर्मभेदः स्यात्। शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानि कर्मभेदकानि।) सर्ववेदान्त प्रत्ययं, सर्ववेदान्त (विहितानि) प्रमाणानि विज्ञानानि यान्येकस्मिन् वेदान्ते तान्येव वेदान्तरेष्वपीति। (ब्रहदारण्यकस्थ शाण्डिल्यविद्या छान्दोग्यस्थ शाण्डिल्यविद्याऽभिन्ना, एतदीयसंयोगभिन्न संयोगवत्त्वात्, रूपाभिन्न रूपवत्त्वात् एतदीयचोदनासदृशचोदनावत्त्वात् एतदीयाऽख्यंभिन्नाख्याकत्वात्।) बृहदारण्यकस्थप्राणविद्याछान्दोग्यस्थ प्राणविद्यातोऽभिंन्न तदीयफलाभिन्न फलकत्वात्, तदीयविषयाभिन्नविषयक त्वात्, तदीयाऽख्या भिन्नाख्याकत्वात्, तदीयचोदनासदृशचोदनाकत्वात्। चोदनाप्रयत्नः उपासनाप्रयत्नसाम्याद्विद्यैक्यम्। संयोगः फलसंयोगः। आख्याप्राणविद्येति तस्या ऐक्यात्।

अल्परूपभेदो न विद्यैक्यविरोधी॥

## भेदान्नेति चेन्नैकस्यामपि ३–३–२

बृहदारण्यकस्थ प्राणविद्या छान्दोग्यस्थ प्राणविद्यातः भिन्ना भिन्नविषयकत्वादिति सत्प्रतिपक्षनुमानमाशङ्क्य निराक्रियते।

पञ्चविषयाणामभिन्नत्वेन एकस्य भेदेऽपि विद्यैक्यं सम्भवतीति पूर्वपक्षहेतुः अप्रयोजकः। प्रत्यभिज्ञाविघटकरूपभेदाभावात्। पठ्यतेऽपि च षष्ठोऽग्निरिति सत्प्रतिपक्षहेतुः स्वरूपासिद्ध इत्युच्यते। षष्ठाग्नेर्नित्यानुवाद रूपत्वेन उपास्यत्वाभावेन च पूर्वहेतुः स्वरूपासिद्ध इति वाजसनेयिनस्तु इत्यनेनोच्यते। अथाप्युपासनार्थ इत्यनेन उपसंहारसम्भवात् षष्ठोऽग्निर्वर्तत एवेति स्वरूपासिद्धः सत्प्रतिपक्षहेतुरित्युच्यते। अनेन सूत्रेण रूपभेदस्य विद्याभेदकत्वं नास्तीति प्रतिपादितम्। धर्मविशेषोऽपि विद्याभेदको नेति सूत्रम् ———

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सावच्च तन्नियमः ३–३–३

शिरोव्रताख्यधर्मः स्वाध्यायस्याङ्गम्, न विद्यायाः। तथात्वेन = स्वाध्यायाङ्गत्वेन, समाचारे वेदव्रतोपदेशप्रतिपादके ग्रन्थे उक्तत्वात्। अधिकाराच्च, नैतदचीर्णवतोधीते इत्यत्रत्यादधिकृतविषयादेतच्छब्दात् चकारादधीत इत्यध्ययनशब्दाच्च। सववच्च तन्नियमः सवाः सप्त सौर्यादयः शतौदनान्ताः आथर्वणिकानां एकस्मिन्नेवाथर्वणिकेग्नौ क्रियन्ते न त्रैतायामिति यथा नियमः एवं मुण्डकाध्ययने एव शिरोव्रतनियम इति॥

## दर्शयति च ३–३–४

वेदोऽपि वेद्यैक्येन विद्यैक्यं दर्शयति – "सर्वे वेदा यत्पदमामनन्ति"। शाखान्तरे शाखान्तरोक्तपदार्थस्य परामर्शादपि विद्यैक्यम्। महद्भयं वज्रमुद्यतमिति, यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते।

इति सर्ववेदान्तप्रत्ययाधिकरणम्

## अधिकरणम् – २

## उपसंहारोर्थाभेदाद्विधिशेषवत्समाने च ३–३–५

विद्यैक्यस्य फलमनेनोच्यत इति फलफलिभावः सङ्गतिः। शाखाभेदे समानविद्यायामेकत्र श्रुता गुणा यथा श्रुतिव्यवस्थिता उत एकत्राश्रुता इतरत्रोपसंहर्तव्या इति सन्देहः। विद्यैक्येऽपि तत्र तत्रोक्तैरेव गुणैर्विद्योपकारसिद्धेरुपसंहारो नास्तीति पूर्वपक्षः। तथा च विद्यैक्यचिन्ता निष्फलेति पूर्वपक्षे फलम्। एतच्छाखास्थविद्या शाखान्तरोक्त तद्विद्यागुणवती तदभिन्नत्वात् तद्विद्यावत्। विधिशेषवत् – यथाग्निहोत्रस्य सर्वत्रैक्यात् तच्छेषाणामुपसंहारः तद्वदित्यर्थः॥

इति उपसंहाराधिकरणम्

# अधिकरणम् – ३

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ३–३–६

अपवादसंगतिः। बृहदारण्यकस्थोद्गीथब्राह्मणं, छान्दोग्यस्थोद्गीथाध्यायश्च विषयः। विद्ये भिन्ने अभिन्ने वेति संशयः। बृहदारण्यकस्थोद्गीथविद्या छान्दोग्यस्योद्गीथविद्याया अभिन्ना। तदीयवेद्याभिन्नवेद्यकत्वात्। एवं पूर्वपक्षे आशङ्का – अन्यथात्वं शब्दादिति चेत् इति – "त्वं न उद्गाय" "तमुद्गीथमुपासां चक्रिरे" इति एकत्र उद्गातृत्वे न, अन्यत्रचोद्गानत्वेनोच्यते इति प्राणस्योपास्यत्व प्रतिपादकाच्छब्दात् अन्ययात्वं विद्याभेद इति शङ्का — नाविशेषादिति समाधानम्। तदीयबहुतरव्यवहारसमान व्यवहारकत्वादैक्यमिति समाध्याशयः।

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ३–३–७

बृहदारण्यकस्थ उद्गीथविद्या छान्दोग्यस्थ उद्गीथविद्याभिन्ना तद्वेद्यविलक्षणवेद्यकत्वात्। पूर्वपक्षहेतुः स्वरूपासिद्धः छान्दोग्ये उद्गीथावयवस्योंकारस्य उपास्यत्वोक्तेः। बृहदारण्यके उद्गीथभक्तिं सकलामुपादाय तस्याः कर्तुः प्राणत्वेन निरूपणात् वेद्ययोर्भिन्नत्वात्। यद्विधेयं यद्विधेयसमानछायापन्नं तत्तदभिन्नमितिव्याप्तेः अभ्युदयेष्टौ पशुकामेष्टिभिन्नायां व्यभिचारः। परोवरीयस्त्वादिवत्। विवा एतं प्रजया पशुभिर्वर्धयति वर्धयत्यस्य भातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्येमध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुमिति। अभ्युदयवाक्यम्। पुरस्तात् हविनिरुप्तं पश्चाच्चन्द्रमा अभ्युदेति इत्यर्थः। अत्र दर्शादिभिन्नं कर्मान्तरमिति पूर्वपक्षे प्रकृतदेववियोगेन तस्मिन्नेव दर्शकर्मणि देवतान्तरसम्बन्धमात्रविधानं न कर्मान्तरमिति सिद्धान्तः। पशुकामस्य

तु यागान्तरविधानमिति सिद्धान्तितम् पर इति सकारान्तम् अथवा निपातनादोत्वम्। परश्चासौ वरश्च परोवरः। अतिशयेन परोवरः परोवरीयान्। यथा परोवरीयस्त्वगुणविशिष्टमुद्क्गीयोपासनमक्ष्यादित्यगत हिरण्य श्मश्रुत्वादिगुणाविशिष्टोद्गीथोपासनाद्भिन्नम्।

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ३–३–८

तदीयसंज्ञाया अभिन्नसंज्ञाकत्वादभेद इत्याशङ्का। तत्संज्ञाऽभिन्नसंज्ञा कत्वमप्रयोजकम्। प्रसिद्धभेदेषु परोवरीयस्त्वाद्युपासनेषु, अग्निहोत्रदर्शपूर्ण मासादिषु व्यभिचरितश्च।

तदुक्तम् = प्रकरणभेदादित्युक्तमित्यर्थः। अस्ति तु तदपि। प्रसिद्धभेदेष्वप्युपासनेषु तदपि संज्ञैक्यमप्यस्तीत्यर्थः॥

इत्यन्यथाधिकरणम्

## अधिकरणम् – ४

## व्याप्तेश्च समञ्जसम् ३–३–९

पूर्वं ''ओमित्येतदक्षरमुद्गीथमुपासीते''त्यत्र ओंकारोद्गीथयोः विशेष्य विशेषणभावं सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदः सिद्धान्तितः। स न युक्त इत्याक्षेपसङ्गत्या प्रवृत्तिः। सामानाधिकरण्यविशेषनिर्धारकाभावात्संशयः। सामानाधिकरण्यचतुष्टयस्वरूपं द्युभ्वाद्यधिकरणे लिखितम्। अनिश्चय इति पूर्वपक्षः। सिद्धान्तस्तु उद्गीथं, ओमित्येतदक्षरमिति पदद्वयं विशेषणविशेष्यभावसामानाधिकरण्यवत् अध्यासादिसामानाधिकरण्याभावत्रयवत्त्वे सति सामानाधिकरण्यवत्त्वात्। तत्र हेत्वसिद्धिः परिह्रियते।

अनिवर्तितायामेवान्यतरबुद्धाविति। नन्वालम्बनस्य नामादेर्नामत्वाकारबुद्धावनिवर्तितायां कथं तत्र विष्ण्वादि बुद्धिः स्यात्, विष्ण्वाद्यभेदग्रह

रूपस्याध्यासस्य भेदाग्रहरूपकारणाधीनत्वात् नामत्वादेर्भेदकस्य ज्ञानं भेदाग्रहविरोधि इति चेन्न। इहाध्यासपदेनाहार्यारोपो विवक्षितः। तत्र च न भेदकज्ञानं विरोधि। अनाहार्यभ्रम एव तस्य विरोधित्वात्।

पूर्वोक्तपदद्वयं अध्यासे सामानाधिकरण्यवन्न अश्रूयमाणफलकत्वात्, शक्त्या अर्थबोधकत्वात् अन्यथा फलकल्पनाप्रसङ्गः, उद्गीथपदस्य उद्गीथदृष्टिविषये लक्षणाकल्पना प्रसङ्गश्च स्यादिति।

एकत्वे सामानाधिकरण्यवन्न पदद्वयवत्त्वात्।

नाप्यपवादे सामानाधिकरण्यवत् अश्रूयमाणफलकत्वादेव। नन्वस्मिन्नपि पक्षे, 'इत्यादि भाष्यम्। शक्तिशक्यसाक्षात्सम्बन्ध, अन्यतरेणार्थबोधकत्वे सम्भवति विप्रकृष्टलक्षणाया अन्याय्यत्वमिति।

व्याप्तेः ओंकारस्य सकलवेदव्यापकत्वात् कस्योपास्यत्वमिति अपेक्षायाम् उद्गीथावयवत्वेन ओंकारो विशेष्यत इति। तथा चोद्गीथमित्योंकारस्य विशेषणमिति समञ्जसमिति सूत्रार्थः।

इति व्याप्त्यधिकरणम्

## अधिकरणम् – ५

## सर्वाभेदादन्यत्रेमे ३–३–१०

कौषीतकिस्थ प्राणविद्या छान्दोग्योक्तवसिष्ठत्वादिगुणयुक्ता नवेति एवंशब्दाच्छ्रैष्ठ्यगुणकप्राणप्रत्यभिज्ञानाच्च संशयः। उद्गीथत्वविशेषणादोंकारस्य सर्ववेदव्याप्तिव्यावृत्तिवत् प्रकृतगुणमात्रग्राहकैवंशब्दात् शाखान्तरगुणव्यावृत्तिरिति दृष्टान्तसङ्गत्या पूर्वपक्षः। कौषीतकिस्थ प्राणविद्या वसिष्ठत्वादिगुणरहिता कौषीतकिस्थगुणमात्रपरामर्शि एवं शब्दार्थगुणमात्रसहितत्वादिति पूर्वपक्षः। (''अथो य एवं विद्वान्प्राणे निःश्रेयसंविदित्वा'' इति) कौषीतकिस्थप्राणविद्या वसिष्ठत्वादिगुणयुक्ता वसिष्ठत्वादिगुणबोधक

छान्दोग्यस्थप्राणविद्याऽभिन्नत्वात्। एवं शब्दस्योपस्थितगुणपरामर्शकत्वात्। अन्यनिषेधेऽपि तात्पर्यं कल्पयितुमशक्यमिति। अभियोगविशेषादिति। अभियोगः तत्तच्छाखाध्येतृमुखाज्ज्ञानम्।

छन्दोग्याद्युक्ता इमे = वसिष्ठत्वादयो गुणाः, अन्यत्र = कौषीतकिष्वपि उपसंह्रियेरन्, सर्वेषां गुणानां शब्दतः गुण्यविनाभूतत्वेन वा प्रागुपस्थितत्वेन एकोपासनाङ्गत्वरूपादभेदात् = साधर्म्यात् इति सूत्रार्थः।

इति सर्वाभेदान्वयाधिकरणम्

## अधिकरणम् – ६

### आनन्दादयः प्रधानस्य ३–३–११

ऐतरेयशाखासम्बन्धिब्रह्मज्ञानं सकलशाखागतब्रह्मगुणकम् अथवा तच्छाखाप्रतिपाद्यगुणकमिति ब्रह्मणो ज्ञेयस्यैक्यान्निर्विशेषत्वाच्च संशयः। प्राणस्य सविशेषत्वाद्युक्तः शाखान्तरीयवसिष्ठत्वादिगुणोपसंहारः ब्रह्मणस्तु निर्विशेषत्वात् स्वशास्त्रागतधर्मैरेव प्रमितिसिद्धेः नानन्दाद्युपसंहार इति प्रत्युदाहरणसङ्गत्या पूर्वपक्षः। ऐतरेयशाखासम्बन्धिब्रह्मज्ञानं ऋगुपनिषदुक्त गुणकमेव शाखान्तरस्य गुणवत्त्वे प्रमाणाभावादिति पूर्वपक्षः। ऐतरेयशाखासम्बन्धिब्रह्मज्ञानं सकलोपनिषदुक्तगुणवत् सकलोपनिषत्प्रतिपाद्यब्रह्माभिन्न ब्रह्मकत्वात्।

आनन्दादयो गुणा उपसंहर्तव्याः। उपसंहारो नाम तद्वाचकानन्दादि पदानामेकवाक्यतया उच्चारणम्। आनन्दः सत्यं ज्ञानमनन्तं ब्रह्म शुद्धमद्वयमात्मेति। एवमुपसंहाराभावे आनन्दत्वादिभ्रमानिवृत्तेः आनन्दादि रूपतत्त्वं पदार्थैक्यरूपमहावाक्यार्थबोधानुपपत्तिः। ब्रह्मणोऽनानन्दत्व जडत्व बुद्धौ तत्प्राप्तावपुरुषार्थत्वबुद्धिः स्यात्। ब्रह्मणि मिथ्यात्वबुद्धौ तज्ज्ञाने मिथ्याविषयकत्वरूपाप्रामाण्यबुद्ध्या तस्या अज्ञाननिवर्तकता

न स्यात्। अतो नानन्दत्व जडत्वमिथ्यात्वबुद्धिनिवृत्तये अनानन्दादिव्यावृत्त्युपलक्षितब्रह्मलक्षणया तात्पर्यविषय शुद्धब्रह्मबोध आनन्दज्ञान सत्यादिपदैर्जन्यते। तादृशस्य ज्ञानस्यानानन्दत्वादिभ्रमनिवर्तकत्वम् अनुभवसिद्धम् तस्मात् प्रधानस्य महावाक्यार्थबोधस्योक्तरीत्या उपकारका इति अन्यत्राप्यानन्दत्वादयो गुणा उपसंहर्तव्याः।

यदि सकलोपनिषदुक्तगुणवत्स्यात् तदा तैत्तिरीयकस्य प्रियशिरस्त्वादिगुणकं स्यादित्याशङ्कायां समाधानम्—

## प्रियशिरस्त्वाद्यप्राप्तिरूप चयापचयौ हि भेदे ३–३–१२

ब्रह्मज्ञानप्रतिबन्धक भ्रान्तिनिवर्तक सर्वशाखास्थगुणकमिति साध्यम्। अतो न प्रियशिरस्त्वादिप्राप्तिः इत्येकं समाधानम्। प्रियशिरस्त्वादीनां ब्रह्मगुणत्वमेव नास्तीति द्वितीयं समाधानम्। द्रष्टव्यगुणा नेति तेषामनुपसंहार इति तृतीयम्। इदं सूत्रं कृत्वा चिन्तया प्रवृत्तम्। न्यायमात्रमिति॥ ज्ञेये ब्रह्मणि ब्राह्मधर्माणां प्रियशिरस्त्वादीनामनुपयोगादप्राप्तिरिति न्यायात्संयद्वामत्वादीनामप्राप्तिरिति सूत्रं व्याख्येयमित्यर्थः।

प्रियशिरस्त्वस्य, आदिपदात् संयद्वामत्वादेश्च अप्राप्तिः अनुपसंहारः। हि यस्मात् भेदघटितायां उपासनायां संयद्वामत्वादिरूपावुपचयापचयौ निर्गुणविद्यायां तदभावात्।

## इतरेत्वर्थसामान्यात् ३–३–१३

सत्यज्ञानानन्दात्मब्रह्मशब्दाः पञ्च सर्वत्रोपसंहर्तव्याः। अर्थस्य प्रतिपाद्यस्य ब्रह्मणः सामान्यात् एकत्वादित्यर्थः॥

इत्यानन्दाद्यधिकरणम्

# अधिकरणम् – ७

## आध्यानाय प्रयोजनाभावात् ३–३–१४

इन्द्रियेभ्यः परा ह्यर्था इत्यादिवाक्यं विषयः। किमिमानि वाक्यानि भिन्नानि उत आत्मपरमेकमेव वाक्यमिति सन्देहः। पूर्वत्र ब्रह्मस्वभावानामानन्दादीनामुपसंहार्याणां ब्रह्मज्ञानफलोपायत्वमुक्तम्। अत्र त्वब्रह्मस्वभावस्यार्थादिपरत्वस्यानुपसंहार्यस्य तदुपायत्वमुच्यत इत्येकफल कत्वं संगतिः। पूर्वपक्षे वाक्यभेदाद्विद्याभेदः। सिद्धान्ते तु एकवाक्यत्वाद्विद्यैक्यमिति फलभेदः। इन्द्रियेभ्यः इत्यादिवाक्यं इन्द्रियपरत्वादि बह्वर्थतात्पर्यकं बह्वर्थप्रतिपादकत्वादिति पूर्वपक्षः। पूर्वोक्तवाक्यं पुरुषपरत्वतात्पर्यकं सप्रयोजनवाक्यत्वात्। पुरुषमात्रतात्पर्यकपूर्वोत्तरमन्त्र घटितत्वात्। यदीदं पुरुषपरत्वतात्पर्यकं स्यात् व्यर्थेन्द्रियपरत्वप्रतिपादनकं स्यात् इति प्रतिकूलतर्कपराहतये आध्यानायेति। साक्षात्कारहेतुनिदिध्यास. नाय॥

## आत्मशब्दाच्च ३–३–१५

पुरुषः एतद्वाक्यतात्पर्यविषयीभूतः आत्मशब्दप्रतिपाद्यत्वात्, कठवल्लीस्थत्वे सति विवक्षितत्वाच्च॥ अर्थादयः एतद्वाक्यतात्पर्यविषयीभूता न अग्निभिन्नत्वे सति आत्मभिन्नत्वात्।

अर्थादीनामत्रोक्तिः आध्यानाय तत्तत्परत्वध्यानपूर्वकं पुरुषदर्शनायैव, स्वतः प्रयोजनाभावदिति सूत्रार्थः। अग्र्चया – अग्रं सूच्याद्यग्रं उपमानत्वेनार्हतीति अग्र्चा – अन्तर्गतवस्तुसंस्पर्शसमर्थयेत्यर्थः। सूक्ष्मया – कामक्रोधादिमलराहित्येन निशितया॥

इत्यानाध्यानाधिकरणम्

# अधिकरणम् – ८

## आत्मगृहीतिरितरवदुत्तरात् ३–३–१६

आत्मा वा इदमेक एवाग्र इत्यादिवाक्यं विषयः। आत्मशब्दस्य हिरण्यगर्भे ब्रह्मणि च प्रयोगदर्शनादात्मशब्दप्रतिपाद्यो हिरण्यगर्भः परमात्मा वेति संशयः। अत्र पूर्वपक्षे ऐतरेयकस्य हिरण्यगर्भोपास्तिपरत्वादानन्दादीना मनुपसंहारः सिद्धान्ते तदुपसंहार इति फलभेदः। पूर्वत्र वाक्यभेदप्रसंगादर्था दिपरत्वं नास्तीत्युक्तम्, तद्वदिहापि प्रजापतेरेतोदेवा इत्यादि प्रजापतिवाक्याद्भेदप्रसङ्गात् इदमपि वाक्यं न ब्रह्मपरमिति दृष्टान्तसंगत्या पूर्वपक्षः। आत्मा वेत्यत्र आत्मशब्दप्रतिपाद्यः हिरण्यगर्भः विशेषवदात्मसम्ब न्धिव्यवहारवत्त्वात् (लोकसृष्ट्यादिकम्) इति पूर्वपक्षः। आत्मशब्दप्रति पाद्यः परमात्मा ईक्षणपूर्वकस्रष्टृत्वात्, आत्मशब्दप्रतिपाद्यत्वात्। लोकाः – अम्भः = स्वर्गः, मरीचयः अन्तरिक्षलोकः। मरः मर्त्यलोकः आपः पाताललोकः।

ऐतरेयकवाक्यं हिरण्यगर्भपरं महाभूतसृष्ट्यविषयत्वे सति अग्निसृष्टि विषयत्वात् वाजसनेयिवाक्यवत्। (शास्त्रदर्पणे पूर्वपक्षः।) सिद्धान्ते हेतुविशेषणमसिद्धमिति।

## अन्वयादिति चेत्स्यादवधारणात् ३–३–१७

हिरण्यगर्भे वाक्यान्वयात् स एव ग्राह्य इति शंकायां स्यादवधारणादिति। आत्मशब्दप्रतिपाद्यः परमात्मा अवधारितैकत्वकत्वात्। लोकस्रष्टृत्वं ब्रह्मणोऽपि सम्भवतीति पूर्वपक्षिहेतुरप्रयोजकः। अथवा महाभूतानि सृष्ट्वा इति (लोकानसृजत) पूर्यते इति नासंगतिः।

आत्मा वेत्यादिवाक्यं परमात्मतात्पर्यकं आत्मतात्पर्यकोपक्रमोपसंहार वत्त्वात्। तथा च सिद्धान्ते महाभूतसर्गोपसंहारात्पादसंगतिः।

पूर्ववर्णके सर्वाभेदाधिकरणादिष्विव विद्यैक्यस्य, आनन्दाधिकरण इवानेकविषयवाक्योदाहरणपूर्वकगुणोपसंहारस्यचानिरूपणात् पादसंगतिर्नास्तीति वर्णकान्तरमारभ्यते – अपरा योजनेति ॥

छान्दोग्यस्य सद्विद्या बृहदारण्यकज्योतिर्ब्राह्मणस्थात्मविद्याभिन्ना न वेति संशयः। पूर्वत्र एकवाक्यत्वादर्थादिपरत्वं त्यक्त्वा विद्यैक्यमुक्तम्। इह तु सदात्मशब्दाभ्यां जात्यात्मवाचिभ्यामुपक्रमभेदाद्वाक्यभेदे सति विद्याभेद इति प्रत्युदाहरणसंगत्या पूर्वपक्षः। सद्विद्या आत्मविद्यातो भिन्ना आत्माम्नानविलक्षणाम्नानकत्वात्। पदानां जातौ शक्तिग्रहात् सच्छब्दोऽपि जातिवाचीति उपक्रमस्य निश्चितार्थत्वादसञ्जातविरोध्युपक्रमबलेन तत्त्वमसीति तादात्म्योपदेशः संपत्तिपरतया नेय इति पूर्वपक्षः। सद्विद्या आत्मविद्याया अभिन्ना तद्विषयाभिन्नविषयकत्वात्। सत्पदार्थस्यात्माभिन्नत्वेन उपदिश्यमानत्वान्नासिद्धिः।

सत्पदस्य सत्तापरत्वमुक्तमनुभाष्य निराकरोति – यदुक्तमिति। आकृत्यधिकरणस्य रूढपदविषयत्वात्। पाचकादिपदवत् सत्पदस्य असधातोःशतरिनिष्पन्नस्य सत्ताश्रयधर्मिपरत्वमित्यभिप्रायेण परिहारः। + आत्मशब्देनेव सच्छब्देन आत्मन एव गृहीतिः उत्तरात् = स आत्मा तत्त्वमसीतिवाक्यशेषात् इति सूत्रार्थः। अत्र ज्योतिर्ब्राह्मणवाक्योदाहरण प्रयोजनं ब्रह्मविद्याभरणे।

आत्माम्नान विलक्षणाम्नानकत्वादिति हेतुरप्रयोजकः। यः यदर्थाम्नान विलक्षणाम्नानः स तद्भिन्न इतिं व्याप्तेः पात्रमाहर, आहर पात्रमितिं वाक्यप्रतिपाद्ये व्यभिचारः। आम्नानवैषम्यमपीत्यादिनोच्यते। उत्तरादित्यस्य उत्तरात्तादात्म्योपदेशादित्यर्थः। अन्वयादिति चेत् – उपक्रमान्वयादुपक्रमे आत्मशब्दश्रवणाभावान्नात्मगृहीतिरिति शङ्का। अवधारणात्। सच्छब्दप्रतिपाद्यः आत्मा सर्वविज्ञानप्रयोजकज्ञानविषयत्वात्, अवधारिकैकत्वात्, जीवस्वरूपत्वेनावधार्यमाणत्वात्, सुषुप्तिकालीनजीवाप्ययाधारत्वात्। उपक्रमस्य सच्छब्देन सत्ताजातिमात्रं नोच्यते किन्तु तदाश्रयः।

आश्रयसामान्योक्तौ आश्रयः क इति आकांक्षायां वाक्यशेषात् आत्मेति निश्चीयते। सच्छब्दार्थश्चात्मैवेति नोपक्रमवैषम्यमपीति॥

इत्यात्मगृहीत्यधिकरणम्

## अधिकरणम् – ९

### कार्याख्यानादपूर्वम् ३–३–१८

छान्दोग्यश्रुतिः वाजसनेयिश्रुतिश्च विषयः। आचमनं विधेयमुतानग्नता चिन्तनमिति संशयः। पूर्वं सन्दिग्धसदुपक्रमस्य वाक्यशेषान्निर्णयवत् आचामन्तीति वर्तमानापदेशस्य विधित्वसन्देहे आचमेदिति वाक्यशेषाद्विधि त्वनिर्णय इति दृष्टान्तसंगत्या आचमनमेव विधेयमिति पूर्वपक्षः। प्रसिद्धानुवादेनाप्रसिद्धमेव विधीयत इति न्यायेन सिद्धान्तः। आचमनं न विधेयं स्मृतिप्राप्तस्यैव प्रत्यभिज्ञायमानत्वात्, किन्तु अनग्नताचिन्तनमेव। स्मृत्या शुद्ध्यर्थं कार्यत्वेन विहितसकलकर्मांगतया प्राप्ताचमनानुवादेन अपूर्वमनग्नताध्यानं विधीयत इति सूत्रार्थः।

नन्वियं श्रुतिरिति भाष्यम्। अशित्वाचामेदिति श्रुतिः स्मृतिप्राप्तानुवादिका न भवति। तत्स्मृतिमूलत्वादित्यर्थः। विषयनानात्वादिति। आचामेदिति श्रुतिः स्मृतिमूलं न भवति तत्स्मृतिभिन्नविषयकत्वात्। नचेयं श्रुतिरिति भाष्येण स्मृतिप्राप्तानुवादित्वादिति हेतोः स्वरूपासिद्धिरुच्यते। इदं वाक्यमनग्नताध्यानविधायकं तद्भिन्नाविधायकत्वे सति यत्किञ्चिदर्थ विधायकत्वात्। अपूर्ववाक्यत्वात् विशेष्यसिद्धिः। इदं वाक्यं वासस्त्वध्यानप्रतिपादकं ध्यानप्रतिपादकवाक्यसमभिव्याहृतत्वात्।

आचमनस्य कार्यमात्राङ्गत्वेन कार्यतया अभिधानात्, प्राणविद्यायमपि तत एव प्राप्तत्वात्, अपूर्वं = अप्राप्तं पूर्वोक्तराचमनीयापोभिः अनग्नताचिन्तनमेव विधीयते इति सूत्रार्थः।

इति कार्याख्यानाधिकरणम्

# अधिकरणम् – १०

## समान एवं चाभेदात् ३–३–१९

अग्निरहस्य बृहदारण्यकस्थशाण्डिल्यविद्ययोः भेदोऽभेदो वेति सन्देहः। पूर्वं प्राप्ताचमनानुवदेनानग्नताध्यानविधिरुक्तः। इह तु एकशाखायां विप्रकृष्टदेशस्थयोः वाक्ययोरेकस्यानुवादत्वमपरस्य विधित्व मित्यत्र नियामकाभावात् द्वयोरपि विद्याविधित्वमिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। अग्निरहस्यस्थ शाण्डिल्यविद्या बृहदारण्यकस्थ शाण्डिल्यविद्याया भिन्ना तत्प्रतिपादकवाक्यविशिष्टवाक्यप्रतिपाद्यत्वात्। वैशिष्ट्यञ्च स्वभिन्नत्व स्वघटितशाखाघटकत्वसम्बन्धद्वयेन इति पूर्वपक्षः। अग्निरहस्यस्थ शाण्डिल्यविद्या बृहदारण्यकस्थशाण्डिल्यविद्याया अभिन्ना तद्विषयाभिन्नविष यकत्वात्। यद्यभिन्ने स्यातां तदा व्यर्थपुनरुक्तिके स्यातामिति चेन्न। एकस्य पाठस्य विद्याविधानार्थत्वात् अपरस्य च गुणविधानार्थत्वादिति। यत्र बह्वो गुणाः श्रुताः तत्र प्रधानविधिरन्यत्र गुणविधिरिति। यत्र गुणभूयस्त्वं तत्र प्रधानं, यत्र गुणानामल्पत्वं तत्र न प्रधानमिति लौकिकन्यायः। तथाहि – यत्र रथगजतुरगपदातिछत्र चामरादीनि बहून्यङ्गानितंत्र राजा। यत्र कानिचिदेवाङ्गानि तत्रामात्यादय इत्यध्यवस्यन्ति। अग्निरहस्ये प्रधानविधिः। बृहदारण्यके सर्वेशानत्वादि गुणानां विधिरिति। यथाभिन्नासु शाखासु विद्यैक्यं गुणोपसंहारश्च एवं समाने समानायामपि शाखायां भवितुं युक्तम्, अभेदात् उपास्य मनोमयत्वादि गुणविशिष्टस्योभयत्राप्यभेदेन प्रत्यभिज्ञायमानत्वादिति सूत्रार्थः। चकारोऽप्यर्थकः समानेऽपि इत्यर्थः॥

इति समानाधिकरणम्

# अधिकरणम् – ११

## सम्बन्धादेवमन्यत्रापि ३–३–२०

"तस्योपनिषदहरित्यधिदैवतम्। तस्योपनिषदहमित्यध्यात्ममिति॥" इति नामद्वयं विषयः। एते उपनिषदौ सत्यस्य ब्रह्मणः स्थानभेदेन व्यवस्थया अनुचिन्तनीये उत द्वे अप्युभयत्र इति स्थानभेदात् सत्यब्रह्मैक्याच्च संशयः। यथा शाण्डिल्यविद्यायामित्यादिना दृष्टान्तसंगतिरुच्यते एवं पदार्थश्च। यथा विद्यैक्यादुपसंहार उक्तः एवमन्यत्राप्येकविद्यायामुपसंहारो भवितुमर्हतीत्यर्थः। अक्षिस्थानकसत्यविद्या अहरिति नामविशिष्टा तादृश नामविशिष्टादित्यस्थानकसत्यविद्याऽभिन्नत्वात् इति पूर्वपक्षः।

## न वा विशेषात् ३–३–२१

अहरिति नाम अक्षिस्थानकसत्यविद्यासंपृक्तं न भवति आदित्यस्थानावलम्बित्वात्। अक्षिस्थानविशिष्ट सत्यविद्या अहरिति नामरहिता आदित्यस्थानविशिष्टसत्यविद्याभिन्नत्वात्। विशिष्टयोर्विषययोः भेदात्।

## दर्शयति च ३–३–२२

यद्यहरिति नाम अक्षिस्थानविशिष्टसत्यविद्यासंपृक्तं स्यात् तर्हि व्यर्थादित्यस्थानावलम्बिधर्मप्रापकयन्नामतन्नामेत्यतिदेशकं स्यात्। तस्माद्व्यवस्थयैवानुचिन्तनीये इति सिद्धम्॥

इति संबन्धाधिकरणम्

# अधिकरणम् – १२

## संभृति द्युव्याप्त्यपि चातः ३–३–२३

पूर्वाधिकरणे स्थानविशेषादनुपसंहार उक्तः। तस्यातिदेशोऽयम्। "ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्मभूतानां प्रथमं तु जज्ञे तेनार्हति

ब्रह्मणास्पर्धितुं कः इति उत्तरार्धम्'' इत्यादिवाक्यं विषयः। ब्रह्मज्येष्ठं येषां तानि, वीर्या पराक्रमविशेषाः आकाशोत्पादनादयः ब्रह्मणा अविघ्नेन संभृतानि। तज्ज्येष्ठं ब्रह्म अग्रे देवादिजन्मनः प्रागेव दिवं स्वर्गमाततान। नित्यमेव विश्वव्यापकमित्यर्थः। वीर्यसंभृतिद्युव्याप्त्यादिकं शाण्डिल्यादिविद्यासूपसंहर्तव्यं नवेति संशयः। शाण्डिल्यविद्यादयः खिलोक्तवीर्य संभृत्यादि गुणयुक्ताः तदाश्रयब्रह्मसम्बन्धित्वात् इति पूर्वपक्षः। एकस्यां विद्यायां ये गुणा असाधरणास्ते यद्यन्यत्रापि श्रूयन्ते तत्र विद्यैक्यं गुणोपसंहारश्च यथा अग्निरहस्ये बृहदारण्यके च मनोमयत्वाद्यसाधारण गुणप्रत्यभिज्ञानाद्विद्यैक्यम्। न तु साधारणगुणमात्रश्रवणं विद्यैक्यगमकम्। अत इति सूत्रस्थपदेन असाधारणगुणप्रत्यभिज्ञाभावः परिगृह्यते। तस्मात् संभृत्यादिगुणविशिष्टविद्यान्तरविधिरिति सिद्धम्। पूर्वसूत्रान्नवेत्यनुवर्तते। संभृत्यादयः शाण्डिल्यादिविद्यासंपृक्ता न भवन्ति तद्विद्याद्यसम्बन्धि आधिदैविकस्थानवत्त्वात्। अत्र स्वरूपासिद्धिशङ्कायां शाण्डिल्यादिविद्याः संभृत्यादि गुणा संपृक्ताः तद्गुणकविद्याऽभेद प्रत्यभिज्ञानविषयत्वाभावात्।

इति संभृत्यधिकरणम्

## अधिकरणम् – १३

### पुरुषविद्यायामिव चेतरेषामनाम्नानात् ३–३–२४

पैंगिरहस्ये ''पुरुषो वावयज्ञ'' इति पुरुषविद्या श्रूयते। तत्र आशीर्मन्त्रप्रयोगादयो धर्माश्च श्रूयन्ते। तैत्तिरीयेऽपि ''तस्यैवं विदुषो यज्ञस्यात्मा'' इत्यादि। तत्र पैंगिरहस्योक्ताः पुरुषयज्ञस्य धर्माः तैत्तिरीयकेऽप्युपसंहर्तव्या न वेति संशयः। तैत्तिरीयकगतयोः विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यवैयधिकरण्यानवधारणात्संशयः। असाधारणगुणप्रत्यभिज्ञानाभावात् संभृत्यादौ विद्याभेद उक्तः, इह त्वसाधारणगुणप्रत्यभिज्ञानाद्विद्यैकत्वमिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। तैत्तिरीयस्थ पुरुषविद्या पैंगिरहस्यस्थ पुरुषविद्याया अभिन्ना तदीयनामाभिन्न

नामकत्वात्, तदभेदप्रत्यभिज्ञाविषयत्वाच्च। तैत्तिरीयस्थ पुरुषविद्या पैंगिरहस्यस्थ पुरुषविद्याभेदप्रत्यभिज्ञाविषयः तदभेदप्रत्यभिज्ञापक मरणावभृथादिमत्त्वात् इत्यनेन द्वितीयहेतुभिद्धिः।

ननु अन्यथात्वं शब्दादित्यत्र प्राणसंवादादिबहुसारूप्ये सत्यपि उद्गीथावयवोंकार एकत्र उपास्यः अन्यत्रोद्गाता इत्येतावता वैषम्येण विद्याभेद आश्रितः, इह तु मरणावभृथत्वादिकं किञ्चिदेव सादृश्यं, आत्मा यजमान इत्यादिकं बहु वैषम्यम् अतः कथमत्र विद्यैक्यशङ्का इति चेत्, अन्यथात्वं शब्दादित्यत्र उपसर्जनीभूतानां बहूनां साम्येऽपि प्रधानवैषम्याद्विद्याभेद उक्तः। इह तु पुरुषे उपास्यं यज्ञत्वरूपं यत्प्रधानं तदुभयत्रापि सममिति विद्यैक्यमाशङ्क्यते इति पूर्वपक्षः। गुणानां यत्र बहूनां वैषम्यं क्वचिदंश एव साम्यं तादृशस्थले भूयोनुग्रहन्यायात् अनेकगुणकृतप्रत्यभिज्ञाविच्छेदात् विद्याभेद एव स्वीकर्तव्य इति सिद्धान्ती परिहरति नोपसंहर्तव्या इत्यादिना।

सिद्धान्तस्तु पैंगिनां पुरुषविद्यायामिव इतरेषां तैत्तिरीयाणां अनाम्नानात्। तथा च अनेकधर्माणां भेदान्न प्रत्यभिज्ञेति द्वितीयहेतुः स्वरूपासिद्धः। तैत्तिरीयके विदुषोयज्ञस्येति वैयधिकरण्ये षष्ठ्यौ। यज्ञस्यात्मा यजमान इति यज्ञाद्भेदेन पुरुषस्य प्रतिपादनात्। तथा च तत्र पुरुषस्य यज्ञो वर्ण्यते। पैंगिरहस्ये तु पुरुषे यज्ञत्वसंपत्तिरिति च भेदः इति प्रधानवैषम्यमपि इति दर्शयति – न च तैत्तिरीयके इत्यादिना। अत्रापि नवेत्यनुषज्यते। छान्दोग्योक्तपुरुषविद्यायामिव इतरेषां पुरुषायुष सवनत्रयायुर्वृद्धिफलादीनां तैत्तिरीयकेऽनाम्नानात् विद्याभेदात् तत्रत्याशीः प्रार्थनादिकं नोपसंहर्तव्यम्।

इति पुरुषविद्याधिकरणम्

15

# अधिकरणम् – १४

## वेधाद्यर्थभेदात् ३–३–२५

"सर्वं प्रविध्य हृदयं प्रविध्ये"ति मन्त्रसमाम्नाय आथर्वणिकानामुपनिषदारम्भे। मन्त्रार्थः। हे देवते, शत्रोः सर्वं शरीरं हृदयञ्च प्रविध्य = भित्वा धमनीःसिराः शिरश्च प्रवृज्य नाशयित्वा त्रिधा छिन्नः कर्तव्य इति।

वाजपेय इव बृहस्पति सवस्येति। ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत इति वाक्येन ब्रह्मवर्चसफले विनियुक्तस्यापि बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयप्रकरणस्थवाक्येन वाजपेयोत्तराङ्गतया विनियोगवदविरोधः इत्यर्थः। मीमांसकानां बृहस्पतिसवाख्यं कर्मान्तरमेव वाजपेयाङ्गतया इति मतमिति तद्विरोधशङ्कासमाधानादिकं ब्रह्मविद्याभरणे विस्तरेण प्रतिपाद्य भगवत्पादानामभिप्रायः समर्थित इति तत एवावगन्तव्यम्।

किमेते मन्त्राः विद्यासूपसंह्रियेरन्नवेति संशयः। पूर्वत्रात्मविद्यासंन्निधौ श्रवणात्तैत्तिरीयशाखागतः पुरुषयज्ञो विद्यांगमिति स्वीकृत्यायुर्वृद्धिफलविद्याया भेद उक्तः। तर्हि प्रवर्ग्यादीनां वेधादिमन्त्राणाञ्च विद्यासंनिध्यविशेषाद्विद्यांगत्वमिति दृष्टान्तसंगत्या पूर्वपक्षः। मन्त्रादयः तत्तद्विद्याशेषभूताः फलवद्विद्यासीन्निहितत्वात् तैत्तिरीयकगतपुरुषयज्ञवत्। तैत्तिरीयस्थ ब्रह्मविद्या सर्वं प्रविध्येति मन्त्रयुक्ता तत्सम्बन्धितच्छाखास्थब्रह्मविद्याऽभिन्न विद्यात्वात्। ननु मन्त्राणां विद्यासमवेतार्थप्रकाशनसामर्थ्याभावान्न विद्याशेषत्वम्, एवं प्रवर्ग्यस्य क्रतुशेषत्वमेव न विद्याशेषत्वम्। "प्रवर्ग्यैश्चरन्ति" इति चेन्न। मन्त्राणां विद्यासमवेतहृदयनाड्यादिप्रकाशकत्वात् अन्यत्र विनियुक्तानां कर्मणां सन्निधिना विद्याशेषत्वेऽविरोधाच्च। यद्यपि विद्यायाः स्वाङ्गैरेव निराकांक्षत्वं, तथापि मन्त्रकर्माणि फलाकांक्षाणि सन्निहितविद्यान्वयमाकांक्षन्ते। न च साकांक्षाणामन्येषामनाकांक्षया विद्याया

सम्बन्ध इति तस्या अप्याकांक्षामुत्थापयन्ति। उत्थाप्य च तथैकवाक्यतामुपयन्ति। उपकार्योपकारकत्वं विना एकवाक्यत्वायोगात्। असमर्थस्य चोपकारकत्वानुपपत्तेः सामर्थ्यं कल्पयन्ति। न च समर्थानामपि श्रुतिमन्तरेण तादर्थ्यमिति विनियोजिकां श्रुतिं कल्पयित्वा विद्यांगतां प्रतिपद्यन्ते इति पूर्वपक्षः। मन्त्राः विद्यांगानि न भवन्ति विद्यासम्बन्ध रहितार्थप्रतिपादकत्वात्। ननु लिङ्गादिभिरन्यत्र विनियुक्तानां सन्निधिना विद्यास्वपि विनियोगोऽस्त्वविरोधादिति चेन्न सन्निधेदुर्बलत्वात् लिङ्गादिना विनियुक्तानां मन्त्राणां विद्यासु विनियोजकत्वाभावात् श्रुतिलिङ्गसूत्रात्॥

इति वेधाद्यधिकरणम्

## अधिकरणम् – १५

### हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दः स्तुत्युत्युपगानवत्तदुक्तम् ३–३–२६

ताण्डिनां श्रुतिः "अश्व इव रोमाणि विधूय पापं" इति। मन्त्रार्थः। यथा अश्वः जीर्णानि रोमाणि त्यक्त्वा निर्मलो भवति, तथा अहमपि पापं विधूय कृतात्मा निर्मलीकृतचित्तः सन् यथा वा राहुग्रस्तचन्द्रः राहुमुखात्प्रमुच्य स्पष्टो भवति, तथा शरीरं धूत्वा त्यक्त्वा देहाभिमानान्मुक्तः सन् अकृतं कूटस्थं ब्रह्मात्मकं लोकमभिप्रत्यक्त्वेन सम्भवामीति। विद्यास्तुत्यर्थत्वादिति = अन्यदीययोः पुण्यपापयोः अन्यत्र स्वरूपेण सञ्चारो न भवतीत्यभिप्रायः। उपायनशब्दे सुकृतादिस्वरूपोपायनं नाभिप्रेतम्। फलत उपायनमिष्टम्। फलोपसंहारं विना अर्थोपसंहार इष्टश्चेत् उपायनशेषत्वादि त्येवस्यात् शब्दशेषत्वादित्यनेन अर्थोपसंहारो नेष्ट इति ज्ञापयति इत्याह – उपायनशब्दशेषत्वादितीति। तस्मादिति। स्तुत्युपसंहारः = स्तुत्युपयोगिनो गुणस्य सुकृतदुष्कृतयोरन्यत्र फलसञ्चारस्य उपसंहारः। तत्प्रकारस्यानुपास्यस्यापि प्रदर्शनार्थं सूत्रम्॥ तथा विद्वान्नामरूपाद्विमुक्तः इत्याथर्वणिकानां श्रुतिः। हानप्रतिपादक

शब्दमात्रयुक्तं वाक्यं उपायनप्रतिपादकशब्दयुक्तं भवति नवेति संशयः। यथा मन्त्रकर्मणां विद्यासन्निधौ श्रुतानामपि अनावश्यकत्वादनुपसंहारः तथा पैरुपादानं विनापि हानसम्भवेनोपादानस्यानावश्यकत्वेनानुपसंहार इति दृष्टान्तसंगत्या पूर्वपक्षः।

हानप्रतिपादक शब्दयुक्तं वाक्यं उपायन शब्दयुक्तं भवति, उपायन शब्दशेषिहानशब्दघटितत्वात्। विद्याभेदे गुणानुपसंहार इति व्यवस्थानुष्ठान विषया न स्तुतिविषया इत्यभिप्रायः। शाखान्तरस्थोऽपि विशेषः शाखान्तरे गृह्यत इत्यत्र दृष्टान्तमाह – कुशेति। उद्गातॄणां स्तोत्रगणनार्थाः शलाकाः कुशाः। ताः का इति ज्ञानाय शाखान्तरीयं औदुम्बराः कुशा इति वचनमाश्रीयते। एवं देवासुरच्छन्दसां पौर्वापर्यप्रसङ्गे (छन्दोभिः स्तुवते) देवच्छन्दांसि पूर्वाणीति पैंगिवाक्यान्निर्णयः। ऋत्विज उपगायन्तीत्यस्य नाध्वर्युरुपगायतीति श्रुत्यन्तराद्विशेषनिर्णयः। तदुक्तमिति व्याचष्टे – प्रसिद्धा चेत्यादिना।

वर्णकान्तरं "अथवा एतास्वेवेति" हानमित्यनेन किं पुण्यपापयोर्विधूननं हानं उत चालनमिति संशये चालनमेव विधूननमिति पूर्वपक्षः। विधूननं हानिबोधकं उपायनशब्दसमभिव्याहृतत्वादिति सिद्धान्तः।

अत्र सुकृतदुष्कृतयोर्हानोपायनयोः स्वरूपतो न सम्भवः आत्मगुणत्वादन्तःकरणपरिणामरूपत्वाद्वा किन्तु सुहृदुर्हृदोः फलारम्भ एव विद्वत्स्वत्वनिवृत्तिरूपहानपूर्वकं भवति। तथा च फलाजनकत्वमेव हानिः।

इति हान्यधिकरणम्

## अधिकरणम् – १६

### सांपराये तर्तव्याभावात्तथा ह्यन्ये ३–३–२७

पूर्वं विद्यायाः कर्महानिहेतुत्वं सिद्धवत्कृत्य केवलहानश्रवणे उपायनोपसंहारउक्तः। संप्रति विद्यायाः कर्महानिहेतुत्वं नास्तीति आक्षेपसंगतिः। किं विरजानदीतरणानन्तरं कर्महानिः उत देहत्यागकाल इति संशयः। विरजाख्यनदीमत्येति तत्सुकृतदुष्कृते विधूनुते तत् तेन विरजानदीतरणेन सुकृतादिनाश इत्यर्थस्य लाभात् विरजानदीतरणानन्तरं अर्धपथ एव सुकृतादिहानिरिति पूर्वपक्षः। सुकृतादिहानं संपरायकालीनं संपरायकालेतरकालीनत्वाभाववत्त्वे सति कालवृत्तित्वात् सुकृतादिहानं संपरायकालेतरविरजानदीतरणकालीनत्वाभाववत् तन्मध्यकाल विद्वत्प्राप्य प्रयोजनरहितत्वात्। (तर्तव्याभावात् प्राप्तव्यफलाभावादित्यर्थः।) सुकृत दुष्कृते देहापसर्पणकालीनहानवती तत्कालीन फलाभिमुखविरुद्धत्वात्। तथा ह्यन्ये। कौषीतकिवाक्यं देहापसर्पणकालीन सुकृतादिनाशप्रतिपादकं तादृशार्थ प्रतिपादक ताण्डिवाक्यसमानार्थत्वात्। सिद्धान्ते तत् इत्यस्य प्रकृतविद्या अर्थः।

### छन्दत उभयाविरोधात् ३–३–२८

मृतस्य छन्दतः स्वेच्छया विद्यानुष्ठानानुपपत्तेरुभयोः विद्या कर्मक्षययोः श्रुतो हेतुहेतुमद्भावो विरुध्यते। किञ्च सति पुष्कलहेतौ न कार्यविलम्ब इति न्यायोपेतताण्डिश्रुतिविरोधश्च स्यात्। यदि सुकृतदुष्कृते विरजानदीतरणानन्तरकालीने स्यातां तर्हि हानरहिते स्यातामित्यनुकूलतर्को ऽनेनोच्यते। उभयाविरोधादित्यस्य निमित्तनैमित्तकयोरिति ताण्डिशाट्याय नश्रुत्योरिति वार्थ इत्याह – एवं निमित्तेति।

इति सांपरायाधिकरणम्

## अधिकरणम् – १७

### गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ३–३–२९

यथा हानसन्निधौ क्वचित् श्रूयमाणमुपायनं सर्वत्रोपसंह्रियते तथा हानसन्निधौ क्वचित् श्रूयमाणो देवयानमार्गः सर्वत्रोपसंहर्तव्य इति दृष्टान्तसंगत्या पूर्वपक्षः। यत्र कर्महानसन्निधौ देवयानः पन्था न श्रुतः तत्रोपसंहर्तव्यो नवेति संशयः। तथा विद्वान् पुण्यपापे विधूयेत्यादिवाक्यं अर्चिरादिमार्गप्रतिपादकशब्दयुक्तं हानशब्दयुक्तत्वात् कौषीतकिवाक्यगत स आगच्छति विरजानदीं इत्यादिवाक्यवत् इति पूर्वपक्षः। गत्यपेक्षिब्रह्मलोकप्राप्तिफलप्रतिपादकत्वमुपाधिः। कौषीतकिवाक्यं देवयानमार्गप्रतिपादशब्दयुक्तं न, ब्रह्मविद्याजन्य गत्यनपेक्षमोक्षप्रतिपादकत्वात्।

### उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ३–३–३०

सा गतिः लक्षणं करणं यस्य सोऽर्थः सगुणविद्याफलभूत पर्यङ्कस्थ ब्रह्मप्राप्तिरूपः तस्य उपलब्धेः गतेरुभयथाभाव उपपन्नः। अतः सगुणविद्यायां मार्गोऽर्थवान् न निर्गुणविद्यायाम् लोकवत्। यथा लोके ग्रामप्राप्तौ मार्गोऽपेक्ष्यते न आरोग्यप्राप्तौ तद्वत्। निर्गुणविद्या देवयानमार्गोपसंहारयुक्ता ब्रह्मविद्यात्वात् कौषीतकिविद्यावदित्यनुमानादत्राशङ्का। बादर्यधिकरणे तु ब्रह्मशब्दमुख्यत्वादिभिरित्यपौनरुक्त्यम्। निरञ्जनः परमं साम्यमुपैति = निरञ्जनः अविद्यादिदोषविनिर्मुक्तः। तद्गुणसारत्वा- दित्यत्र उपाधिविशिष्टस्यैव जीवस्य गत्यादिकमिति स्थापितत्वादुपाधि रहितस्य गमनादिकं नोपपद्यते। साम्यमित्यत्र समशब्दः समकालावित्यादाविव ऐक्यार्थकः। ऐक्यञ्च जीवस्य ब्रह्मणा सुषुप्तावपीति तद्व्यावृत्त्यर्थं परममिति विशेषणम्। सुषुप्तावविद्यानुवृत्त्या न परमैक्यम्। ब्रह्म वेद ब्रह्मैव भवतीत्याद्यपि अनुकूलम्॥



इति गतेरर्थवत्त्वाधिकरणम्

# अधिकरणम् – १८

## अनियमः सर्वासु न विरोधः शब्दानुमानाभ्याम् ३–३–३१

अर्चिरादिमार्ग एव विषयः। विद्याविशेषप्रकरणात्, "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति सामान्यवचनाच्च। येषु मार्गः श्रुतः तेष्वेव मार्गस्य नियम उत सर्वेषामिति संशयः। सगुणनिर्गुणविद्यासु भावाभावव्यवस्थावत् सगुणास्वपि व्यवस्थेति दृष्टान्तेन पूर्वपक्षे सिद्धान्ते व्यवस्थापवादात्सङ्गतिः। शाण्डिल्य, मधु, षोडशकला, वैश्वानरविद्याः अर्चिरादिमार्गयुक्ता न तद्वत्त्वेनाऽश्रूयमाणत्वात्। यद्यश्रूयमाणत्वेऽपि तादृशमार्गयुक्ताः स्युः तदा सकृन्मात्रपठितार्चिरादिमार्गकाः स्युरित्यनु कूलंतर्कः। सकृत्पाठेन सर्वासु विद्यासूपसंहारसम्भवादिति पूर्वपक्षः। शाण्डिल्यादिविद्याः अर्चिरादिमार्गयुक्ताः। तदपेक्षिफलजनकत्वात्। अर्चिरादिमार्गः सर्वसगुणविद्यासम्बन्धी (तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते", "शुक्लकृष्णे गतीह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्तते पुनः" ॥) इति श्रुति स्मृतिभ्यां तत्त्वेन ज्ञायमानत्वात्। द्विपाठस्य प्रयोजनमुपासनायां (यत्र पाठः तत्र) ध्यानमिति। मार्गप्राप्तेरपि फलकोटिनिविष्टतया तत्क्रतुन्यायेन सर्वविद्यास्वनु चिन्तनस्य सूत्रकारेण तच्छेषगत्यनुस्मृतियोगाच्च दर्शयिष्यमाणतया पुनराम्नानस्य "यदु चैवास्मिञ्छव्यं कुर्वन्ति यदुच न तेर्चिषमेवाभिसम्भवन्ति " इति वचनानुसारेण उपकोसलविद्यानिष्ठस्य शव्यकर्मनिरपेक्षताबोधनार्थं सामान्यवचनप्राप्तस्य पुनरनुवादः। पञ्चाग्नि विद्याया ब्रह्मविषयकत्वाभावात् देवयानमार्गः न प्राप्नोति। अतस्तत्राम्नानमावश्यकम्। भाष्यन्तु पुनराम्नानं न परिसंख्यार्थं भवति इत्येतावन्मात्रं प्रदर्शयति। तच्च यथासम्भवं प्रयोजनानन्तरं वक्तव्यमित्यस्योपलक्षणम्। इति पूर्वपक्ष्यनुकूलतर्कस्यानव काशः इति सिद्धान्तः। प्रतीकभिन्नासु सर्वासु उपासनासु अर्चिरादिमार्ग इति सिद्धम्॥



इति अनियमाधिकरणम्

# अधिकरणम् – १९

## यावदधिकारमवस्थितिराधिकारिकाणाम् ३–३–३२

निर्गुणविद्यायां गतिर्व्यर्था मुक्तिफलत्वात्, सगुणविद्यासु सर्वास्वर्थवती, ब्रह्मलोकफलकत्वादिति व्यवस्था कृता। सा न युक्ता। तत्त्वज्ञानिनामपि इतिहासादौ पुनर्जन्मदर्शनेन ज्ञानस्य मुक्तिफलत्वाभावादित्याक्षेपात्सङ्गतिः। ब्रह्मविदः वर्तमानप्रारब्धभिन्न कर्मान्तराधीनदेहवन्तो न वेति संशयः। पूर्वपक्षे ज्ञानान्मुक्तिरिति श्रुतीनां ज्ञानस्तुतिमात्रत्वेन ज्ञानस्य मुक्तिफलत्वाभावे सति ब्रह्मलोकफलत्वाविशेषादर्चिरादिमार्गोपसंहारः फलम्। सिद्धान्ते तूक्तव्यवस्था सिद्धिः। ब्रह्मविदः कर्मजन्यदेहवन्तः ब्रह्मवित्त्वात् अपान्तरतमः प्रभृतिवत्। तथा च ज्ञानस्य मुक्तिहेतुत्वं नास्तीति पूर्वपक्षः। अनेक देहादानन्यायेनेति। मायाविनः युगपदनेकदेहादानदृष्टान्तेनेत्यर्थः। वसिष्ठादयः कर्मान्तराधीनजन्मरहिताः अजातिस्मरत्वे सति अलुप्तस्मृतित्वात्। पूर्वदेह नाम प्रत्यभिज्ञानहीनाः, परतन्त्राः साभिमांना जातिस्मराः। आधिकारिकास्तु पूर्वनामानः स्वतन्त्रा निरभिमानाः॥

तथा च ते पूर्वजन्महेतुप्रारब्धाधीन जन्मवन्तः। ज्ञानिनां जन्मान्तरस्य पूर्वजन्महेतुप्रारब्धाधीनतायामलुप्तस्मृतित्वं हेतुः योह्यजाति स्मरत्वे सति कर्मान्तराधीनजन्मान्तरवान् स लुप्तस्मृतिरिति व्याप्तेः ज्ञानिषु व्यापकाभावाद्विशिष्टव्याप्याभावसिद्धिः। तथा च अपान्तरतमः प्रभृतिषु पूर्वपक्षिसाध्यवैकल्यम्। देहान्तरारम्भकप्रारब्धवत्त्वमुपाधिश्च। तस्मान्निर्गुण विद्यायां मार्गानुपसंहार इति सिद्धम्।

इति यावदधिकाराधिकरणम्

# अधिकरणम् – २०

## अक्षरधियांत्ववरोधः

## सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ३–३–३३

ब्रह्मप्रमापका निषेधशब्दाविषयः। तेषु यत्र यावन्तः श्रुतास्तत्र तावतामशेषद्वैतनिषेधकत्व सम्भवासम्भवाभ्यां संशयः। सर्वे प्रतिषेधाः सर्वत्रोपसंहर्तव्या नवेति संशयः। आधिकारिकपुरुषाणामारब्धकर्मवशादेव देहान्तरारम्भसिद्धेः न संचितकर्मान्तरस्य देहान्तरारम्भकत्वमित्युक्तम्। तथेहापि तत्तद्वाक्योक्तैरेव निषेधैरुपलक्षणतया सर्वद्वैतनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां ब्रह्मधीहेतुत्वमिति दृष्टान्तसंगत्या पूर्वपक्षः। अस्थूलमित्यादिबृहदारण्यकस्थब्रह्मज्ञानं मुण्डकस्थादृश्यत्वादिगुणकं न तद्गुणवत्त्वेनानुक्तत्वात्। दृश्यत्वादिनिषेधाः भिन्नशाखास्थ विद्यासम्बद्धा न ब्रह्मस्वरूपत्वाभावात् इति पूर्वपक्ष;। सिद्धान्तस्तु बृहदारण्यकस्थब्रह्मज्ञानं मुण्डकस्थादृश्यत्वादिगुणकं तदीय ब्रह्माभिन्न ब्रह्मकत्वात्, तज्जन्योपकारापेक्षितत्वाच्च। यद्यपि सत्यादिपदैः ब्रह्मस्वरूपमवगतं तथापि सृष्ट्यादिवाक्य पर्यालोचनया तत्सविशेषं प्रसक्तम्। अतः सप्रपञ्चत्वभ्रमनिराकरणाय निषेधवाक्यान्यपेक्षितान्येव। अक्षरे धर्मिणि धियः निषेधधियः तासां (तज्जनकशब्दानामिति यावत्) अवरोधः उपसंहारः कर्तव्यः सामान्यात् द्वैतनिरासेन ब्रह्मप्रमितेः जननस्य समानत्वादिति प्रथमहेतुः तद्भावः तस्य ब्रह्मणः प्रतिपाद्यस्य सर्वत्र एकत्वेन प्रत्यभिज्ञायमानत्वम्। औपसदवत् यथा सामवेदे श्रुतानां औपसदानामध्वर्युकर्तुक पुरोडाशशेषाणां मन्त्राणां अध्वर्युणा सम्बन्धः तद्वत्।

सूत्रे विशिष्य अक्षरब्राह्मणोक्तानां प्रतिषेधबुद्धीनां सर्वत्रोपसंहारकथनं तत्त्वंपदार्थयोरैक्यप्रतीतिविरोधिनो ये भ्रमाः प्रसक्ताः तेषां सर्वेषां तत्रोपलभ्यमानत्वमभिप्रेत्य। तथा हि – तत्पदार्थे अविद्या तत्कार्य पृथिव्याद्यध्यासः, त्वंपदार्थे शरीरेन्द्रियाद्याध्यासः प्रसक्तः। तस्य सर्वस्याप्यपाकरणमुपलभ्यते। अवायुअनाकाशमरसमगन्धमतेजस्कमिति

पृथिव्याद्यध्यासापाकरणम्। अतम इति अविद्याध्यासापाकरणम्। त्वं पदार्थे अस्थूलमित्यादिपदैः शरीराध्यासापाकरणं अचक्षुष्कमित्यादिपदैरिन्द्रियाध्यासापाकरणम्। न तदश्नाति किञ्चनेति भोक्तृत्वाध्यासनिरासः।

गुणमुख्यव्यतिक्रमे इति गुणमुख्ययोः व्यतिक्रमे विरोधे सति मुख्येन बलीयसा मन्त्रात्मकवेदस्य अध्वर्युणा संयोगतः – उत्पत्तेः तदर्थत्वात् विनियोगार्थत्वादिति सूत्रार्थः। सामवेदोत्पन्नानामग्नेर्वैरित्यादि मन्त्राणां अध्वर्युरेव कर्ता भवति। विनियोगविधेः प्रधानत्वात्। विनियोगस्य च यजुर्वेदसिद्धत्वादिति संक्षेपेणार्थः॥

इति अक्षराध्यधिकरणम्

## अधिकरणम् – २१

### इयदामननात् ३–३–३४

"ऋतं पिबन्तौ सुकृतस्य लोके", "द्वासुपर्णा सयुजा" इति मन्त्रद्वयं विषयः। किमनयोर्मन्त्रयोः विद्याभेद उताभेद इति संशयः। ऋतपानवाक्ये अक्षरं ब्रह्म यत्परमिति गुणाः श्रुताः द्वासुपर्णवाक्येऽनशनत्वादयः, तेषां मिथो नोपसंहार इति पूर्वपक्षफलम्। सिद्धान्ते त्वसंसारिब्रह्मस्वरूपवाक्यार्थैक्यादुपसंहार इति। अस्तु वेद्यैक्यादक्षरधियामुपसंहारः इह तु वेद्यभेदान्नोपसंहार इति प्रत्युदाहरणसंगत्या पूर्वपक्षः। ऋतं पिबन्ताविति मन्त्रप्रतिपाद्यविद्या द्वासुपर्णौतिमन्त्रप्रतिपाद्यविद्या भिन्ना, तद्विषयभिन्नविषयकत्वादिति पूर्वपक्षः। सिद्धान्ते पूर्वपक्षहेतुः स्वरूपासिद्ध इति। ऋतं पिबन्ताविति मन्त्रप्रतिपाद्यविद्या द्वासुपर्णौति मन्त्रप्रतिपाद्यविद्याया अभिन्ना तदभिन्नवेद्यकत्वात्। इयतोः द्वित्वरूपेयत्तापरिच्छिन्नयोरामननात्। ऋतं पिबन्ताविति मन्त्रवेद्यं द्वासुपर्णौति मन्त्रवेद्याभिन्नं बाधकाभावविशिष्ट तद्वेद्याभिधानसमानाभिधानकत्वात् (परिमले)। समाख्या प्रमाणवशादित्यर्थः।

ननु गुहां प्रविष्टावित्यधिकरणे ऋतं पिबन्तौ इत्यस्य जीवेश्वरोभयपरत्वं स्थापयित्वा पिबन्ताविति छत्रिन्यायेन व्याख्येयमित्युक्तम्। तथा च कथं द्वासुपर्णेत्यनेन मन्त्रेण भिन्नार्थकतेति चेत् उच्यते। गुहां प्रविष्टावित्यत्र पूर्वपक्षेऽपि पिबच्छब्दस्य मुख्यत्वाभावात् प्रकरणाद्यनुरोधेन परमेश्वरद्वितीय जीवपरता उक्ता। अत्र तु पिबन्तावित्यस्य मुख्यतया जीवद्वयप्रतिपादकता मन्त्रस्यास्तु। तथा च उभयोभिन्नार्थकतेति। न च ब्रह्मप्रकरणाननुगुण्यम्। पदसमभिव्याहाररूपस्य वाक्यस्य प्रकरणात्प्रबलतया तदनुसारेण मन्त्रस्य प्रकरणादुत्कर्षोपपत्तेः इति। सिद्धान्ताशयस्तु प्रकरणस्य वाक्याद्दुर्बलत्वेऽपि प्रकृते प्रकरणस्य दौर्बल्यं वक्तुं न शक्यते। उपक्रमोपसंहारावगतं ब्रह्मविषयं महाप्रकरणं मन्त्रेप्यनुवर्तते। तच्च श्रुत्यादिभ्यो बलीय इति प्रतर्दनाधिकरणे व्यवस्थापितम्। अतस्तदनुसारेण पिबन्ताविति छत्रिन्यायेनैव व्याख्येयम्। न च प्रतर्दनाधिकरणेन गतार्थमिति वाच्यम्। ऋतं पिबन्तावित्यादिषु त्रिषु मन्त्रेषु द्वित्वाविशिष्टवस्तुप्रतिपादनमस्ति। तथा च तुल्यार्थाभिधायकत्वमेतेषां सिद्धम्। तथा च असति बाधके तुल्यार्थाभिधायकत्वमपि विद्यैक्यावबोधकमिति न्यायान्तरमत्रव्युत्पाद्यते॥

इति इयदधिकरणम्।

# अधिकरणम् – २२

## अन्तराभूत ग्रामवत्स्वात्मनः ३–३–३५

बृहदारण्यके उषस्त प्रश्नोपक्रमं, कहोलप्रश्नोपक्रमं च ब्राह्मणद्वयम्। तत्र ब्राह्मणद्वये प्रश्नाद्यभ्यासात् सर्वान्तरत्वप्रत्यभिज्ञानाच्च विद्यैक्यमुत नानात्वमिति संशयः। पूर्वत्र मन्त्रयोर्वेद्यैक्यादस्तु विद्यैकत्वम्, इह तु वेद्यैकक्येऽपि अभ्यासाद्विद्याभेदः यजत्यभ्यासात् प्रयाजभेदवदिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। य आत्मा सर्वान्तर इति कहोलब्राह्मणप्रतिपादितविद्या तादृशोषस्त ब्राह्मणप्रतिपादितविद्याभिन्ना तादृशवाक्यविशिष्ट वाक्य प्रतिपाद्यत्वात्। वैशिष्ट्यञ्च स्वभिन्न स्वघटितशाखाघटकत्व

सम्बन्धद्वयेन इति पूर्वपक्षः। सूत्रे अन्तरा इत्यस्य अन्तर इत्यर्थः। आमननादिति पदानुषङ्गः। ब्राह्मणद्वयेऽपि स्वात्मनः सर्वान्तरत्वामननात् विद्यैक्यं विज्ञेयम्।

कहोलविद्या उषस्तविद्यातोऽभिन्ना तद्वेद्याभिन्नवेद्यकत्वात्। कहोलवाक्यवेद्यं उषस्तवाक्य वेद्याभिन्नं तद्वेद्यनिष्ठसर्वान्तरत्वेनाम्नायमानत्वात्। यद्यभिन्नं न स्यात् तदा तयोरेकस्य आत्मनः भूत ग्रामवदौपचारिकं सर्वान्तरत्वं स्यात्। अथवेत्यादि – एतद्ब्राह्मणद्वयप्रतिपाद्यः आत्मा सर्वान्तरत्वेनोक्तत्वात् एको देव इति मन्त्र प्रतिपाद्यवत्।

उषस्तकहोलप्रश्नयोस्तुल्यार्थयोरभ्यासाद्विद्याभेद इति पूर्वपक्षः। सिद्धान्ते उभयोस्तुल्यार्थकत्वमेवोच्यते। कथमनेन पूर्वपक्षपरिहार इति शङ्का जायते। अत्रोच्यते – उषस्तप्रश्नः जीवविषयकः कहोलप्रश्नः परमात्मविषयक इत्येकः पूर्वपक्षः। अयमुभयोः परमात्मविषयकतया तुल्यतानिरूपणेन आद्यसूत्रेण निराक्रियते। तर्हि अभ्यासाद्विद्याभेद इति द्वितीयः पूर्वपक्षः स च द्वितीयसूत्रेण परिह्रियते। विस्तरस्त्वन्यत्र द्रष्टव्यः॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ३–३–३६

ननु विद्यैक्याङ्गीकारे अभ्यासानुपपत्तिरिति चेन्न। स एवाभ्यासो विद्याभेदकः यो निरर्थकः। इह तूषस्तब्राह्मणोक्तात्मन एवाशनायाद्यतीतत्व रूपविशेषकथनार्थत्वादभ्यासोऽन्यथासिद्ध इति पूर्वपक्षहेतुरप्रयोजक इत्यर्थः। अन्यथा, विद्याभेदानङ्गीकारे आम्नानभेदस्य, अभ्यासस्य अनुपपत्तिरिति चेन्न, उपदेशान्तरवत् तत्त्वमसीत्युपदेशवत् अभ्यासस्योपपत्तेः। उपक्रमोपसंहारैक्याद्विद्यैक्यावगतेः॥

इति अन्तराधिकरणम्।

## अधिकरणम् – २३

### व्यतिहारो विशिषन्ती हीतरवत् ३–३–३७

तन्निष्ठविशेष्यताप्रकारतानिरूपित (तन्निष्ठ प्रकारता विशेष्यता प्रयोजकवाक्यद्वयं व्यतिहारः। तस्य श्रुतत्वात् उत्कृष्टदृष्टिर्निकृष्टे कृता फलवतीतिन्यायाच्च किं व्यतिहारेणोभयरूपा मतिः कर्तव्या उतैकरूपेति संशयः। तद्योहं सोसौ योसौ सोहमिति वाक्ये। पूर्वं यथाभ्यासस्यादरार्थत्वेन विद्यैक्यमुक्तम्, एवं व्यतिहारोपदेशस्याप्यादरार्थत्वान्मतैरैकरूप्यमस्त्विति दृष्टान्तसंगत्या पूर्वपक्षः। त्वं वा अहमस्मि देवते इति विद्यानुष्ठानं अहं वै त्वमसीति विद्यानुष्ठानभिन्नं न तद्वेद्याभिन्न वेद्यकत्वात्। ईश्वरोद्देश्यक जीवविधेयकश्चिन्तनं न कर्तव्यम्। यदि जीवनिष्ठविधेयतानिरूपितोद्देश्यतावा नीश्वरः स्यात् तर्हि ईश्वरस्य जीवात्मत्वं स्यादिति पूर्वपक्षः। पूर्वोक्त वाक्यद्वयं जीवनिष्ठविशेष्यताप्रकारतानिरूपितेश्वरनिष्ठप्रकारता विशेष्यताशालिध्यानप्रयोजनकं प्रयुज्यमानत्वात् सर्वात्मत्वाद्यभिधायक वाक्यवत्। सकलाहंग्रहोपासनेषु अयं व्यतिहार उपसंहर्तव्यः। पूर्वोक्त प्रतिकूलतर्के यदीश्वरस्य जीवात्मत्वं न स्यात् जीवात्मत्वप्रतिपादकं न स्यात्। यदि न स्यात्तर्हि वाक्यं व्यर्थं स्यादित्यापत्तिः। न व्यर्थम् ऐकात्म्यप्रतिपत्तिदार्ढ्यप्रयोजनकत्वादिति। तत्तदुपासनाफलाया उपासनाः तासु सर्वास्वपि व्यतिहारः आध्यातव्य इत्याह – समाने च विषये इति॥

इति व्यतिहाराधिकरणम्।

## अधिकरणम् – २४

### सैव हि सत्यादयः ३–३–३८

बृहदारण्यके "सयोहैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म" इति सत्यविद्या। यक्षं = यजनीयम् प्रथमजं अपरं ब्रह्म सत्यं

वेद इत्यर्थः। तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले यश्चायं दक्षिणेक्षन्पुरुषः। किमेते द्वे सत्यविद्ये उताभिन्ने इति संशयः। यथा जीवेश्वरयोऽन्योन्यात्मत्वनिर्देशभेदात् द्विरूपा मतिः कर्तव्येत्युक्तम् एवमिहापि जयतीमाँल्लोकान् हन्ति पात्मानमिति च फलनिर्देशभेदाद्विद्याभेद इति दृष्टान्तसंगत्या पूर्वपक्षः। असत्यपवादकरणे रूपैक्याद्विद्यैक्योत्सर्ग सिद्धिः। न च फलभेदादपवादः। अंगे फलश्रुतेः स्तुतिमात्रतया फलभेदासिद्धेः। वस्तुतस्तु प्रधानविधावपि "एवंकाम" पदाभावात् रात्रिसत्रन्यायेन फले कल्पनीये प्रधाने वा तदंगे वा यत्किञ्चित्फलं श्रुतं तस्य सर्वस्यापि श्रुतत्वाविशेषाज्जातेष्टिफलन्यायेन समुच्चित्य एकप्रधानफलत्वकल्पनात् फलभेदोऽसिद्ध इत्याह – अपि चेति। एकदेशिव्याख्यादूषणे – कर्मांगविद्यातः स्वतन्त्र हिरण्यगर्भविद्याया भेदान्न गुणोपसंहार इति। एकत्र प्राधान्येन उद्गीथ उपास्यः अन्यत्र सत्याख्य हिरण्यगर्भ इति उपास्यभेदाद्विद्याभेदः॥

इति सत्याधिकरणम्।

## अधिकरणम् – २५

### कामादीतरत्र तत्र चायतनादिभ्यः ३–३–३९

छान्दोग्यस्थ दहरविद्यायां बृहदारण्यकस्थ स वा एष महानज आत्मेत्यादिब्रह्मविद्यायां च श्रुताः सत्यकामत्वादयः वशित्वादयश्च गुणा मिथ उपसंहर्तव्या न वेति संशयः। सत्यविद्याया वेद्याभेदेनैकत्वाद्गुणसांकर्ये ऽपि अत्र विद्ययोः सगुणनिर्गुणभेदेन भेदात् निर्गुणविद्यायां गुणोपसंहारस्य फलाभावाच्च अनुपसंहार इति प्रत्युदाहरणसंगत्या पूर्वपक्षः। बृहदारण्यकस्थ ब्रह्मविद्या दहरविद्यातः भिन्ना तद्वेद्यभिन्नवेद्यकत्वात्। एकत्राकाशस्य अन्यत्राकाशस्थस्य वेद्यत्वेनोक्तत्वात् इति पूर्वपक्षः। ब्रह्मविद्या दहरविद्याया अभिन्ना तद्वेद्याभिन्नवेद्यकत्वात्। हृदयायतनत्वादिसामान्यात् सगुणत्व निर्गुणत्वाभ्यां भेदेऽपि ब्रह्मविद्यात्वेनैव औपचारिकोऽभेदः नतु पूर्वपक्षरीत्या

एकत्र आकाशविद्या अन्यत्र आकाशस्थविद्येति भेदो युक्तः दहरविद्यायामपि आकाशस्यैव उपास्यत्वेन दहराधिकरणे निर्धारितत्वात्। सिद्धान्ते विद्याभेदेऽपि आयतनादिसाम्येन बुद्धिस्थानां कामादि (सत्य कामत्वादि) गुणानामितरत्र, बृहदारण्यकस्थनिर्गुणविद्यायां तत्रत्यानां वशित्वादीनां छान्दोग्ये च स्तुत्यर्थमुपसंहारः, नतूपासनार्थमित्यविरोधः।

इति कामाद्यधिकरणम्।

## अधिकरणम् – २६

### आदरादलोपः ३–३–४०

छान्दोग्ये वैश्वानरविद्यायां प्राणाग्निहोत्रं श्रूयते'' तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति''। तत्र भोजनलोपे प्राणाग्निहोत्रस्य लोप उतालोप इति सन्देहः। पूर्वं विद्याभेदेऽपि स्तुत्यर्थत्वेन गुणोपसंहारः यथा तथा भोजनलोपेऽपि पूर्वभोजनस्तुत्युपपत्त्यर्थं प्राणाग्निहोत्रालोप इति दृष्टान्त-संगत्या पूर्वपक्षः। प्राणाग्निहोत्रं भोजनलोपे न लुप्यति आदृतत्वात्, निषिद्धधर्मलोपकत्वात् इति पूर्वपक्षः॥

### उपस्थितेऽतस्तद्वचनात् ३–३–४१

भोजने उपस्थिते, अतः तस्मादेव भोजनद्रव्यात् प्राणाग्निहोत्रं कर्तव्यम्। अनुपस्थिते तु लोप एव। तद्वचनात् ''तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्'' इति वचनात्। तथा च प्राणाग्निहोत्रं भोजनलोपे लुप्यति भोजनार्थभक्तोपजीवित्वात्। आदृतत्वं तु भोजनपक्षे प्राथम्यार्थम्। विद्यासम्बन्ध्याहुतिविषयतया पादसङ्गतिः॥

इति आदराधिकरणम्।

## अधिकरणम् – २७

### तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्य प्रतिबन्धः फलम् ३–३–४२

कर्मांगव्यपाश्रयाणि विज्ञानानि "ओमित्येतदक्षरमुद्गीथमुपासीते"त्यादीनि विषयः। किं तानि कर्मसु नित्यानि स्युः पर्णमयीत्वादिवत् उतानित्यानि गोदोहनादिवदिति उभयविधदृष्टान्तदर्शनात्संशयः। अनित्य भोजनाश्रितप्राणाग्निहोत्रस्य यथा अनित्यत्वं तथा नित्यकर्मांगाश्रितोपासनानां नित्यत्वमिति दृष्टान्तसंगतिः। कर्मांगोपासनानि नित्यनुष्ठेयानि कर्मप्रयोगवचन परिगृहीतत्वात् प्रयाजादिवत् पर्णमयीत्वादिवत्। उद्गीथाद्युपासनं नित्यं क्रतुप्रकरणानाश्रितत्वे सति क्रत्वङ्गाश्रितत्वात् पर्णमयीत्ववत्। गोदोहनादौ व्यभिचारवारणाय सत्यन्तम्। हिरण्यभरणादौ तद्वारणाय विशेष्यम्। सिद्धान्ते निष्फलत्वमुपाधिः इति पूर्वपक्षः।

कर्मांगोपासनानि नित्यानुष्ठेयानि न अनित्यत्वेनोक्तत्वात् (तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद) कर्मफलपृथक्फलत्वात् गोदोहनादिवत्। (यदेव विद्याया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति) इति सिद्धान्तः। इदं कर्मांगावबद्धोपासनाविषयमधिकरणम्॥ तेषां कर्मांगानामुद्गीथादीनां निर्धारणानि उपासनानि तेषामनियमः नित्यवदनुष्ठानाभावः। तद्दृष्टेः तस्य अनियमस्य तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदेति श्रुतौ दर्शनात्। हि = यस्मात्, कर्मफलतः पृथगेव, अप्रतिबन्धः यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति कर्मफलसिद्ध्यप्रतिबन्धः फलं श्रूयते इति सूत्रार्थः॥

इति तन्निर्धारणाधिकरणम्।

## अधिकरणम् – २८

### प्रदानवदेव तदुक्तम् ३–३–४३

बृहदारण्यके छान्दोग्ये च वागादिभ्यः श्रेष्ठः प्राणः अग्न्यादिभ्यो वायुः श्रेष्ठ इत्यवधारिम्। तत्र किमस्यां विद्यायां वायुप्राणयोः प्रयोगैक्यमुत

प्रयोगभेद इति संशयः। अग्न्यादीनां वायुः संवर्गः वागादीनां प्राणः संवर्गः इति व्यवस्थया अनुचिन्तनम् उत वाय्वादीनामग्न्यादीनाञ्च सर्वेषां वायुप्राणपदप्रतिपाद्या देवता संवर्ग इत्यादिरूपेण युगपदेवानुचिन्तनमिति संशयः।

पूर्वत्र फलभेदात् कर्मांगानां, तद्बद्धोपासनानाञ्च नित्यत्वानित्यत्वरूपः प्रयोगभेद उक्तः, इह तु वायुप्राणयोस्तत्त्वाभेदात् तत्प्राप्तिलक्षणफलैक्याच्च उपासनप्रयोगैक्यमिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। अध्यात्मप्राणोपासना प्रयोगः अधिदैवतवायूपासनाप्रयोगाद्भिन्नो न भवति तद्विषयाभिन्नविषयकत्वात् इति पूर्वपक्षः। प्राणोपासनाप्रयोगः वायूपासनाप्रयोगाद्भिन्नः तत्स्थानभिन्नस्थानकत्वात्। अवस्थाविशिष्टस्य भिन्नत्वाद्वेद्यभेद इति सिद्धान्तः। प्रदानवदेव – यथा "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायधिराजायेन्द्राय स्वराज्ञे" इति इन्द्रदेवताया एकत्वेऽपि राज, अधिराजादि गुणभेदेन तद्विशिष्टदेवताभेदात्पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेदः, तद्वदेकस्यामपि विद्यायां वायुप्राणयोः स्वरूपाभेदेऽपि स्थानभेदात्तद्विशिष्टभेदात् वेद्यभेदात्प्रयोगभेद इति तदुक्तं देवताकाण्डे नाना वा देवता पृथग्ज्ञानादिति। सर्वेषामभिगमयन्नवद्यत्यच्छं बद्कारमिति॥ सर्व देवार्थे युगपदवदानं कार्यमित्यत्र हेतुरछं बद्कारमिति अव्यर्थत्वायेत्यर्थः। एकार्थमवते हविषि शेषो यागानर्हतया वृथा स्यादित्यर्थः। एवं सहावदानश्रुतेर्दैवैक्याच्च पुरोडाशानां सह प्रक्षेपे प्राप्ते पृथक् प्रक्षेप इति सिद्धान्तः राजादिगुणभेदादित्यादिनोच्यते।

इति प्रदानाधिकरणम्।

## अधिकरणम् – २९

### लिंगभूयस्त्वात्तद्धि बलीयस्तदपि ३–३–४४

वाजसनेयिनामग्निरहस्ये नैव वा इदमग्रे सदासीदित्यादि तत् षट्त्रिंशत्सहस्राण्यपश्यदात्मनोग्नीनर्कान्मनोमयान्मनश्चित इत्यादि श्रूयते। तत्



16

षट्त्रिंशत्सहस्राणीत्यादि॥ तत् = मनः मनोमयान् = मनोविकारभूतानग्नीन्। अत्र मनोवृत्तिसमुदाये एकैकाहोरात्रावच्छिन्ने इष्टकाचिताग्निदृष्टिर्विवक्षिता। पुरुषायुषस्य संवत्सरपरिमितस्य षट्त्रिंशत्सहस्राणि दिनानि भवन्ति। तथा च तावता कालेन तावन्तोऽग्नयः सिद्धा भवन्ति। आत्मनः मनः सम्बन्धिनः अर्कान् = अर्चनीयान् मनसा चीयन्ते इति मनश्चितः। ध्यानमात्रसम्पाद्यं हितेषां चयनम्। मनोवृत्तिसंघाते अग्निदृष्टिं विधाय इतरेन्द्रियवृत्तिष्वग्निदृष्टिविधानार्थानि वाक्चित इत्यादिवाक्यानि। प्राणः घ्राणम्। वान्द्रियव्यतिरिक्तकर्मेन्द्रियपरं कर्मचित इति। अग्निचितः = जाठराग्निचितः। एकाहोरात्रगता मनोवृत्तयः एकं चयनमिति चिन्तनीयम्। एवमेव वागादिवृत्तय इति।

अग्निरहस्योक्तमनोमयाद्यग्नयः क्रियांगभूता अथवा विद्यात्मका वेति संशयः। एकप्रयोगासम्भवाद्वायुप्राणयोः ध्यानप्रयोगभेदोऽस्तु, इह तु मनश्चिदादीनां प्रकरणात्कर्मांगत्वेन एकप्रयोगत्वमिति प्रत्युदाहरणसंगतिः। कर्मांगभूता इति पूर्वपक्षे स्थिते सिद्धान्तेनोपक्रमः। मनोमयाद्यग्नयः क्रियांगभूता न भवन्ति अनियतकालकत्वात् अनियतसंख्याकत्वात् इति सिद्धान्तः। तत्र सर्वप्राणिमनोवृत्तिभिर्मम सदाऽग्नयश्चीयन्त इति ध्यानदार्ढ्ये सति सर्वभूतानि यत्किञ्चिन्मनसा संकल्पयन्ति तेषामेव साकृतिरित्येकं लिङ्गम्। क्रियांगस्य यत्किञ्चित्करणेन सिद्ध्यदर्शनात्। एवं विदे स्वपते जाग्रतेऽपि तदीयाग्नीन् सर्वभूतानि सर्वदा चिन्वन्तीति लिङ्गान्तरम्। क्रियांगस्य चोदितकालानुष्ठेयस्य सदा सर्वैरनुष्ठीयमानत्वायोगात्। तद्धि लिङ्गं प्रकरणाद्बलीयः। तदपि बलीयस्त्वमपि पूर्वकाण्डे श्रुतिलिङ्गसूत्रे उक्तम् इति सूत्रार्थः॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ३–३–४५

अनेन पूर्वपक्षः — मनोमया इष्टकाः क्रियांगभूताः क्रियाप्रकरणपठितत्वात्। न च प्रकरणाल्लिङ्गं बलीय इति वाच्यम्। तत्र वक्तव्यम्। किं विधिवाक्यस्थं लिङ्गं प्रकरणाद्बलीयः अर्थवादस्थं

वा। आद्ये इष्टापत्तिः। न द्वितीयः। मानसाग्निविद्धचर्यार्थवादस्थ लिङ्गानां स्वार्थ प्रमापक प्रमाणाभावात् दौर्बल्यात्। अन्यार्थदर्शनमिति। द्विविधं लिङ्गं सामार्थ्यम् – अन्यार्थदर्शनञ्च। सामर्थ्यं द्विविधम् — शब्दगतम् अर्थगतञ्च। आद्यं बर्हिर्देवसदनं दामीत्यादिमन्त्राणां स्वप्रकाश्येऽर्थे विनियोजकम्। द्वितीयम् — स्रुवेणावद्यति, स्वधितिनावद्यति इत्यादौ स्रुव स्वधित्यादिगतं द्रव द्रव्यावदानमांसखण्डनोपयुक्तं तत्तद्योग्यार्थविनियोजकम्। सामर्थ्यरूप लिङ्गमेव श्रुतिलिङ्गसूत्रे प्रकरणाद्बलीयस्त्वेन निबद्धम्। अन्यार्थदर्शनं साहचर्येण सम्बन्धेन कस्यचिदर्थस्य ज्ञापकम्। तच्च मूलभूतप्रमाणे सत्येव तत्सहकारि भवति न तु स्वयमेव कस्यचिदर्थस्य निश्चयं जनयति। पूर्वस्य क्रियामयस्याग्नेः विकल्पः संकल्पात्मकः अग्निः प्रकरणात् क्रिया = क्रियाशेष एव। मानसवत्। यथा द्वादशाहे मनोग्रहं गृह्णामि इति श्रुतमानसग्रहः द्वादशाहमध्यपातिनो दशमस्याह्नोंऽगम् तद्वदित्यर्थः॥

## अतिदेशाच्च ३–३–४६

मनोमया अग्नयः क्रियांगभूताः क्रियांगाग्निसदृशत्वात् श्रुत्यर्थः। पूर्वः इष्टकाचितोऽग्निः यावान् यावन्माहात्म्यविशिष्ट मनश्चिदादिष्वेकैक एव तावान् तावन्माहात्म्य विशिष्ट इति॥

## विद्यैव तु निर्धारणात् ३–३–४७

अनेन सिद्धान्त उच्यते। मनश्चितः स्वतन्त्राः निषिद्धक्रियांगत्वात् ते हैते विद्याचित एव'' ''विद्यया है वै त एवं विदश्चिता भवन्ति'' इति च। एवकारश्रुत्या कर्मांगत्वव्यवच्छेद बोधनात्।

## दर्शनाच्च ३–३–४८

मनश्चिदादीनां स्वातन्त्र्यज्ञापकलिंगस्य प्रागुक्तस्य दर्शनाच्चेत्यर्थः। एवं विदश्चिता भवन्तीति पुरुषसम्बन्धेन पुरुषार्थत्वप्रतिपादकवाक्यस्य दर्शनादपीत्यर्थः॥

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ३–३–४९

''तेहैते विद्याचित एवेति श्रुतिः। सर्वदा सवाणि भूतानिचिन्वन्त्यपि स्वपते'' इति लिङ्गम्। वाक्यं – विद्यया हैवैत एवं विदश्चिता भवन्तीति। एतैः प्रकरणस्य बाध इति, न तु प्रकरणेन एतेषां बाध इत्यर्थः। यदुक्तम् अर्थवादस्थत्वाल्लिगं दुर्बलमिति, तन्न सर्वदा सर्वभूतानि मदर्थमग्नीन् चिन्वन्तीति ध्यायेदित्यपूर्वार्थकतया विधिकल्पनात्। तथा च विधिवाक्यस्थत्वात् लिङ्गं प्रकरणाद्बलवदित्याह — नचेदमित्यादिना। श्रुतिलिङ्गवाक्यसम्बन्ध्यर्थवादानामपूर्वार्थगोचरतया विधि कल्पकत्वात् यथोपलभ्यमानार्थमादायैव विधिःकल्प्यते। अनुवादकत्वन्तु श्रुतिविध्येकवाक्यतापन्नार्थवादानाम्। अतः श्रुत्यादीनां बलीयस्त्वात् प्रकरणकृतः स्वातन्त्र्यबाधो नास्तीत्यर्थः।

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ३–३–५०

अनुबन्धः = सम्बन्धः। संपदुपास्त्यै मनोवृत्तिषु क्रियांगानां योजनम्। मनश्चिदादयः क्रियाशेषा न क्रियाविरोधिमनोमयव्यापारसम्बन्धि त्वात्। आदिशब्देन अतिदेशश्रुतिलिंगवाक्यानां परिग्रहः। प्रज्ञान्तरपृथक्त्व वत् शाण्डिल्यादिविद्यानां यथा स्वातन्त्र्यं तद्वदित्यर्थः। दृष्टश्च = राजसूयं प्रस्तुत्य श्रुताया अवेष्टेः ब्राह्मणादि कर्तृकाया राजमात्रकर्तुकराजसूय प्रकरणादुत्कर्षो दृष्टः तद्वदिहाप्यग्नीनां कर्मप्रकरणादुत्कर्ष इति। तदुक्तं प्रथमे काण्डे ''क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्'' इति। राजसूयस्य क्रतोः प्रकरणे उक्ता अवेष्टिरतदर्था इति चेन्न। यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिधारयेत्। यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रमिति त्रिभिर्वर्णैः सम्बन्धात्। राजसूयस्तु राजा स्वाराज्यकामो राजसूयेन यजेतेति राजन्यैनैव सम्बन्धादिति जैमिनिसूत्रार्थः। इति अतिदेशोऽप्यग्नित्वसामान्याद्भवतीति पूर्वपक्ष्युक्तातिदे शादिति हेतुरप्रयोजकः।

### न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ३–३–५१

न सामान्यादपि मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वम् उपलब्धेः, श्रुत्यादिभ्यः स्वातन्त्र्योपलब्धेः। मृत्युवत्। यथा "स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः", "अग्निर्वै मृत्युः" इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगेनात्यन्तसाम्यापत्तिः। तथा च असौवावलोको गौतमाग्निः तस्यादित्य एव समित् इत्यत्र न समिदादिसामान्याल्लोकस्याग्निभावापत्तिस्तद्वत्।

### परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ३–३–५२

मनश्चिदादयः क्रियांगभूता न क्रियानंगविद्याविधिप्रधानपूर्वोत्तरवाक्य पठित (घटक) वाक्यप्रतिपाद्यत्वात्। "विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणायन्ति नाविद्वांसस्तपस्विन" इति परः शब्दः। पूर्वत्र यदेतन्मण्डलं तपति इति ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते। भूयसां क्रियावयवानां मनो व्यापारेषु सम्पादनीयत्वाद्धेतोः अनुबन्धः अग्निसम्बन्धः। परेण सन्दर्भेणोपकृत शब्दस्य ताद्विध्यं = स्वतन्त्र विद्या विधायकत्वम्। भूयस्त्वात् = साधकभूयस्त्वात् पुरुषेणैव प्रकृतविद्यायाः सम्बन्धः। (तत्सहपाठात् मानसचयनमपि स्वातन्त्र्यम् इत्यप्यर्थः।।

इति लिंगभूयस्त्वाधिकरणम्

## अधिकरणम् – ३०

### एक आत्मनः शरीरे भावात् ३–३–५३

आत्माविषयः। स किं देह एव उत तदतिरिक्त इति संशयः। मनश्चिदादीनां पुरुषार्थत्वमनुपपन्नं, देहव्यतिरिक्तस्य फलभोक्तुरभावादित्याक्षेपसंगतिः। प्रसंगलक्षणा पादसङ्गतिः। देह आत्मा चैतन्यवत्त्वात्, चैतन्यं शरीरधर्मः शरीरसत्त्वासत्त्वान्वयव्यतिरेकानुविधायित्वात् इति पूर्वपक्षः।।

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ३-३-५४

चैतन्यं शरीरधर्मो न शरीरसत्त्वेऽप्यभावात् व्यतिरेकेण देहे रूपवत्। चैतन्यादयः न देहधर्माः परैरदृश्यत्वात् इति देहधर्माश्च रूपादय इति। चैतन्यादिकं शरीराद्यतिरिक्तधर्मः शरीराद्यधर्मत्वे सति यत्किञ्चिद्धर्मत्वात्। चैतन्यं भूतातिरिक्तं भूतानुभवरूपत्वात् यः यत्प्रकाशः स तद्भिन्नः यथा प्रकाशः किमात्मकं पुनरिदं चैतन्यमित्यत्र। आत्मा देहभिन्नः उपलब्धिरूपत्वात् उपलब्धिवदिति उपब्धिस्वरूप एवेत्यत्र। चैतन्यं न शरीरधर्मः स्वप्नादिषु चेष्टावच्छरीराभावेऽपि सत्त्वात्। नत्वात्मनः शरीरदव्यतिरेकः किन्तु व्यतिरेक एव तस्य शरीरस्य भावेऽपि उपलब्धिरूपात्मधर्मस्याभावित्वात् न शरीरधर्मत्वम् उपलब्धिवत्। यथा भूतोपलब्धिर्न तद्धर्मः ततो व्यतिरिच्यते तथा भौतिकदेहोपलब्धिः न तद्धर्मः ततो व्यतिरिच्यते। सैवोपलब्धिरस्माकमात्मेति देहव्यतिरिक्तस्या त्मनः सत्त्वमिति सिद्धम्।

देवदत्तचैतन्यं न देवदत्तविशेषगुणः अयावद्देवदत्तदेहभावित्वात् तद्रष्टृत्वाच्च यज्ञदत्तचैतन्यवत्। संयोगादिषु व्यभिचारवारणाय विशेषपदम्। चैतन्यं यदि गुणः तर्हि विशेषगुण एव स्यात् द्वीन्द्रियाग्राह्यगुणत्वे सति अपरोक्षत्वात्, स्वाश्रयस्याष्टद्रव्येभ्यो व्यावर्तकसामान्यत्वाद्वा गन्धवत्॥

इति ऐकात्म्याधिकरणम्।

## अधिकरणम् – ३१

## अंगावबद्धास्तु न शाखासु हि प्रतिवेदम् ३-३-५५

उद्गीथावयव ओंकारे प्राणदृष्टिः पृथवीहिंकारोऽग्निः प्रस्तावः अन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमिति हिंकारादि पञ्चविधसाम्नि पृथिव्यादिलोकदृष्टिः, अवधार्यशास्त्रे पृथिवीदृष्टिः

इष्टकाचिताग्नौ लोकदृष्टिरिति कर्मांगाश्रितोपास्तयः सन्ति। ताश्च प्रतिशाखं विहिता भेदेन। तत्र संशयः। ता उपास्तयः किं यत्र शाखायां विहिताः तच्छाखागतोद्गीथाद्यालम्बना उत सर्वशाखागतोद्गीथालम्बना इति संशयः। राणायनशाखास्थोद्गीथविद्या कौथुमस्योद्गीथसम्बन्धिनी न भवति विन्नोद्गीथविषयकत्वेनोक्तत्वात्। सिद्धान्तस्तु राणायनीयोद्गीथविद्या सकलशाखास्थोद्गीथसम्बन्धिनी उद्गीथत्वावच्छिन्नोद्देशेन विहितत्वात्। अंगावबद्धोपासनाः प्रतिवेदं स्वस्वशाखासु विद्यमानोद्गीथाद्यालम्बना एव न भवन्ति, किन्तु शाखान्तरीयोद्गीथालम्बना अपि उद्गीथमुपासीतेति उद्गीथादिश्रुतेरविशेषात्॥

## मन्त्रादिवद्वा विरोधः ३–३–५६

पूर्वपक्षिसामान्यमुखीव्याप्तौ मन्त्रादिषु व्यभिचारः। मन्त्राणां कर्मणां गुणानाञ्च शाखान्तरोत्पन्नानामपि शाखान्तरे उपसंग्रहो दृश्यते। तद्वदेकशाखास्थप्रत्ययानां शाखान्तरस्थोद्गीथादिसम्बन्धेऽविरोध इत्यर्थः।

इति अङ्गावबद्धाधिकरणम्।

# अधिकरणम – ३२

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ३–३–५७

वैश्वानरविद्या विषयः। तत्र किं व्यस्तोपासनं समस्तोपासनं च उत समस्तोपासनमेवेति संशयः। पूर्वत्रोद्गीथादिश्रुत्या संनिधि बाधित्वा उद्गीथाद्युपास्तीनां सर्वशाखासूपसंहार उक्तः। एवमत्रापि व्यस्तोपासनस्य विधिश्रुतेः फलश्रुतेश्च समस्तोपासन संनिधान प्राप्त स्तुत्यर्थत्वं बाधित्वा विधेयत्वतिति दृष्टान्तसंगत्या पूर्वपक्षः। व्यस्तोपासनं समस्तोपासनाद्भिन्नं विहितत्वात् फलवत्त्वाच्च इति पूर्वपक्षः। व्यस्तोपासनं न कर्तव्यम् निन्दितत्वात् समस्तोपासनातात्पर्यकवाक्यानूद्यमानत्वात्। अत एव विहितत्वादिति पूर्वपक्षहेतुरसिद्धः। प्रधानस्तवनायैव बहुफलसंकीर्तनम्।

वाक्यप्रकरणाभ्यां व्यस्तोपास्तीनां समस्तोपास्त्यन्तर्भावेन प्रयाजदर्शवदेकप्रयोगत्वे सिद्धे प्रधान तदंग फलानामर्थवादगतानामेकप्रधान फलतयोपसंहारात् वाक्यभेदो न युक्त इति सिद्धान्त्याशयः। क्रतुवत् यथा दर्शपूर्णमासादेः क्रतोः सांगप्रधानस्यैकस्यैव प्रयोगो विवक्ष्यते न व्यस्तानामपि प्रयाजादीनां तद्वदित्यर्थः। तथादि भूमाश्रयमेव फलंदर्शयति श्रुतिः। अतः समस्तोपासनमेव ज्याय इति सिद्धम्॥

इति भूमजायस्त्वाधिकरणम्

## अधिकरणम् – ३३

## नाना शब्दादिभेदात् ३–३–५८

शाण्डिल्यादि ब्रह्मविद्या एका वा नानावेति, तथा संवर्गादिप्राणविद्या एका वा नानावेति सन्देहः। सुतेजःप्रभृतीनां फलभेदश्रुतावपि यथा समस्तोपासनं ज्याय इत्युक्तम् एवमन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्योपासितव्यानीति दृष्टान्तसंगत्या पूर्वपक्षः। शाण्डिल्यविद्या वैश्वानरविद्याया अभिन्ना समानविषयकत्वात्। विद्यैक्ये च स्वपर शाखाविहितमेकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यं विद्याकात्स्न्र्यायेति पूर्वपक्षः। शाण्डिल्यविद्या वैश्वानरविद्याभिन्ना तद्वेद्यभिन्नवेद्यकत्वात्। शाण्डिल्यविद्या वैश्वानरविद्यावेद्यभिन्नवेद्यका तद्वेद्यगुणभिन्नगुणकत्वात्। शाण्डिल्यविद्या वैश्वनरविद्याभिन्ना तत्प्रतिपादकशब्दविलक्षणशब्दप्रतिपाद्यत्वात्। (अयमभ्युच्चयहेतुः)। आदिपदेन गुणः फलं, समाख्या ग्राह्याः। फलभेदाचचोदनैक्याभावात् सर्वगुणध्यानस्याशक्यत्वाच्च विद्याभेद इति। शब्दान्तरे इति सूत्रम्। अस्यार्थः। भिन्नभावार्थविषयः शब्दः शब्दान्तरम्। यथा यजति ददाति जुहोतीति। तस्मिन् सति कर्मभेदः कृतानुबन्धत्वात् भिन्नधात्वर्थावच्छिन्नतया भावनाया भिन्नत्वादिति॥

इति शब्दादिभेदाधिकरणम्

## अधिकरणम् – ३४

### विकल्पो विशिष्टफलत्वात् ३–३–५९

विद्याभेदादि चिन्तानन्तरं अहं ग्रहप्रतीकांगावबद्धोपास्तीनाम् अनुष्ठान प्रकारोऽधिकरणत्रयेण निरूप्यते। सगुणब्रह्मविद्या किं विकल्पसमुच्चयाभ्याम नुष्ठेया उत विकल्पेनैवेति संशयः। उपजीव्योपजीवकभावः संगतिः। शाण्डिल्यविद्या वैश्वानरविद्यया नियतसमुच्चिता कर्तव्यत्वेनोक्तत्वात् अग्निहोत्रसमुच्चितदर्शादिवत्। ननु भिन्नानामिमत्यादिना पूर्वहेतौ नित्यत्वमुपाधिरुच्यते। शाण्डिल्यविद्यावैश्वानरविद्यानियतसमुच्चयका न तत्सहायं विनैव फलवत्त्वेनोक्तत्वात्, नियतविकल्पिका न तादृशविद्यां विनैवानुष्ठेयत्वेनानुक्तत्वात्। किन्तु यथाकाममनुष्ठेयमिति पूर्वपक्षः। सिद्धान्तस्तु शाण्डिल्यविद्या वैश्वानरविद्यासमुच्चयं विनैवानुष्ठेया तत्सम्बन्धं विनैवतत्फलाभिन्नफलकत्वात्। तथा च शाण्डिल्यादिविद्यानां वैश्वानरादिवि द्याभिः नियतविकल्पः। अन्यथा चित्तविक्षेपादिना अनुष्ठानासम्भवेन फलमेव न स्यात्। यस्य स्यादद्धेति। अत्यन्ताभिमानः स एवाहमिति, न विचिकित्सा स एवाहमन्यो वेति स एव यथोक्तं फलं प्राप्नोतीत्यर्थः।

इति विकल्पाधिकरणम्

## अधिकरणम् – ३५

### काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ३–३–६०

प्रतीकोपासना विषयः। ताः किं विकल्पेनानुष्ठेया उत यथाकाममिति संशयः। दृष्टान्तसंगतिः। आदित्यो ब्रह्मेत्युपासना मनो ब्रह्मेत्युपासनां विनैवानुष्ठेया तत्समुच्चयं विनैव फलजनकत्वेनोक्तत्वात् अहंग्रहोपासनावत् इति पूर्वपक्षः। प्रतीकोपासना विकल्पेनानुष्ठेया अंगोपास्त्यतिरिक्तत्वे सति ब्रह्मोपास्तित्वात्, अहंग्रहोपासनावत्। उपास्यसाक्षात्कारपर्यन्तत्वमु पाधिः। साक्षात्कारसाधनत्वेन सोपाधिकत्वात् पूर्वपक्षहेतुर्न साधकः।

किन्तु भिन्नफलत्वाद्ययाकामं समुच्चय तदभावाविति सिद्धान्तः। प्रतीकोपास्तयो यथाकाममनुष्ठेयाः उपास्यसाक्षात्कारनिरपेक्षत्वे सति भिन्नफलत्वात् दर्शपूर्णमासज्योतिष्टोमवत्। न पुत्र रोदं रोदिति = पुत्रविपत्तिनिमित्तं रोदनं न प्राप्नोतीत्यर्थः॥

इति काम्याधिकरणम्

## अधिकरणम् – ३६

### अङ्गेषु यथाश्रयभावः ३–३–६१

कर्मांगावबद्धोपासना विषयः। वेदत्रयविहितास्ताः किं समुच्चीयेरन्न वेति संशयः। यथाप्रतीकोपास्तीनां स्वतन्त्रत्वाद्यथाकाममनुष्ठानं, न तथेहांगाश्रितानामुपास्तीनाम् अंगतन्त्रत्वादिति प्रत्युदाहरणसंगतिः। अंगावबद्धा उपास्तयः समुच्चित्यानुष्ठेयाः समुच्चित्यानुष्ठीयमानांगाश्रितत्वात्। यथा क्रत्वनुष्ठाने तदाश्रितांगानां समुच्चित्यानुष्ठाननियमः तथांगानुष्ठाने तदाश्रितोपास्तीनां तन्नियम इति सूत्रार्थः। ननु तन्निर्धारणानियम इत्यत्रांगाश्रितानामनंगत्वमुक्तं तत्कथमनंगानामंगवत्समुच्चयाशंकेति चेन्न। अंगान्यनुष्ठापयन् प्रयोगविधिर्यद्युपासनानि नानुष्ठापयेत्तर्हिं तेषां तदाश्रितत्वं व्यर्थमिति मन्वानेन पूर्वपक्षकरणात्॥

### शिष्टेश्च ३–३–६२

अंगाश्रितोपासनाः समुच्चित्यानुष्ठेयाः त्रिषु वेदेषु शिष्टत्वात्। आश्रयभूतांगवत्।

### समाहारात् ३–३–६३

वेदान्तरोदित प्रत्ययः वेदान्तरोदितप्रत्यय समुच्चितः वेदान्तरोदितत्वात्। वेदान्तरोदितप्रणवसमुच्चितवेदान्तरोदितोद्गीथविद्यावत्॥

## गुणसाधारण्यश्रुतेश्च ३–३–६४

वेदान्तरोदितप्रत्ययः वेदान्तरोदितप्रत्ययसमुच्चितः तदीयोंकाररूपाश्रयाभिन्नाश्रयकत्वात्। अथवेति॥ कर्मांगात्रबद्धोपासनाः सर्वप्रयोगगृहीताः तादृशोद्गीथाद्याश्रयत्वात्॥

## न वा तत्सहभावाश्रुतेः ३–३–६५

वेदान्तरोदितप्रत्ययः वेदान्तरोदितप्रत्ययसमुच्चितो न, तत्सहभावित्वे नाश्रूयमाणत्वात्। व्यतिरेकेण कर्मांगवत्। "ग्रहं वा गृहीत्वा चमसंवोन्नीय स्तोत्रमुपाकरोति स्तोत्रमनुशंसति प्रस्तोतः सामगाय होतरे तद्यजेति"॥ नेति ब्रूमः। कर्मांगबद्धोपासनाः कर्मप्रयोगवचनगृहीता न भवन्ति स्वतन्त्रफलकत्वात्। विमता उपास्तयः क्रतौ समुच्चित्यानुष्ठेया न भिन्नफलत्वाद्गोदोहनवत्। शिष्टेश्चेति यदुक्तं तन्न। उपासनानां पुरुषार्थत्वेन शिष्टत्वात् कर्मांगानाञ्च क्रत्वर्थत्वेनेति भेदात्। समाहारादिति गुणसाधारण्यश्रुतेश्चेति द्वयमपि मानान्तरप्राप्तस्य द्योतकं न स्वयंसाधकम् अर्थवादस्थत्वात्। अंगाश्रितोपास्तीनामंगाश्रितत्वं अंगाभावे सत्यसत्त्वं न तु अंगव्यापकत्वमिति गुणसाधारण्यश्रुतेश्चेत्यस्य द्वितीयाव्याख्यापि न बाधिकेति।

## दर्शनाच्च ३–३–६६

विदुषा ब्रह्मणाऽन्येषामृत्विजां पाल्यत्ववचनदर्शनान्न सर्वोपास्तीनां सहप्रयोगः। "एवं विद्धवै ब्रह्मा यजमानं सर्वांश्चर्त्विजोभिरक्षति"। इति। व्याहृतिहोमप्रायश्चित्तादिविज्ञानवानेवं विदित्यस्यार्थः॥

इति यथाश्रयाधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्य प्रदीपिकायां

तृतीयाध्यायस्य तृतीयः पादः

# अथ तृतीयाध्यायस्य चतुर्थः पादः

## अधिकरणम् – १

### पुरुषार्थोऽतः शब्दादिति बादरायणः ३–४–१

पूर्वपादे परापरविद्यानां गुणोपसंहारोक्त्या स्वरूपं निर्धारितम्। इह तासां कर्मनिरपेक्षाणामेव पुरुषार्थसाधनत्वं निरूप्यते। ततो गाकाक्षायां यज्ञादीनि बहिरङ्गानि शमादीन्यन्तरङ्गानि च निरूप्यन्त इति एकविद्याविषयत्वं पादयोः सङ्गतिः। अत्र परब्रह्मविद्या विषयः। सा किं कर्तृद्वारा क्रत्वनुप्रवेशिनी उत स्वतन्त्रैव पुरुषार्थसाधिकेति संशयः। क्रत्वनुप्रवेशिनीति पूर्वपक्षयिष्यन् सिद्धान्तेनोपक्रमते। अतः वेदान्तविहिता दात्मज्ञानात् पुरुषार्थः सिद्ध्यतीति बादरायणः। ''तरति शोकमात्मवित्'' इत्यादिशब्दात्। ब्रह्मविदाप्नोतीत्यादिवाक्यानि मोक्षसाधनत्वेन ज्ञानप्रतिपादकानि॥

### शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ३–४–२

अर्थवादपदमावर्तनीयम्। ज्ञानात्पुरुषार्थवादोऽर्थवाद इत्यर्थः। आत्मज्ञानं कर्मांगं अफलत्वे सति कर्मशेषाश्रयत्वात्, पर्णमयीत्ववत्। ब्रह्मविदाप्नोतीत्यादिवाक्यानि पुरुषार्थसाधनज्ञानप्रतिपादकानि न भवन्ति कर्मांगप्रतिपादकत्वात् यस्य पर्णमयीत्यादिवाक्यवत्। सिद्धान्ती अव्यभिचरितक्रतुसम्बन्धिपदार्थप्रतिपादकत्वमुपाधिरिति शङ्कते — कथं पुनरिति। उपाधिः साधनव्यापकः आत्मनोव्यभिचरितक्रतुसम्बन्धित्वादिति पूर्वपक्षी समाधत्ते — कर्तृद्वारेणेति। सिद्धान्ती तत्परिहरति – नेति। येन कर्तृमात्रेणात्मज्ञानं अव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण पर्णतावद्वाक्येनैव क्रतुसम्बन्धमापद्येत, तत्कर्तृमात्रं नाव्यभिचरितक्रतुसम्बन्धम्, कर्तृमात्रस्य लौकिकेषु कर्मस्वपि दर्शनादिति सिद्धान्त्याशयः। एतावता पूर्वपक्ष्यनुमाने सिद्धान्त्युद्भावित उपाधिः स्थिरः। पूर्वपक्षी परिहरति – न, व्यतिरिक्तविज्ञानस्येति॥ यादृश आत्मा देहादिव्यतिरिक्तो

वेदान्तैर्बोध्यते तादृशस्य लौकिकेषु कर्मसु नोपयोगः। आमुष्मिकफलानां वैदिककर्मणां तादृशात्मानमन्तरेणासम्भवात् वेदान्तप्रतिपाद्यात्मनोऽव्यभिचरित क्रतुसम्बन्धोस्त्येवेति साधनव्यापकत्वान्नोपाधिरिति पूर्वपक्ष्याशयः। पर्णमयीत्वादिष्वित्यर्थः। यस्यार्थे जायादिकं प्रियं भोग्यं स आत्मा द्रष्टव्य इति भोग्यलिंगेन सूचितस्य संसारिण एव आत्मनो द्रष्टव्यत्वेन प्रतिज्ञानादपहतपाप्मत्वादि तत्स्तुत्यर्थमेवेति॥

## आचारदर्शनात् ३–४–३

आत्मज्ञानं कर्मांगं कर्मिनिष्ठत्वात्। "जनको ह वैदोहो बहुदक्षिणेन यज्ञेनेजे" इति दर्शनात्। जनकादीनां विद्यया सहकर्माचार दर्शनं ब्रह्मविद्यायाः कर्मांगत्वे लिङ्गमित्यर्थः॥

## तच्छ्रुतेः ३–४–४

आत्मज्ञानं कर्मांगं यदेव विद्यया करोतीत्यादिना कर्मांगत्वेन श्रूयमाणत्वात्॥

## समन्वारम्भणात् ३–४–५

आत्मज्ञानं कर्म अनपेक्ष्य फलसाधनं न तदपेक्ष्य फलसाधनत्वेनोक्तत्वात्। ("तं विद्या कर्मणी समन्वारभेते" इति)

## तद्वतो विधानात् ३–४–६

वेदान्तार्थज्ञानं कर्मांगं वेदार्थज्ञानत्वात् कर्मकाण्डार्थज्ञानवत्। यथाविधानं = यथाशास्त्रम् गुरोः कर्मातिशेषेण गुरोः शुश्रूषाख्यं कर्मकृत्वा अवशिष्टेन कालेन इति श्रुत्यर्थः॥

## नियमाच्च ३–४–७

वेदान्तार्थज्ञानं कर्मांगं कर्मीतरानिष्ठत्वात्। "कुर्वन्नेवेह कर्माणि"॥ इति षड्भिः सूत्रैः पूर्वपक्षः॥

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ३–४–८

पूर्वपक्षिणा यदुक्तं कर्मांगप्रतिपादकत्वादिति, तदसिद्धम्। शरीराद्यतिरिक्तात्मनः शुद्धबुद्धोदासीनब्रह्मात्मत्वरूपाधिकोपदेशपरत्वात्॥

## तुल्यन्तु दर्शनम् ३–४–९

आत्मज्ञानं कर्मांगं न अकर्मिनिष्ठत्वात् इति सत्प्रतिपक्षानुमानम्। कर्मिनिष्ठत्वं सोपाधिक ब्रह्मविद्यायां न तु ब्रह्मज्ञाने इति पूर्वपुक्षि द्वितीयो हेतुरसिद्धः। जनकस्य जीवन्मुक्तत्वात्तत्कृतं कर्म कर्मैव न भवति तस्य कर्मत्वाध्यासाभावात्। किञ्च ब्रह्मविदां कर्मदर्शनात्मकं लिङ्गं लोकसंग्रहार्थत्वेनान्यथासिद्धम्। आचारदर्शनादित्यस्य समाधानम्॥

## असार्वत्रिकी ३–४–१०

उद्गीथविद्यायाः कर्मांगत्वेन श्रुतत्वेऽपि ब्रह्मज्ञाने तदभावात् तच्छ्रुतेरित्यसिद्धम्॥

## विभागः शतवत् ३–४–११

समन्वारम्भणादित्यप्यसिद्धम्। विद्यान्यं कर्मान्यमिति विभागो द्रष्टव्यः। शतवत्। वस्तुतस्तु समारम्भवचनं संसारिविषयमेव। विद्याविहिता यथोद्गीथविद्या, प्रतिषिद्धा असच्छ्रास्त्राधिगमरूपा, कर्मापि विहितं प्रतिषिद्धञ्च। तथा च विभागं विनापि समन्वारम्भवचनमुपपद्यते।

## अध्ययनमात्रवतः ३–४–१२

तद्वतो विधानादिति निरस्यते। कर्मकाण्डार्थज्ञानस्यैवापेक्षितत्वात्। मात्रपदेन उपनिषदर्थज्ञानव्यावृत्तिः पूर्वपक्षिहेतुरनुष्ठानोपयोगित्वेन सोपाधिक इत्यर्थः॥

## नाविशेषात् ३–४–१३

विद्वानिति विशेषाभावात् ''कुर्वन्नेवेह कर्माणि'' इत्यत्र न विद्वद्विषयम्। नियमाच्चेत्यस्य परिहारः॥

## स्तुतयेऽनुमतिर्वा ३–४–१४

यद्यापि प्रकरणात्तत्त्ववित्सम्बध्यते। तथापि ब्रह्मविद्यास्तुतये कर्मानुज्ञा, ''न कर्म लिप्यते नरे'' इति वचनात्॥

## कामकारेण चैके ३–४–१५

ब्रह्मज्ञानं कर्मांगं न अकामयमाननिष्ठत्वात्। एके विद्वांसः दर्मसाधनं प्रजादिकं कामकारेण स्वेच्छया त्यक्तवन्तः इति श्रूयते। ''किं प्रजया करिष्यामो येषाम्'' एतदपि तत्त्वज्ञानस्य कर्मानंगत्वे लिङ्गमित्यर्थः॥

## उपमर्दं च ३–४–१६

ब्रह्मज्ञानं न कर्मांगं कर्मोपमर्दकत्वात्। ''यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'' इति॥

## ऊर्ध्वरेतःसु च शब्दे हि ३–४–१७

ब्रह्मज्ञानं कर्मांगं न सन्यासाश्रमिनिष्ठत्वात्। न च सन्यासाश्रम एव असिद्ध इति वाच्यम्। शब्दे ''त्रयो धर्मस्कन्धाः ब्रह्मसंस्थोऽमृतत्वमेति'' इत्यस्मिन् शब्दे सन्यासाश्रमस्य श्रुतत्वात्॥

इति पुरुषार्थाधिकरणम्

## अधिकरणम् – २

## परामर्शं जैमिनिरचोदनाचापवदति हि ३–४–१८

पूर्वाधिकरणान्तिमसूत्रे सन्यासाश्रमसत्त्वे त्रयो धर्मस्कंन्धा इति श्रुतिः प्रमाणमित्युक्तम्। तदाक्षिपति। ऊर्ध्वरेतः शब्दितं पारिव्राज्यं

विषयः। तदस्ति नवेति संशयः। त्रयो धर्मस्कन्धा इत्यादिवाक्यं सन्यासविधायकं न ब्रह्मसंस्थास्तुत्यर्थमाश्रमानुवादित्वात्। सन्यासविधायकं न भवति तद्बोधकलिङ्गाद्यभावात्। तथा ये चेमे इति ये चेमेऽरण्ये श्रद्धा तप इत्युपासते इति वाक्यं सन्यासबोधकं न देवयानमार्गप्रतिपादकत्वात् तथा एतमेवेति एतमेवेत्यादिवाक्यं सन्यासविधायकं न लोकसंस्तुतिपरत्वात्। अपि च नास्ति यत्याश्रमः "वीरहा वा एष देवानां योऽग्निमुद्वासयत" इति निन्दितत्वात् इति पूर्वपक्षः॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ३–४–१९

सन्यासाश्रमोऽनुष्ठेयः एतमेवेत्यादि वाक्यविहितत्वात्। सन्यासाश्रमः श्रुत्यन्तर विहितः त्रयो धर्मस्कन्धा इत्यादिवाक्यपरामृष्टत्वात्, यद्यच्छ्रास्त्रान्तरेणानूद्यते तच्छ्रास्त्रान्तरविहितं यथा निवीत प्राचीनावीतादि।

एतमेवेत्यादिवाक्यं स्तुत्यर्थं न भवति ज्ञानांगकर्मविधायकवाक्य समभिव्याहृतत्वात्। ये चेमे इत्यादिवाक्यं देवयानमार्गप्रतिपादकं न पंचाग्निविद्या विधायक वाक्यसमभिव्याहृतत्वात्।

## विधिर्वा धारणवत् ३–४–२०

त्रयो धर्मस्कन्धा इत्यादिवाक्यं आश्रमविधायकं विधायक वाक्यान्तररहितत्वे सति अपूर्वार्थत्वे सति आश्रमबोधक पदघटितत्वात्। सामान्यव्याप्तौ उपरि हि देवोभ्यो धारयतीति उपरिधारणविधायक वाक्यवत्। एवं चत्वार आश्रमा विधीयन्ते इति पक्ष उक्तः। इदानीं आश्रमत्रयानुवादेन पारिव्राज्यमेव विधीयत इत्याह यदापि परामर्श एवायमिति॥ ननु ब्रह्मसंस्थतैव विधीयते कथं पारिव्राज्यविधिरित्याशङ्क्य विचारयति। सा च किं चतुर्ष्वाश्रमेष्वित्यादिना॥ वर्णकान्तरम्। ब्रह्मसंस्थता चतुर्ष्वाश्रमेषु किं यस्य कस्यचित् आहोस्वित् परिव्राजकस्यैवेति संशयः त्रयो धर्मस्कन्धा इति वाक्ये संन्यासाश्रमपरामर्शतदभावाभ्यां संशयः।

यदि परामृष्टः तदा पूर्वपक्षः। यदि न परामृष्टः तदासिद्धान्तः। पूर्वपक्षे तपःशब्देनैव पारिव्राज्यमुच्यत इति। सिद्धान्तस्तु एकेन तपःशब्देन वानप्रस्थपारिव्राज्य संग्रहो नोचितः। एवं त्रय इति प्रकृत्य चतुर्णां परामर्शोऽप्यनुचित इति। पृथग्व्यपदेशाच्च ब्रह्मसंस्थः पूर्वोक्ताश्रमिभ्यः पृथग्भूतः। अपि च कर्मानुष्ठानव्यग्रतया आश्रमान्तराणां ब्रह्मसंस्थता न सम्भवति। तथा च ब्रह्मसंस्थशब्दस्य संन्यासाश्रमिणि रूढत्वाभावेऽपि योगात्तमेवोपस्थापयति। तथा च ब्रह्मसंस्थशब्दस्य ज्ञानप्रधानाश्रमवाचित्वा दमृतत्वकामः तमाश्रममनुतिष्ठेदिति विधिः परिणम्यते अतो न ज्ञानवैयर्थ्यप्रसङ्गः। ब्रह्मसंस्थत्वं ब्रह्मान्यविषयकव्यापारराहित्यम्। उपशम भिक्षाटनश्रवणादीनां ब्रह्मविद्योत्पत्तौ सहायत्वम्। अन्येषां चित्तविक्षेपकर त्वान्नेति श्रुतिस्मृतिभिरेते विधीयन्ते इतरेषां त्यागः इति। अत एव परिव्राजोऽपि न सर्वकर्मपरित्यागः श्रवणादीनां सत्त्वादिति निरस्तम्॥

इति परामर्शाधिकरणम्

## अधिकरणम् – ३

### स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ३–४–२१

इयमेवर्गग्निः सामेत्यादिविषयः। ताः श्रुतयः किमुद्गीथादिस्तुत्यर्था आहोस्विदुपासनाविध्यर्था इति संशयः। यथा अनुष्ठेय गार्हस्थ्यसाम्यश्रुतेः पारिव्राज्यस्यानुष्ठेयत्वं तद्वदासां श्रुतीनां जुह्वादिस्तुतिश्रुतिसाम्यात् सुतित्वमिति दृष्टान्तसंगत्या पूर्वपक्षः। इयमेवर्गग्निः सामेत्यादिवाक्यानि स्तुत्यर्थानि कर्मांगमुपादायोक्तत्वात् इयमेव जुहूरित्यादिवाक्यवत्। इति पूर्वपक्षः। सिद्धान्तस्तु इयमेवर्गित्यादि वाक्यानि उपासनाविधायकानि अबाधितोपासनारूपापूर्वार्थबोधकत्वे सत्युपासनापदघटितत्वात्। पूर्वपक्ष्यनु माने विधिवाक्यशेषत्वमुपाधिः॥

17

## भावशब्दाच्च ३–४–२२

भावो विधिः तद्वाचकशब्दादित्यर्थः। चकारः फलसमुच्चायकः। तथा च इयमेवर्गित्यादिवाक्यानि उपासनाविधायकानि विधिबोधकलिङादिप दघटितत्वात् फलवदुपासनाबोधकत्वाच्च। "उद्गीथमुपासीत" "आपयिता ह वै कामानां भवति" इत्यादि॥ एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो ओषधीनां पुरुषः पुरुषस्य वाग्वाचऋचः साम साम्नः उद्गीथः इति श्रुत्यनन्तरं स एष रसानां रसतम इत्यादिः। रसः सारः कारणत्वात् कार्यत्वाद्वा। परः परात्मप्रतीकः। परार्ध्यः परस्य ब्रह्मणोऽर्धं स्थानमर्हति ब्रह्माभेदेनोपास्य इत्यर्थ॥

इति स्तुतिमात्राधिकरणम्

## अधिकरणम् – ४

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ३–४–२३

प्रतर्दनोह दैवो दासिरिन्द्रस्य प्रियंधामोपजगामेत्यादिवेदान्तपठितख्यानानि विषयः। किमिमानि पारिप्लवार्थानि उत सन्निहित विद्याप्रतिपत्त्यर्थानीति संशयः। पूर्वत्रोद्गीथादिस्तुत्यर्थत्वादुपास्य विषय समर्पकत्व रसतमत्वादेर्ज्यायः स्तुत्यपेक्षया विधिर्ज्यायाननुष्ठानलाभाद त्युक्तम्, तथैवाख्यानानां प्रयोगशेषत्वेन न विद्यास्तावकत्वं पारिप्लवानुष्ठानलाभादिति दृष्टान्तसंगत्या पूर्वपक्षः। प्रतर्दनो दोहेत्याद्याख्यानानि पारिप्लवार्थानि आख्यानत्वात् मनुर्वैवस्वतो राजेत्याद्याख्यानवत् इति पूर्वपक्षः। पूर्वपक्षहेतुः पारिप्लवार्थत्वेन विशेष्योक्तत्वेन सोपाधिकः। अतो न साधकः। "पारिप्लवमाचक्षीत" इत्युपक्रम्य वाक्यशेषे विशिष्य कथानामुक्तत्वात्तदनुरोधेनोपक्रमस्य संकोचः करणीयः। वेदान्तगतानामाख्यानानां गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारा सन्निहितविद्याशेषत्वं सामर्थ्यलिङ्गान्न पारिप्लवार्थत्वमतो विद्याप्राधान्यमिति सिद्धान्ते फलम्॥

## तथा चैकवाक्यतोपबन्धात् ३–४–२४

वेदान्तगताख्यानानि विद्याप्रतिपत्त्यर्थानि विद्यावाक्यैकवाक्यत्वात्॥

इति पारिप्लवाधिकरणम्

## अधिकरणम् – ५

## अत एव चाग्नीन्धनाद्यनपेक्षा ३–४–२५

एवमाद्याधिकरणप्रमेयं विद्यास्वातन्त्र्यमधिकरणत्रयेण दृढीकृत्याद्या धिकरणफलमनेनोच्यते।

ब्रह्मविद्या स्वफले मोक्षे जनयितव्ये सहकारित्वेन कर्माण्यपेक्षते नवेति संशयः। तदर्थं यज्ञादीनां किं विद्याफले मोक्षेऽन्वयः उत विविदिषायामिति संशयः। पूर्वत्राख्यानानां विद्यासन्निधिना विद्याशेषत्व मुक्तम्। एवमेव प्रकरणेन यज्ञादीनां मोक्षफलक ब्रह्मविद्याशेषत्वमिति दृष्टान्तसङ्गतिः। (रत्नप्रभारीत्या) तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति श्रुत्या ज्ञानकर्मसमुच्चयेन मोक्षप्राप्तिकथनादपेक्षत इति पूर्वपक्षः। अविद्यानिवृत्तेर्मोक्ष स्वरूपत्वेन तस्या विद्ययैव सम्भवान्न कर्मापेक्षेति ब्रह्मविद्या न स्वफले कर्मापेक्षा प्रमात्वात् शुक्तितत्त्वप्रमावदिति सिद्धान्तः। अग्नीन्धनपदेन तत्साध्यकर्माणि लक्ष्यन्ते। मुक्तावेव कर्मणामामसामर्थ्यदनपेक्षा, विद्यायां तु चित्तशुद्धिद्वारा तेषामपेक्षाऽस्तीत्यधिकं वक्तुमयमुपसंहारः। ब्रह्मविद्या मोक्षे जननीये अग्नीन्धनादिसाध्यकर्ममात्रानपेक्षा, न कर्मणा न प्रजया इत्यादिना मोक्षस्य कर्माजन्यत्वेन विशेषितत्वादिति व्याख्यान्तरम्। अत एवेत्यस्य विशोषितत्वादित्यर्थः॥

इति अग्नीन्धनाद्यधिकरणम्

## अधिकरणम् – ६

### सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ३–४–२६

ब्रह्मज्ञानं स्वोत्पत्तौ कर्मापेक्षं नवेति सन्देहः। यथा ब्रह्मविद्यायाः प्रमात्वात् शुक्तिप्रमाया इव स्वफलेऽविद्यानिवृत्तौ कर्मानपेक्षेत्युक्तम्। एवं स्वोत्पत्तावपि कर्मानपेक्षा प्रमात्वादिति दृष्टान्तसंगत्या पूर्वपक्षः। ब्रह्मज्ञानमुत्पत्तौ कर्मापेक्षं न भवति। प्रमाणवस्तुतन्त्रत्वादिति पूर्वपक्षः। ब्रह्मज्ञानमुत्पत्तौ कर्मापेक्षं तमेतमित्यादिश्रुत्या तथा प्रतिपादितत्वात्। नन्वत्र विविदषन्तीति पञ्चमलकारेण विविदिषां भावयेयुरिति सन्नर्थेच्छैव भाव्यतया प्रतीयते। तां विषयसौन्दर्यलभ्यतया उल्लङ्घ्य वेदनं चेद्भाव्यतयोच्यते तर्हि वेदनमप्युल्लङ्घ्य तत्फलं मोक्ष एव कर्मभिः भाव्यः किं न स्यादित्यत आह – विविदिषा संयोगाच्चैषामुत्पत्तिसाधन भावोऽवगम्यते इति॥ इष्यमाणतया विद्यायाः शब्दतः फलत्वभानादश्रुत मोक्षो न फलमन्यथा काष्ठैः पचति इत्यत्र काष्ठानां पाकफलतृप्तिहेतुत्वप्रसंगा दित्यर्थः। अश्ववत्। यथा अश्वो लांगलाकर्षणे न युज्यते रथचर्यायां तु युज्यते तद्वत्।

ज्ञानोत्पत्तौ बहिरङ्गसाधनान्युक्त्वाऽन्तरङ्ग साधनान्याह———

### शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ३–४–२७

यद्यप्यत्र विविदषन्तीति वर्तमानापदेशान्न विधिः, तथापि विद्यार्थीशमदमाद्युपेतस्तु स्यात्। तदङ्गतया विद्यांगतया तद्विधेः। तस्माच्छान्तो दान्त इत्यादि। तेषां विहितानामवश्यानुष्ठेयत्वात् इत्यर्थः। यज्ञादीनां विद्यासाधनत्वरूपार्थस्य अपूर्वत्वादवान्तरवाक्यभेदेन विधिः स्वीक्रियते ब्रह्मविद्यावाक्येन महावाक्यैकवाक्यता च। तथा च यज्ञादीनि शमादीनि च सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तौ अपेक्षितव्यानि।

दृष्टविक्षेपनिवृत्तिद्वारा शमादीनां ज्ञानार्थत्वादनुवृत्तिः। कर्मणामदृष्टार्थत्वान्नानुवृत्तिरित्युभयोर्भेदः॥

इति सर्वापेक्षाधिकरणम्

## अधिकरणम् – ७

### सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ३–४–२८

"न ह वा एवं विदि किंचनानन्नं भवति" इति छान्दोग्यवाक्यं विषयः। तत्र प्राणोपासकस्य किमिदं सर्वान्नानुज्ञानं विद्याङ्गं विधीयते उत स्तुत्यर्थं संकीर्त्यते इति संशयः। यथा पूर्वत्र विविदषन्तीति वर्तमानापदेशोऽप्यपूर्वत्वात् पंचमलकारेण विधिः कल्पितः एवमत्रापि अपूर्वत्वाद्विधिरिति दृष्टान्तसंगत्या पूर्वपक्षः। न ह वा एवं विदीतिवाक्यं प्राणविद्योद्देशेन सर्वान्नभोजनविधायकं असति बाधकेऽपूर्वत्वात् इति पूर्वपक्षः। न ह वा एवं विदीतिवाक्यं प्राणविद्योद्देशेन सर्वान्नभोजनविधायकं न विधायकलिङाद्यघटितत्वात्। प्रकृते बाधकस्य भक्ष्याभक्ष्यशास्त्रस्य विद्यमानत्वात् पूर्वपक्षहेतुरसिद्धः। श्वादिमर्यादमन्नं विधेयं न अशक्यत्वात्। प्राणात्यये सर्वमन्नं सुरावर्जं, तस्य विद्वासमविद्वांसं वा प्रति। अदयनीयत्वेन अनुमतिः न स्वस्थं प्रति तद्दर्शनात् चाक्रायणोपाख्याने उषस्तेः आपत्काल एव हास्तिपकोच्छिष्ट कुल्माषभक्षणस्य तद्दर्शनादिति सूत्रार्थः॥

### अबाधाच्च ३–४–२९

भक्ष्याभक्ष्यशास्त्रस्य अबाधाच्च अर्थवादमात्रमित्यर्थः। अन्यथा सामान्यशास्त्रं विशेषपरतया नीयमानं बाधितं स्यादिति भावः।

### अपि च स्मर्यते ३–४–३०

अपि चापदि विदुषोऽविदुषश्च सुरावर्जं सर्वान्नभक्षणं स्मर्यते – जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा। मद्यं नित्यं ब्राह्मणो वर्जयेदिति च॥

## शब्दश्चातोऽकामकारे ३–४–३१

अकामकारे स्वेच्छाकृतप्रवृत्तिनिरासे शब्दः न सुरां पिबेदिति कठसंहितायां श्रूयते। अतः सर्वान्नानुमतिरर्थवादमात्रमिति सिद्धम्। सर्वं प्राणान्नमिति चिन्तनम् स्तुत्यर्थमित्यर्थः। वामदेव्यसाम्नि मैथुनदृष्टिर्विहिता। तदङ्गतया न कांचन परिहरेत् तद्व्रतमिति वाक्येन कामतः समीपमागतां कामपिस्त्रियं न परिहरेत्। तस्याः कामं सम्पादयेत् इति नियमो विहितः॥

इति सर्वान्नानुमत्यधिकरणम्

# अधिकरणम् – ८

## विहितत्वाच्चाश्रमकर्मापि ३–४–३२

यथा शास्त्रान्तरविरोधात् सर्वान्नत्ववचनं स्तुतिरेवं यज्ञादीनां नित्यत्वश्रुतिविरोधात् विद्यार्थत्ववचनं स्तुतिरिति दृष्टान्तसंगतिः। (मुमुक्षुणा न कर्तव्यानि) आश्रमकर्माणि विद्यासाधनानि न भवन्ति, अमुमुक्षुकर्तव्यत्वेनोक्तत्वात् मुमुक्षुप्रत्यविहितत्वाच्च। यदि मुमुक्षुणापि कर्तव्यानि स्युः तर्हि नित्यत्वानित्यत्वरूप विरुद्धधर्माक्रान्तानि स्युः इति पूर्वपक्षः। आश्रमकर्माणि विद्यासाधनानि तत्साधनत्वेन विहितत्वात्। पूर्वपक्षितर्के आपाद्यव्यतिरेक निर्णयो नास्तीति बाधको न। पूर्वपक्षहेतुः स्वरूपासिद्धः।

ननु एकस्य वाक्यस्योभयार्थत्वे अर्थद्वयस्य एकेन बोधयितुमशक्यतया विरोधः। प्रकृते तु यावज्जीवादिवाक्येन यज्ञानां नित्यत्वं विविदिषावाक्येन विविदिषार्थत्वमिति वचनद्वयेनार्थद्वयबोधने कथं विरोधः स्वादिरतायाः खादिरे पशुं बध्नाति खादिरं वीर्यकामस्य नित्यत्वकाम्यत्वयोर्बोधनेऽपि विरोधाभावादिति चेन्न। एवं रीत्या प्रमाणविरोधपरिहारेऽपि प्रमेयविरोधपरिहारो न सम्भवति।

एकस्यैवार्थस्य आवश्यकत्वानावश्यकत्वयोरसम्भवादिति पूर्वपक्षाशयः। सिद्धान्तिनस्तु एकस्याप्युपाधिभेदेनावश्यकत्वमनावश्यकत्वञ्चा विरुद्धम् जीवननिमित्तकत्वेनावश्यकत्वं विविदिषा साधनत्वाकारेणानावश्यकत्वमिति।।

## सहकारित्वेन च ३–४–३३

सह मिलित्वा शुद्धिद्वारा विद्यां कुर्वन्तीति सहकारीणि कर्माणि तेषां भावस्तत्त्वम् तेनेत्यर्थः। विद्याया अविधेयत्वान्नांगापेक्षा, मोक्षस्यासाध्यत्वाच्च न कर्मपेक्षा तथा च विद्योत्पत्तावेवाश्रमकर्माण्युपयुज्यन्त इत्यर्थः ॥

## सर्वथापि त एवोभयलिङ्गात् ३–४–३४

ननु कर्मकांण्डस्य नित्याग्निहोत्रादिभ्यो भिन्ना एव यज्ञादयो विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते प्रकरणकभेदस्य भेदकत्वात् कथं तेषामुभयार्थत्वमित्याशङ्का परिहारार्थमिदं सूत्रम्। सर्वथापि, नित्यत्वेन विद्यार्थत्वेन चानुष्ठेया यज्ञादयः त एव न भिन्नाः उभयलिङ्गात्। ''यज्ञेन विविदषन्ति'' इत्येकं लिङ्गम्। अत्र हि यज्ञेनेत्यादि सुबन्तानामाख्यातेनैकार्थत्वाभावात् सिद्धव्यवहितकर्मानुवादकत्वात् तेषामेव कर्मणां ज्ञानार्थत्वविधिरिति ज्ञायते। ''अनाश्रितः कर्मफलं कार्यं कर्म करोति यः'' इति स्मृतिलिङ्गाच्च॥

## अनभिभवं च दर्शयति ३–४–३५

आश्रमधर्मः रागादिनिवृत्तिद्वारा विद्यासाधनभूतः आश्रमधर्मत्वात् ब्रह्मचर्यवत्। (एष ह्यात्मा न नश्यति यं ब्रह्मचर्येण निन्दते)। अनेन सूत्रेण ब्रह्मचर्याद्याश्रमधर्माणां सहकारित्वमेव दृढीकृतम्। आत्मनाशपदेन आत्मज्ञाननाशो विवक्षितः। यथाकथञ्चिदुत्पन्नमपि आत्मज्ञानं ब्रह्मचर्याद्यभावे साक्षात्कारपर्यन्ततां न प्राप्नोति स एव तस्य नाशः ॥

इति आश्रमकर्माधिकरणम्

# अधिकरणम् – ९

## अन्तरा चापि तु तद्दृष्टेः ३–४–३६

यदि नित्यानामेव यज्ञादीनां विनियोगभेदेन विद्यार्थत्वं, तर्हि तद्रहितानां विधुरादीनां न विद्याधिकार इति प्रत्युदाहरणसंगतिः। विधुरादीनामिति। विधुरः मृतपत्नीकः। आदिपदेन सपत्नीक एव अन्धपङ्ग्वादिः अग्निहोत्रकर्मानधिकृतः। अन्यतमाश्रमप्रतिपत्तिहीनानामित्यनेन समाप्तब्रह्मचर्या अकृतदारपरिग्रहाः स्नातकाः विवक्षिताः। विधुरादयः विद्यायामधिक्रियन्ते न वेति जपयज्ञदानादिकर्मसद्भावादनाश्रमित्वनिन्दनाच्च संशयः। विधुरकर्म विद्यासाधनं न आश्रमिकर्मत्वाभावात् इति पूर्वपक्षः। पूर्वपक्षहेतुः रैक्वादिषु व्यभिचरितः अतो न साधकः। तथा च विधुरादिकृतानामपि जपादीनां विद्यासाधनत्वमस्तीति सिद्धान्तः। अन्तरा – आश्रममन्तरा विनापि वर्तमानानामपि विद्यायामधिकारो वर्तते। तद्दृष्टेः विद्याधिकारस्य रैक्वादीनां दर्शनात्॥

## अपि च स्मर्यते ३–४–३७

संवर्तप्रभृतीनामनाश्रमिणामपि योगित्वं स्मर्यते॥ नन्वनाश्रमिणां विद्याहेतुकर्माभावादनधिकार इत्यत आह—

## विशेषानुग्रहश्च ३–४–३८

तेषामपि जपोपवासदेवताराधनादिभिः धर्मविशेषैः विद्यायामनुग्रहोऽस्ति। जन्मान्तरानुष्ठितैरित्यादिभाष्याभिप्रायः वर्णकान्तरम्। विधुरादयः विद्याधिकारिणो न भवन्ति आश्रमकर्माभावात् इति शङ्कायां जन्मान्तरे आश्रमकर्मणः सत्त्वात् पूर्वोक्तहेत्वसिद्धिः इति॥

## अतस्त्वितरज्ज्यायो लिंगाच्च ३–४–३९

तर्ह्याश्रमित्वं वृथेत्यत आह–तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति पुण्यकृत्त्वलिङ्गादाश्रमित्वं ज्यायः। पुण्योपचये शीघ्रं विद्यालाभात्

अनाश्रमस्य निन्दितत्वाच्च॥ तैजसः निर्धूतपापः तेन देवयानमार्गेण॥

इति विधुराधिकरणम्

## अधिकरणम् – १०

### तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ३–४–४०

प्रच्युत सन्न्यासिकर्माणि विद्यासाधनानि वा नवेति संशयः। यथा आनाश्रमिकर्मणां विद्यासाधनत्वमुक्तं तथा सन्न्यासाश्रमात् प्रच्युत्य पूर्वाश्रमं प्राप्तस्य कर्माप्यस्त्विति दृष्टान्तसंगतिः। प्रच्युतसन्न्यासिकर्माणि विद्यासाधनानि कर्मत्वात् विधुरकर्मवत् इति पूर्वपक्षः। सिद्धान्तस्तु पूर्वपक्षिहेतुः अपतितकर्मत्वेन सोपाधिकः। प्रच्युतसन्न्यासिकर्माणि न विद्यासाधनानि पतितकर्मत्वात्। तद्भूतस्य प्राप्तोत्तमाश्रमस्य अतद्भावः तस्मात्प्रच्युतिः न सम्भवति। नियम, अतद्रूप अभावेभ्यः। नियमः सन्न्यासी गृहस्थाश्रमी न भवति तत्त्वेन निषिद्धत्वात्। अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषदिति॥ अतद्रूपता तद्रूपतुल्यत्वाभावः। सन्न्यासी गृहस्थाश्रमी न भवति अप्रामाणिकावरोहकत्वात्। ब्रह्मचर्यं समाप्य गृही भवेत्, ब्रह्मचर्यादेव प्रव्रजेत् इतिवत् अवरोहप्रतिपादक वचोऽभावात्। अभावः –सन्न्यासी गृहस्थाश्रमी न भवति शिष्टानुष्ठीयमानावरोहकत्वाभावात्। आचाराभाव इत्यर्थः। सन्न्यासिनः पूर्वाश्रमप्राप्तिः (प्रच्युतिः) धर्मो न भवति तं प्रति विहितत्वाभावात्॥ जैमिनेरपीत्यनेन संप्रतिपत्तिरुच्यते प्रतिपत्तिदार्ढ्याय॥

इति तद्भूताधिकरणम्

# अधिकरणम् – ११

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ३–४–४१

प्रमादादवकीर्णिनो नैष्ठिक ब्रह्मचारिणः प्रायश्चित्तमस्ति नवेति सन्देहः। पूर्वपक्षे कृत प्रायश्चित्तस्य कर्म न विद्याहेतुः सिद्धान्ते तद्धेतुरिति फलम्। यथा प्रच्युतसन्न्यासिकर्म न विद्याहेतुः एवं कृतप्रायश्चित्तस्याप्यवकीर्णिनो न विद्याहेतुरिति दृष्टान्तसङ्गतिः। नैष्ठिकब्रह्मचारिकृतप्रायश्चित्तं विद्यासाधनं न अप्रतिसमाधेय पतननिष्ठत्वात् प्रच्युत सन्न्यासिकृतकर्मवत् इति पूर्वपक्षः। ''आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः। प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा॥''

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ३–४–४२

पूर्वपक्षहेतुः स्वरूपासिद्धः। अवकरणस्योपपातकत्वात्। नैष्ठिकब्रह्मचारिकृतप्रायश्चित्तं विद्यासाधनं भवति विहितत्वात्। अवकरणं प्रतिसमाधेयम् उपपातकत्वात् ब्रह्मचारिकृतमांसादिभक्षणवत्। एके आचार्याः उपपूर्वमेव पातकमिदं मन्यन्ते। अत उपकुर्वाणस्येव नैष्ठिकस्यापि भावं प्रायश्चित्तस्य इच्छन्ति। अशनवत् मांसादिभक्षणवत्। प्रायश्चित्तभावाभावप्रसिद्ध्योः समत्वेऽपि भावप्रसिद्धिरादर्तव्येत्यत्र सम्मतिमाह – तदुक्तमिति – प्रमाणलक्षणे – समा विप्रतिपत्तिः स्यात्। शास्त्रस्थावातन्निमित्तत्वात् इति। वानप्रस्थो दीक्षाभेदे इति स्मृतौ महाकक्षमित्यस्य बहुतृणकाष्ठं देशमित्यर्थः। जलदानादिना वर्धयेदित्यर्थः। यतिस्तु सोमलताभिन्नं वर्धयेत्। स्वशास्त्रसंस्कारः परिव्राजकविषयशास्त्राभिहितः संस्कारः ध्यानादिः स च कर्तव्यः॥

इति आधिकारिकाधिकरणम्

## अधिकरणम् – १२

### बहिस्तूभयथापि स्मृतेराचाराच्च ३–४–४३

कृतप्रायश्चित्तैः सह कृतश्रवणादिकं ज्ञानसाधनं नवेति संशयः। यथा प्रच्युतस्य प्रायश्चित्तेनैव शुद्धत्वात् तत्कृतं कर्म विद्यासाधनमित्युक्तं तथा कृतप्रायश्चित्तेन सहश्रवणादिकं विद्यासाधनमिति दृष्टान्तसंगतिः। प्रच्युतैः कृतप्रायश्चित्तैः सहकृतश्रवणादिव्यवहारः विद्यासाधनं शुद्धैः सहकृतत्वादिति पूर्वपक्षः। तादृशव्यवहारः विद्यासाधनं न शुद्धत्वेन लोकसिद्धेः सहकृतत्वाभावात्, शिष्टैरनाचर्यमाणत्वाच्च। इति सिद्धान्तः। पापानां शक्तिद्वयम्। एकां इहाशुद्धिकरी अन्या परलोकाशुद्धिकरी। द्वितीयायाः प्रायश्चित्तेन निवृत्त्या नरकादिकं न भवति। ऐहिकाशुद्धिस्तु न निवर्तते वचनात्। अतः तैः सव्यवहारो न भवति। नैष्ठिकानां वनस्थानां यतीनाञ्चावकीर्णिनाम्। शुद्धानामपि लोकेऽस्मिन् प्रत्यापत्तिर्न विद्यते॥

इति बहिरधिकरणम्

## अधिकरणम् – १३

### स्वामिनः फलश्रुतेरित्यात्रेयः ३–४–४४

अंगेषु उपासनेष्विति व्यधिकरणे सप्तम्यौ। अंगावबद्धोपासनाविषयः। किं नानि यजमानकर्तृकाणि उत ऋत्विक्कर्तृकाणीति संशयः। पूर्वत्र कृतप्रायश्चित्तः संव्यवहार्यः इत्युत्सर्गस्य निन्दातिशयवचनेन बाधः कृतः। एवं यो यदंगकर्ता स तदाश्रितस्य कर्ता इत्युत्सर्गस्य कर्तुः फलश्रुत्या बाधो भवत्विति दृष्टान्तसंगतिः। अंगावबद्धोपासनाः यजमानकर्तृकाः यजमानाश्रितफलजनकत्वात्, ऋत्विक्कर्तृका न भवन्ति यागाधिकृताधिकार त्वात्। ऋत्विग्गामिफलभिन्नफलजनकत्वादिति पूर्वपक्षः॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ३-४-४५

अंगावबद्धोपासनाः ऋत्विक्कर्तृकाः ऋत्विक्कर्तृकांगाश्रितत्वात्। स्वाश्रयांगाधिकृताधिकारत्वात्। यत् यदधिकृताधिकारिकं तत् तत्कर्तृकम् अप्प्रणयनाधिकृताधिकारिकगोदोहनकरणकाप्प्रणयनवत्। ऋत्विजः अंगकर्तारः अंगकरणार्थं परिक्रीतत्वात्। ऋत्विजः फलभोगिनो न भवन्ति तत्त्वे प्रमाणाभावे सति परार्थत्वात्॥

## श्रुतेश्च ३-४-४६

ऋत्विक्कर्तृककर्मोपासनादिकं यजमानगामिफलजनकं तत्त्वेन श्रूयमाणत्वात्। "यां वै काञ्चन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच" इति श्रुतिः॥

इति स्वाम्यधिकरणम्

## अधिकरणम् - १४

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ३-४-४७

बाल्यं च पण्डित्यं च निर्विद्याथ मुनिरिति बृहदारण्यक वाक्यं विषयः। तत्र मौनं विधीयते नवेति संशयः। यथा तं ह बकोदाल्भ्य इति वाक्यशेषात् अंगोपासनं ऋत्विक्कर्तृकमित्युक्तं तथा अथ ब्राह्मण इति विधिरहितवाक्यशेषात् अथ मुनिरिति न विधिरिति प्रत्यवस्थानाद्दृष्टान्तसंगतिः। अथ मुनिरितिवाक्यं विद्यासाधनत्वेन मौनविधायकं न विधिप्रत्ययरहितत्वात् (१)। पाण्डित्यं निर्विद्येति वाक्यप्राप्तमौनानुवादकत्वात् (२)। अथमुनिरिति वाक्यं अर्थवादरूपं अथ ब्रह्मणइत्यर्थवाद समभिव्याहृतत्वात् (३)। इति पूर्वपक्षः। इदं वाक्यं निदिध्यासनविधायकं अपूर्वार्थत्वे सति मननबोधकपदघटितत्वात्। ननु पाण्डित्यशब्देनैवेति भाष्येण स्वरूपासिद्धिराशङ्क्यते। पण्डितमुनिशब्दार्थयोर्भिन्नार्थत्वेन परिहरति नैष दोष इति॥ पूर्वपक्षिप्रथमहेतुरप्रयोजकः।

उपरि हि देवेभ्यो धारयतीति वाक्ये व्यभिचरितश्च। द्वितीयहेतुः स्वरूपासिद्धः। तृतीयहेतुरप्रयोजकः। अर्थवादसमभिव्याहृतविधिषु व्यभिचरितश्च। मौनं विधेयं निर्वेदनीयत्वेनोक्तत्वात्। सहकार्यन्तरस्य विद्यासहकारिणः मौनस्य (निदिध्यासनस्य) बाल्यपाण्डित्यवद्विधिः। गार्हस्थ्यमाचारकुलं मौनं वानप्रस्थमिति स्मृतौ इतराश्रमसमभिव्याहारान्मौनस्य ज्ञानप्रधान सन्यासाश्रमस्य लक्षणया ग्रहणेऽपि अत्र श्रवणाद्यपेक्षया तृतीयं निदिध्यासनमेव ग्रहणीयम्। कस्य मौनविधिरित्याशङ्कायां तद्वत इति। विद्यावतः सन्यासिन इत्यर्थः। आत्मानं विधित्वाथ पुत्राद्येषणाभ्यो व्युत्थाय च भिक्षाचर्यं चरन्तीति तदधिकारात्। निदिध्यासनस्य साक्षात्कारहेतुत्वं प्राप्तमेवेति कथं विधिरित्याशङ्कायां पक्षेणेति। यस्मिन्पक्षे भेददर्शन प्राबल्यान्न प्राप्नोति तस्मिन्पक्षे इत्यर्थः।

विध्यादिवत् – यत् अपूर्वार्थत्वे सति यदर्थबोधकपदघटितं तत्तदर्थविधायकं दर्शपूर्णमासांगत्वेनान्वाधानविधायकवाक्यवत्॥

## कृत्स्नभावात्तु गृहिणोपसंहारः ३–४–४८

गृहस्थाश्रमेणोपसंहारात् सन्न्यासाश्रमो नास्तीति शंकाया यज्ञादीनां शमादीनाञ्च गृहस्थाश्रमे कार्त्स्न्येन सम्भवात्तेनोपसंहारो न तु सन्न्यासाश्रमाभावादिति परिहारः॥

## मौनवदितरेषामप्युपदेशात् ३–४–४९

सन्न्यासगृहस्थाश्रमयोरेव पूर्वसूत्रोक्तत्वेन इतरयोरभावभ्रमः स्यादिति तत्परिहारार्थं सूत्रम्। वृत्तिभेदाभिप्रायेणेतरयोरिति वक्तव्ये बहुवचनमुक्तम्। वृत्तिभेदः प्रकारभेदः। ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। चत्वार आश्रमाः प्रोक्ता एकैकस्तु चतुर्विध इति वचनात्। प्रकारभेदः ब्रह्मविद्याभरणे द्रष्टव्यः॥

इति सहकार्यन्तराधिकरणम्

# अधिकरणम् – १५

## अनाविष्कुर्वन्नन्वयात् ३–४–५०

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदिति वाक्यं विषयः। अत्र किं बालस्य कर्म कामचारादिकं विधीयते अथवा अप्ररूढेन्द्रियत्वादिरूपभावशुद्धिरिति बालकर्मत्वाविशेषात्संशयः। मौनशब्दस्य ज्ञानातिशये निदिध्यासने प्रसिद्धत्वाद्यथा निदिध्यासनं विधेयमित्युक्तं एवं बाल्यशब्दस्य कामचारादौ प्रसिद्धत्वात् तद्विधेयमिति दृष्टान्तसंगत्या पूर्वपक्षः। बाल्येनेत्यादिवाक्यं कामचारादिविधायकं प्रसिद्ध बालकर्मबोधकत्वे सति तथा विधायकत्वेन प्रतीयमानत्वादिति पूर्वपक्षः। पूर्वोक्तवाक्यं अप्ररूढेन्द्रियत्वादिविधायकं शास्त्रान्तराविरूद्धार्थबोधकत्वे सति बाल्यस्य विद्यासाधनतया विधीयमानत्वेन प्रतीयमानत्वात्। अव्यक्तलिंगोऽव्यक्ताचार इति श्रुतेः। अनाविष्कुर्वन् आत्मानमप्रख्यापयन् भावशुद्धो भवेदिति विधीयते। तावन्मात्रस्य प्रधाने ज्ञानाभ्यासेऽन्वयात् अनुकूलत्वादित्यर्थः। इदं वाक्यं शास्त्रविरुद्धार्थबोधकं न शास्त्राविरुद्धार्थ बोधकत्वेनोपपद्यमानत्वात्।

इति अनाविष्काराधिकरणम्

# अधिकरणम् – १६

## ऐहिकमप्यप्रस्तुत प्रतिबन्धे तद्दर्शनात् ३–४–५१

इत्थं सन्न्यासादिबाल्यान्तं साधनजातमुक्त्वा तत्साध्य विद्याजन्म विचार्यत इति हेतुहेतुमद्भावसङ्गतिः। पूर्वपक्षे श्रवणादेर्विद्यासाधनत्वासिद्धिः सिद्धान्ते विलम्बेऽपि तत्सिद्धिरिति फलभेदः। तत्र किं श्रवणादिभिरिहैव जन्मनि विद्योत्पत्तिरुतामुत्रापीति संशयः। विद्या ऐहिकफलभूता ऐहिक विद्यार्थिक्रियमाणश्रवणादिसाध्यत्वात्। यत् यत्कालिकफलार्थि क्रियमाणकर्मसाध्यं तत् तत्कालिकफलभूतं कारीर्यादि फलभूत वृष्ट्यादिवदिति पूर्वपक्षः। आमुष्मिकवृष्टौ कारीरीफले व्यभिचारः। ऐहिकत्वप्रार्थनाभावात्

स्वरूपासिद्धश्च पूर्वपक्षहेतुरसाधकः। फलोन्मुखं विद्याविरुद्धं कर्म प्रस्तुतप्रतिबन्धः। तदभावे ऐहिकमपि। तत्सत्त्वे तु जन्मान्तर एव। तद्दर्शनात्। "गर्भ एवैतच्छाया नो वामदेवः प्रतिपेदे" इति। शृण्वन्तोऽपि न विदुरित्युक्तेः प्रतिबन्धसिद्धिः। तथा इह जन्मनीति न नियमः प्रतिबन्धसत्त्वे जन्मान्तरेऽपीति प्रतिबन्धाप्रतिबन्धाभ्यां ऐहिकत्वामुष्मिकत्व नियम इति सिद्धम्।

इति ऐहिकाधिकरणम्

## अधिकरणम् – १७

### एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ३–४–५२

मुक्तिः विषयः। तस्याः किं विद्यावत् विशेषनियमोऽस्ति नवेति संशयः। पूर्वपक्षे कर्मसाध्या मुक्तिः, सिद्धान्ते ज्ञानाभिव्यज्येति फलम्। यथा विद्याया ऐहिकामुष्मिकत्वनियम उक्तः तथा तत्फलेऽपि कश्चिदुत्कर्षादिविशेषनियमः स्यादिति दृष्टान्तसंगत्या पूर्वपक्षः। मोक्षरूपफलं यत्किञ्चिद्व्यवस्थावत् फलत्वात् विद्यारूपफलवदिति पूर्वपक्षः। प्रतिबन्धकतदभाववत्त्वेन सोपाधिकः पूर्वपक्षहेतुः। किञ्च मोक्षे ऐहिकत्वादिव्यवस्था न सम्भवति। ज्ञानेनाज्ञाननिवृत्तौ प्रतिबन्धकस्यैवाऽसम्भवात्। उत्कर्षापकर्षरूपव्यवस्थापि न सम्भवति। मोक्षकारणविद्यायाः मोक्षस्य वा उत्कर्षापकर्षयोरभावादिति॥

मुक्तिः सातिशया सातिशयसाधनसाध्यत्वात्। विद्याफलत्वात् सगुणमुक्तिवत्। पूर्वपक्षः। आद्यः एतज्जन्म जन्मान्तरानुष्ठित यागसाध्य स्वर्गेऽनैकान्तिकः। द्वितीयः सगुणत्वेन सोपाधिकः। श्रुतिबाधश्च॥

इति मुक्तिफलानियमाधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
तृतीयाध्यायस्य तचुर्थः पादः
इति तृतीयोऽध्यायः॥



# अथ चतुर्थोऽध्यायः

## अधिकरणम् – १

### आवृत्तिरसकृदुपदेशात् ४–१–१

साधनं निरूप्य फलं निरूप्यत इति अध्याययोः हेतुहेतुमद्भावः सङ्गतिः। पूर्वं श्रुत्युक्तं सन्यासादिसाधनजातमुक्तम्। इदानीं फलार्थापत्तिलभ्यमावृत्त्यादिकमश्लेषाधिकरणात् प्राक् चिन्त्यते। तदारभ्य जीवन्मुक्तिः ततो द्वितीयपादे उत्क्रान्तिः, तृतीये अर्चिरादिमार्गस्य गन्तव्यस्य च निर्णयः। चतुर्थे ज्ञानोपासनयोः फलनिर्णयः॥

अस्याधिकरणस्य श्रवणादिसाधनं विषयः। किं श्रवणादिकमावर्तनीयं नवेति संशयः। श्रौतात्मधीसाधनफलविचारात्मकत्वात् श्रुतिशास्त्राध्याय पादसङ्गतयः। ब्रह्मप्रत्ययः नावर्तनीयः अदृष्टार्थत्वात् प्रयाजादिवदिति पूर्वपक्षः। ब्रह्मप्रत्ययः आवर्तनीयः असकृदुपदिश्यमानत्वात् इति सूत्राल्लभ्यते। श्रवणादिकम् आवर्तनीयं दृष्टफलत्वात् अवघातवत्। श्रवणं प्रमाणासंभावनानिवर्तकम्। मननं प्रमेयासंभावनानिवर्तकम्। निदिध्यासनं विपरीतभावनानिवर्तकम्। अपि चेति॥ साध्यं फलं पूर्वपूर्वप्रत्ययानवगत विशेषविषयकत्वरूपं येषु तेष्वित्यर्थः। अथापि स्यात् सामान्यविषयम्। आवृत्तिजन्यज्ञानविषयत्वयोग्यस्वरूपविशेषाविषयम्। अपि चेति॥ उपासना आवर्तनीया आवृत्तिघटितार्थप्रतिपादकत्वात्॥

### लिङ्गाच्च – ४–१–२

श्रवणादिकमावर्तनीयं प्रत्ययत्वात्। उद्गीथप्रत्ययवत्। अत्राहेत्यादिब्रह्म प्रत्ययः नावर्तनीयः अखण्डरूपब्रह्मप्रकाशफलकत्वात्। परिहारस्तु साक्षात्कारकरणस्य अन्तःकरणस्य भावनाप्रचयसाहित्यार्थं धात्वर्थोपसंगृही तावृत्तिगर्भस्य निदिध्यासनस्योपयोगः। एवं बहुविधशंकानिराकरणार्थं

मननावृत्तिः। (वाक्याभ्यासानभ्यासाभ्यामेकजातीयपरोक्षज्ञाने जन्यमाने प्यावृत्तेरतिशयकरत्वं दृष्टं चेत् किमु वक्तव्यमपरोक्षज्ञानेऽतिशयकरी आवृत्तिरित्याह – न हि दृष्टेनुपपन्नं नामेति भाष्यम्।) लोके यथा गहनवाक्येषु वाक्यार्थबोधार्थमावृत्त्यपेक्षा दृष्टा तथेहापि श्रवणावृत्तिरपेक्षितेति। विरुद्धांशप्रहाण्या जीवैक्येन बोधनीयं ब्रह्म निर्विशेषमिति तद्विषयायां आवृत्तिसाध्यविशेषविषयत्वासम्भवात् आवृत्ति र्व्यर्थेति प्रथममाक्षेपः। आवृत्त्यभावे तद्विषयवृत्तिरेव नोदीयादिति ततः सिद्धान्तिशङ्का। सकृच्छ्रुतान्नोदेतीति चेदावृत्तावपि नोदीयादिति पुनराक्षेपः। ततः शाब्दज्ञानार्थमावृत्त्यनपेक्षायामपि साक्षात्कारार्थं तदपेक्षास्तीति तत्परिहारः। स्मृतिरपीति। यस्त्वात्मरतिरिति। प्रियविरहित नायिकाया नायकानुसन्धानमभिलाषयुक्ततया रतिरुच्यते। यस्य साधकस्य तादृशमात्मन्यनुसन्धानं स आत्मरतिः। प्राथमिक स्वरूपानन्दसाक्षात्कारः तृप्तिः। स एव जीवन्मुक्ते सन्ततः सन्तोषः।

इति आवृत्त्यधिकरणम्

# अधिकरणम् – २

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ४–१–३

ध्यानावृत्तिकाले किमहं ब्रह्मेति ध्यातव्यमुत मदन्यः मत्स्वामीत्यादि रूपेणेति ऐक्यभेदप्रमाणाभ्यां संशयः। श्रवणाद्यावृत्तिमुपजीव्य विचारादुप जीव्योपजीवकभावस्संगतिः। अथवा ब्रह्मात्मैक्यसाक्षात्काराय श्रवणाद्यावर्त नीयमित्युक्तम्। ब्रह्मात्मैक्यमेव नास्तीति श्रवणाद्यावृत्त्याक्षेपात् आक्षेपसङ्गतिः। ब्रह्म अहमभेदेन न ग्राह्यं विरुद्धधर्माक्रान्तत्वात्। तत्त्वमसीतिवाक्यं मनो ब्रह्मेतिवत्प्रतीकोपासनापरमिति पूर्वपक्षः। ब्रह्म अहमभेदेन ग्राह्यम् तथा जाबालैरुक्तत्वात्, जीवं प्रत्यात्मत्वेन गृह्यमाणत्वात्। त्वं वा अहमस्मि भगवो देवते इति वाक्यं मुख्याभेदप्रतिपादकं विशेष्यविशेषणभावव्यत्यासेन द्विरुच्चार्यमाणत्वात्.

व्यतिरेकेण आदित्यो ब्रह्मेति वाक्यवत्। ब्रह्म अहमन्यत्वेन न ग्राह्यं निन्दितभेददृष्टिकत्वात्। विरुद्धधर्माक्रान्तत्वादिति पूर्वपक्षहेतुः यदि पारमार्थिकविरुद्धधर्माक्रान्तत्वरूपः तदा असिद्धः। यदि व्यावहारिक धर्माक्रान्तत्वरूपः तदा अप्रयोजकः एवं च सत्यद्वैतेश्वरस्येति भाष्ये सतीत्यस्य सत्येत्यर्थः।

इति आत्मत्वोपासनाधिकरणम्

## अधिकरणम् – ३

### न प्रतीके न हि सः ४–१–४

मनो ब्रह्मेत्युपासीत। आदीत्यो ब्रह्मेत्यादेशः इत्यादि प्रतीकोपासना विषयः। किं तत्राप्यात्मग्रहः कर्तव्यो न वेति संशयः। यथा ब्रह्मणा सहाभेदसत्त्वादहंग्रह उक्तः, एवं ब्रह्मविकारतया जीवाभिन्नब्रह्माभेदसत्त्वात् प्रतीकेष्वप्यहंग्रहः कार्य इति दृष्टान्तसंगत्या पूर्वपक्षः। प्रतीकमात्मत्वेन ग्राह्यं उपासनाविषयत्वात् ब्रह्मवत् आत्माभिन्नत्वाच्च इति पूर्वपक्षः। प्रतीके अहंग्रहो न कर्तव्यः। न हि सः उपासकः प्रतीकानि आत्मनानुभवति। अतोऽनुभवबलादहंग्रहो न भवति। आत्माभेदस्य श्रुतत्वादिति चेत्तत्राह – यत्पुनर्ब्रह्मविकारत्वादिति। आत्माभिन्नत्वादिति हेतुराश्रयासिद्धः। ब्रह्मव्यतिरेकेण प्रतीकं नास्तीति निश्चयस्य प्रतीके ब्रह्माभेदज्ञानकारणतया तादृश निश्चयकाले प्रतीकस्य पक्षस्यैवासत्त्वादाश्रया सिद्धिः। मन आत्मत्वेन ग्राह्यं आत्माभिन्नब्रह्माभिन्नत्वेन ग्रहणादिति तु स्वरूपासिद्धः। मन आदि प्रतीकं आत्मत्वग्रहविषयो न भवति आत्मभिन्नत्वेन गृह्यमाणत्वात् इति सिद्धान्तः। प्रासंगिकी पादसंगतिः॥

इति प्रतीकाधिकरणम्

# अधिकरणम् – ४

## ब्रह्मदृष्टिरुत्कर्षात् ४–१–५

प्रतीकोपासनानि विषयः। अत्र किं ब्रह्मणि प्रतीकदृष्टिरुत प्रतीके ब्रह्मदृष्टिरिति संशयः। एकविषयत्वं संगतिः। ब्रह्म आदित्यादि दृष्टिविशेष्यं फलवत्त्वात् इति पूर्वपक्षः। सिद्धान्तस्तु ब्रह्म आदित्यादिदृष्टिप्रकारीभूतं उत्कृष्टत्वात्। यत् यस्मादुत्कृष्टं तत्तद्विशेष्यकदृष्टिप्रकारीभूतम् यथा क्षत्तृदृष्टिप्रकारीभूतो राजा। आदित्यो ब्रह्मेति वाक्यघटकादित्यशब्दः ब्रह्मोपासंनाविशेष्यकबोधजनकः मुख्यार्थबोधकत्वात्। आदित्यशब्दः मुख्यार्थः उपक्रमस्थत्वात्॥ आदित्यो ब्रह्मेत्यत्र ब्रह्मशब्दः आदित्यविशेष्यक दृष्टिप्रकारबोधकः इति शब्दपरत्वात्। आदित्यः विशेष्यभूतः वाक्यशेषे उपासनाकर्मत्वेनोक्तत्वात्। आदित्यः विशेष्यभूतो न भवति फलाभावात् इति शङ्कायां यद्यदुपासनाविशेष्यं तत्फलवदिति व्यतिरेकव्याप्तौ अतिथौ व्यभिचारः। पूर्वपक्षहेतुरप्रयोजकः॥

इति बह्मदृष्ट्यधिकरणम्

# अधिकरणम् – ५

## आदित्यादिमतं यश्चाङ्ग उपपत्तेः ४–१–६

अंगावबद्धोपासना विषयः। किमादित्यादिषूद्गीथादिदृष्टिः उतोद्गीथादिषु आदित्यादिदृष्टिः कर्तव्येति संशयः। पूर्वं ब्रह्म दृष्टिकरणे नियमहेतुरुत्कर्षोऽस्ति तद्वदिह नास्तीति प्रत्युदाहरणसंगतिः। अथवा सिद्धरूपादित्यादिभ्यः कर्मरूपोद्गीथानां फलसन्निकर्षोत्कर्षात् ब्रह्मवद्विशेष्यत्वनियम इति दृष्टान्तसंगतिः प्रधानपूर्वपक्षे। तमुद्गीथमुपासीतेति वाक्यं अनियतविशेष्यविशेषणकोपासनप्रतिपादकं नियमप्रकरणरहितत्वात् इति प्रथमः पूर्वपक्षः। प्रधानपूर्वपक्षस्तु आदित्यः तादृशोपासनाविशेष्यः उपासनाकर्मत्वेन प्रतिपाद्यमानत्वात्। इयमेवर्गग्निः सामेत्यत्र पृथिव्यग्नी

ऋक्सामदृष्टिविशेष्यौ ऋक्सामशब्दाभ्यां गृहीतत्वात्। क्षत्तृशब्देनोच्यमाने राजनि व्यभिचरित इति सिद्धान्ते। लोकाः सामदृष्टिविशेष्याः अधिकरणत्वेन निर्दिश्यमानत्वात्॥ सिद्धान्तस्तु उद्गीथः आदित्योपासनाविशेष्यः कर्मसमृद्धिजनकापूर्वजनकत्वात्। सामलोकदृष्टिविशेष्यभूतं फलजनकापूर्वजनकत्वात्। आदित्यादयः विशेष्यभूता न भवन्ति उद्गीथादिभ्यः उत्कृष्टत्वात् उत्कर्षश्च फलत्वात्। तमुद्गीथमुपासीतेति वाक्यं उद्गीथविशेष्यकोपासनापरम् उद्गीथविशेष्यकोपासनोपक्रमत्वात्। इयमेव र्गाग्निः सामेति वाक्यं ऋक्सामविशेष्यकोपासनापरं तादृशोपासनोपसंहारकत्वात्।

इत्यादित्याधिकरणम्

## अधिकरणम् – ६

### आसीनः संभवात् ४–१–७

प्रतीकाहंग्रहोपासना विषयः। किं तान्युपासनानि तिष्ठन्नासीनः शयानो वा अनियमेन कुर्यात्। अथवा आसीन एवेति नियमेन इति संशयः। यथा कर्मांगावबद्धोपासनेषु अनियम एवमत्रापि इति दृष्टान्तसंगत्या पूर्वपक्षः। सिद्धान्तस्तु प्रत्युदाहरणसंगत्या। प्रतीक, अहंग्रहोपासनानि अनियतावस्थाकर्तृकाणि मानसत्वात् इति पूर्वपक्षः। सिद्धान्तस्तु विमतान्युपासनानि आसीनकर्तृकाणि आसीनावस्थावदितराकर्तृकत्वे सति सकर्तृकत्वात्। न च विशेषणासिद्धिः। विमतानि तिष्ठतगच्छतधावत्कर्तृकाणि न भवन्ति विजातीयप्रत्ययातिरस्कृत सजातीयप्रत्ययप्रवाहरूपत्वात्॥

### ध्यानाच्च ४–१–८

विमतानि आसीनकर्तृकाणि ध्यानत्वात्। ध्यातारः आसीना एव स्युः। ध्यायतिशब्दार्हत्वात् बकादिवत्॥

## अचलत्वं चापेक्ष्य ४–१–९

ध्यायतीव पृथिवीत्यत्र पृथिव्या अचलत्वमपेक्ष्य ध्यानोपचारो दृष्टः। तस्मादपि लिङ्गादासीन एवोपासीतेत्यर्थः॥

## स्मरन्ति च ४–१–१०

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। इति आसनं स्मरन्ति। अत आसीन एवोपासीतेति नियमः॥

इत्यासीनाधिकरणम्

# अधिकरणम् – ७

## यत्रैकाग्रता तत्राविशेषात् ४–१–११

तान्येवोपासनानि विषयः। किं तेषु दिगादिनियमोऽस्ति नवेति संशयः। आसननियमवद्दिगादिनियमोऽप्यस्त्विति प्रत्यवस्थाना दृष्टान्तसंगतिः। अहंग्रहाद्युपासनं नियतदेशकालकं वैदिककर्मत्वादग्निहोत्रादि वत् इति पूर्वपक्षः। विमतं एकाग्रताप्रयोजकदेशकालवत् तदतिरिक्त देशकालत्वेनाश्रूयमाणत्वात्। पूर्वपक्षहेतौ श्रुतदेशादिमत्त्वमुपाधिः। इति सिद्धान्तः।

आरम्भेषु = आरभ्यमाणेषु दर्शपूर्णमासादिकर्मसु। प्राचीनप्रवणः = प्राग्भागे निम्नः। समे शुचावित्यादि॥ शुचौ गिरिगुहादौ रमणीये अमेध्याद्यशुचितावर्जिते। शर्कराः सूक्ष्मपाषाणाः। शब्दजलाश्रयादिभिः वर्जिते इत्यनुषज्यते। शुचित्वादिदेशविशेषणानां प्रयोजनमुच्यते – मनोऽनुकूले इति। उक्तविशेषणानि मनःप्रसादसम्पादकानीति भावः। चक्षुःपीडनं मशकादि तद्युक्ते न तु योजयेदित्यन्वयः। गुहानिवातात्मकं यदाश्रयणं आश्रयः तत्र प्रयोजयेत् उपासनं कुर्यात् इत्यर्थः॥



इत्येकाग्रताधिकरणम्

# अधिकरणम् – ८

## आप्रायणात्तत्रापि हि दृष्टम् ४–१–१२

अहंग्रहोपसनानि विषयः। अनियोज्यब्रह्मात्मत्वप्रतिपत्तेरिति। नियोज्यरहिता आत्मनः नियोज्यत्वाधिकृतत्वकर्तृत्वाद्यभावावगाहिनी ब्रह्मात्मत्वप्रतिपत्तिः यस्य (जाता) तस्य पुरुषस्य शास्त्राविषयत्वं शास्त्रार्थेऽधिकारो नास्ति नियोज्यत्वादेरुपमर्दात् इति भावः। सोऽन्तवेलायामिति। एतत्त्रितयं अच्युतमस्यक्षितमसि प्राणसंशितमसि मन्त्रत्रयं प्रतिपद्येत उच्चारयेत् इत्यर्थः। तानि किं कदाचित् कृत्वोपरमेत् उत यावज्जीवमुपासीतेति संशयः। यथा दिगाद्यविधेस्तदनपेक्षा तथा देहपातावधि आवृत्तेरविधानादनपेक्षेति दृष्टान्तसङ्गतिः। उपासनं यत्किञ्चित्कालं कर्तव्यं तत्त्वे बाधकाभावात् इति पूर्वपक्षः। उपासनं मरणपर्यन्तं करणीयम् अदृष्टफलकमरणकालीनान्त्यप्रत्ययघटितत्वात् इति सिद्धान्तः। इति साधनविचारस्तृतीयशेषः समाप्तः॥ ''स यावत् क्रतुरयमस्माल्लोकात्प्रैती'' ति श्रुत्या तत्रापि मरणकालेऽपि उपास्यप्रत्ययानुवर्तनं दृष्टम्॥

इत्यप्रायणाधिकरणम्

# अधिकरणम् – ९

## तदधिगम उत्तर पूर्वाधयोरश्लेष विनाशौ तद्व्यपदेशात् ४–१–१३

ज्ञानसाधनेषु यत्नाधिक्यार्थं फलाध्यायेऽपि साधनविचारः कृतः। ब्रह्मज्ञानं दुरितनिवृत्यश्लेषजनकं नवेति संशयः। पूर्वं यथा उपासकानां यावज्जीवं कर्तव्यमस्तीत्युक्तं न तया ब्रह्मात्मविदामिति प्रत्युदाहरणसंगत्या पूर्वपक्षः। दुरितं ज्ञाननाश्यं न भवति। भोगमात्रनाश्यत्वात् (नाभुक्तं क्षीयते कर्म)। यदि ज्ञाननाश्यं स्यात् तदा अप्रमाणभूतभोगानुकूल शक्तिप्रतिपादकश्रुतिका स्यात् यदि कर्मभोगमात्रनाश्यं स्यात् तर्हि

प्रायश्चित्तनाश्यं न स्यात् इति प्रतिकूलतर्के इष्टापत्तिरेकः समाधिः गृहदाहेष्ट्यादिवत् नैमित्तिकत्वात्। भोगप्रायश्चित्तमात्रनाश्यत्वादिति वा हेतुः क्रियते इति द्वितीयः समाधिः इति पूर्वपक्षः। ज्ञानं दुरितनाशाश्लेष जनकं तत्त्वेनोक्तत्वात्। यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति। तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवंहास्य सर्वे पाप्मानः प्रदूयन्त इति च। पूर्वपापस्य नाशः = स्व समानाधिकरणफलाजनकत्वं न तु फलं विनैव ध्वंसः। तत्र पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति श्रुत्या सगुणनिर्गुणज्ञकर्मणां तत्सुहृद्द्विषत्सु भोगजनकत्वबोधनार्त्। तत्त्वज्ञानमात्म न्यशेषदुरितनाशकं तन्मूलाध्यासबाधकत्वात् स्वप्नदुरितमूलकर्तृत्वाध्यास बाधकजाग्रद्बोधवत् इत्याह – तथाप्यकर्त्रात्मबोधादिति॥

इति तदधिगमाधिकरणम्

## अधिकरणम् – १०

### इतरस्याप्येवमसंश्लेषःपाते तु ४–१–१४

पुण्यस्याप्यश्लेषविनाशौ भवत उत नेति संशयः। उभे पुण्यपापे विधूयेति वाक्यं विषयः। (प्रत्युदाहरणसङ्गतिः)। (अतिदेशत्वान्न पृथक् सङ्गत्यपेक्षा) पुण्यं ज्ञाननाश्यं न भवति शास्त्रीयत्वात् ज्ञानवदिति पूर्वपक्षः। आगमबाधितः अप्रयोजकश्च पूर्वपक्षहेतुः। ज्ञानं पुण्यनाशकं श्रुतौ तथा व्यपदिश्यमानत्वात्, पुण्येहेत्वविद्याविरोधित्वाच्च। सत्यं ब्रह्मविदः बन्धहेत्वोः पुण्यपापयोरभावात्। पातेत्यं देहपाते मुक्तिरवश्यं भवत्येवेति अधिकरणद्वयफलमुक्तम्॥

इति इतरासंश्लेषाधिकरणम्

## अधिकरणम् – ११

### अनारब्धकार्ये एव तु पूर्वे तदवधेः ४–१–१५

उभे उहैवैष एते तरतीति वाक्यं विषयः। अनारब्धकर्मवत् आरब्धे पुण्यपापे ज्ञानान्नश्यतो न वेति संशयः। पूर्वं ज्ञानात्कर्मक्षय उत्सर्गत उक्तः तस्येह प्रारब्धकर्मव्यतिरिक्तविषयकत्वेनापवादः क्रियत इत्युत्सर्गापवादसंगतिः। प्रारब्धं ज्ञाननाश्यं ज्ञाननाश्यत्वेनोक्तत्वात् कर्मत्वाच्च इति पूर्वपक्षः। प्रारब्धं ज्ञाननाश्यं न भवति ज्ञानकालेऽपि विद्यमानत्वेनोक्तत्वात् उपजीव्यत्वादित्यभ्युच्चयहेतुः॥ (आरब्धे पुण्यपापे न नश्यतः प्रवृत्तफलत्वात् मुक्तेषुवत्) तदवधेः = तस्य तावदेव चिरं यावन्न विमोक्ष्ये इति देहपातावधिश्रवणात्। प्रयोजनन्तु उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति स्मृतेः तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम इति श्रुतेश्च जीवन्मुक्तादुपदेशग्रहणं तत्पूजादिकरणं परेषामिति। अविद्यालेशानुवृत्तिर्ज्ञानिनां स्वीक्रियते॥

इति अनारब्धाधिकरणम्

## अधिकरणम् – १२

### अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ४–१–१६

नित्यं नैमित्तिकं च कर्म ज्ञानान्नश्यति नवेति संशयः। उभे पुण्यपापे तरतीति अविशेषश्रुतेर्नश्यतीत्याशङ्क्य इतरस्यापीत्युक्तातिदेशस्य नित्याद्यतिरिक्तकाम्यपुण्यविषयत्वेनात्रापवादं सिद्धान्तयतीत्यपवादसङ्गतिः। नित्यं नैमित्तिकं च कर्म फलमदत्वा ज्ञाननाश्यं कर्मत्वात् काम्यकर्मवदिति पूर्वपक्षः। नित्यं नैमित्तिकं च कार्यं कर्म फलदानानन्तर कालीनज्ञाननाश्यं भवति ज्ञानकार्यमोक्षफलकत्वेन श्रूयमाणत्वात्। पूर्वपक्षहेतुः प्रारब्धे व्यभिचरितः। अत्रभाष्ये ज्ञानकर्मणोः साक्षादेककार्यत्वं परमतेनोक्त्वा साक्षात्पारपर्याभ्यां मोक्षहेतुत्वं स्वमतमुक्तम्। अत्र पूर्वपक्षे

ज्ञानार्थं नित्याद्यनुष्ठनासिद्धिः, सिद्धान्ते तु ज्ञानोत्पत्त्यर्थत्वात् तत्सिद्धिः। सगुणासु तु विद्यास्वित्यादिना वर्णकान्तरम्। तत्सुकृतेति श्रुतेः अविशेषादग्निहोत्रादिलय इति पूर्वपक्षः। सगुणविद्याफलस्य साक्षात्कारस्य कर्मसाध्यत्वयोग्यत्वात्, यक्ष्यमाणो ह वै भगवन्तोऽहमस्मीति समुच्चयलिङ्गात्, सुकृतशब्दस्य च काम्यविषयत्वात् नित्यकर्मसगुणविद्यासमुच्चयः इति सिद्धान्तः। ज्ञानं नित्यकर्मफलनाशकं न नित्यकर्मजन्यत्वात्, पूर्वपक्ष्यनुमाने काष्ठ जन्ये अग्नौ काष्ठनाशकत्वसत्वाद्व्यभिचारः॥

## अतोऽन्यापि ह्येकेषामुभयोः ४–१–१७

अतः = अग्निहोत्रादिकर्मणः, अन्यापि काम्यलक्षणा साधुकृत्या पापकृत्या चास्ति। एकेषां शाखिनां तयोर्विनियोगः उक्तः। सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्'' इति॥ काम्यनिषिद्धकर्मणोर्विद्यां प्रत्यनंगत्वे उभयोः जैमिनि बादरायणयोः संमतिरिति सूत्रार्थः। अनेन अधिकरणचतुष्टयेन नित्यनैमित्तिककर्मभिन्नप्रारब्धभिन्नपुण्यस्य प्रारब्धभिन्न पांपकर्मणश्च ज्ञानेन नाश इति सिद्ध्यति॥

इत्यग्निहोत्राद्यधिकरणम्

## अधिकरणम् – १३

## यदेव विद्ययेति हि ४–१–१८

मोक्षसाधनज्ञानजनकं नित्यं नैमित्तिकं च कर्म किं विद्यासंयुक्तम्, उत तत्संयुक्ततदसंयुक्तोभयरूपं वेति सन्देहः। एकविषयत्वं संगतिः। पूर्वोक्तं कर्म विद्यासंयुक्तं विशिष्टत्वादिति पूर्वपक्षः। विद्यासंयुक्त तदसंयुक्तोभयरूपं उभयरूपत्वेन यज्ञेनेत्यादिवाक्ये अविशेषेण श्रूयमाणत्वात्। विद्यारहितं कर्म मोक्षसाधनं तज्जनकत्वेन यदेवेत्यादि श्रुत्या प्रतीयमानत्वात्॥

इति विद्याज्ञानसाधनत्वाधिकरणम्

## अधिकरणम् – १४

### भोगे नत्वितरे क्षपयित्वा संपद्यते ४–१–१९

ज्ञानानन्तरकालीनज्ञानावच्छेदक शरीरजनकप्रारब्धीनं जन्म विद्याप्रमोषकं न वेति संशयः। अनारब्धकर्मणः क्षयः पूर्वमुक्तः आरब्धफलस्य कथं नाश इति शङ्कायामस्योत्थानात्थाप्योत्थापकभावसंगतिः। विमतं विद्याप्रमोषकं सम्भवद्विद्या संस्कारनाशककर्मकत्वात् इति पूर्वपक्षः। नेति सिद्धान्तः। दृढतरयत्किञ्चिदनाश्य विद्यासंस्कारवत्त्वादिति हेतुः॥

इति इतरक्षपणाधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
चतुर्थाध्यायस्य प्रथमः पादः॥



# अथ चतुर्थाध्यायस्य द्वितीयः पादः

## अधिकरणम् – १

### वाङ्मनसि दर्शनाच्छब्दाच्च ४–२–१

"अस्य सोम्यपुरुषस्य प्रयतो वाङ्मनसि संपद्यते" इति श्रुतिर्विषयः। अत्र वाक्शब्दः वागिन्द्रियपरो वातद्वृत्तिपरो वेति संशयः। तत्र वाक्शब्दः वागिन्द्रियपरः तत्र शक्तत्वात् इति पूर्वपक्षः। सम्पद्यते इति पूर्वसूत्रादनुवर्तते। वाक् शब्दः वाग्वृत्तिपरः मनोवृत्तिस्थितिकालीन लयप्रतियोग्यर्थबोधकत्वात्। लयप्रतियोग्यर्थः वाग्वृत्तिः तत्त्वेनेतरैर्ज्ञायमान त्वात् (दर्शनात्)। ननु तर्हि कथं वाक्शब्दप्रयोग इति चेदुच्यते – शब्दाच्च। उक्तिर्वागिति व्युत्पत्त्या लक्षणयापि वा सावकाशत्वम्। मनः मरणकालीन वाग्लयाधारभूतं न, तत्प्रकृतित्वाभावात् इति सिद्धान्तः।

### अत एव च सर्वाण्यनु ४–२–२

अत एव उक्तदर्शनादेव हेतोः सर्वाणि चक्षुरादीन्द्रियाण्यपि मनसि सवृत्तिके सति वृत्तिलयमात्रेणानुवर्तन्तेलीयन्ते, न स्वरूपेणेत्यर्थः। उदाहृतवाक्ये वाच एव श्रवणान्नेन्द्रियान्तराणां मनसि वृत्तिलय इति भ्रमापनोदाय सूत्रम्। पूर्वपक्षे करणानां स्वरूपलयात् मृतमात्रस्य मुक्तिः। सिद्धान्ते तु संसारसिद्धिरिति फलम्॥

इति वागधिकरणम्

## अधिकरणम् – २

### तन्मनः प्राण उत्तरात् ४–२–३

"मनः प्राणे" इति वाक्यं विषयः। मनः शब्दः वृत्तिमत्परः वृत्तिपरो वेति संशयः। पूर्वं मनसि सर्वेन्द्रियलय उक्तः। न तथा मनसः प्राणे वृत्तिलयः, अन्नमयं हि सोम्य मनः, आपोमयःप्राणः

इति श्रुतौ प्राणमनसोरबन्नविकारत्वश्रवणादबन्नयोश्च उपादानोपादेयभावात् स्वरूपलय इति प्रत्युदाहरणसंगत्या पूर्वपक्षः। मनः शब्दः वृत्तिमत्परः तत्र शक्तत्वात्। प्राणः मनस्संपत्त्यधिकरणीभूतः मनःप्रकृतित्वात् इति पूर्वपक्षः। मनःशब्दः मनोवृतिपरः प्राणवृत्तिस्थितिकालीन लयप्रतियोग्यर्थप्रतिपादकत्वात्। लयप्रतियोग्यर्थः मनोवृत्तिः तत्त्वेनेतरैर्ज्ञायमानत्वात्। पूर्वपक्षहेतुरसिद्धः, प्राणस्य साक्षान्मनः प्रकृतित्वाभावात्। अन्यथा घटस्यापि शरावे लयापत्तिः इति सिद्धान्तः। प्राणस्य मनःप्रकृतित्वमित्यधिका शङ्का॥

इति मनोधिकरणम्

## अधिकरणम् – ३

### सोध्यक्षे तदुपगमादिभ्यः ४–२–४

प्राणस्तेजसीति वाक्यं विषयः। तेजः श्रुतेरुपगमनादिश्रुतिभ्यश्च प्राणवृत्तिलयः किं तेजसि उत जीवे इति संशयः। यथा मनसः प्राणे लयः, एवं प्राणस्य तेजसीति दृष्टान्तसंगतिः। उत्क्रान्तिकालीनप्राणवृत्तिलयः तेजोऽधिकरणकः तथोक्तत्वात् इति पूर्वपक्षः। प्राणः जीवाधिकरणकवृत्तिलयवान् जीवकर्मकोपगमनकर्तृत्वात्। जीवकर्मकानुगमनकर्तृत्वात्। जीवाधिकरणकस्थितिमत्त्वेनोक्तत्वाच्च। एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति इति, तमुत्क्रामन्तं प्राणोनूत्क्रामति इति सविज्ञानो भवति इति च अभिगमन अनुगमन अवस्थानश्रुतयः। प्राणस्तेजसीति श्रुत्यर्थं प्रदर्शयति—

### भूतेषु तच्छुतेः ४–२–५

तच्छुतेः = प्राणस्तेजसीति श्रुतेः। तेजःसहितेषु उत्तरदेहारम्भकेषु पञ्चभूतेषूपहितत्वेन विद्यमाने जीवे प्राणस्य वृत्तिलय इत्यर्थः। तथा च प्राणस्य जीवद्वारा भूतप्राप्तिरित्यर्थः। सा च स्ववृत्त्यभिमान्यात्माभिमान

विषयत्वम्, स्ववृत्त्यधीनव्यापारकत्वञ्चेत्युभयरूपेत्यर्थः ॥

ननु प्राणस्तेजसीति एकस्मिन्नेव तेजसि प्राणवृत्तिलयः श्रूयते, कथं पञ्चस्वित्युच्यते अत आह—

## नैकस्मिन्दर्शयतो हि ४-२-६

उत्तरदेहस्य पाञ्चभौतिकत्वेन जीव एकस्मिन्नेव नावतिष्ठते। तच्च रंहत्यधिकरणोक्त प्रश्ननिरूपणे दर्शयतः। तथा च प्राणोध्यक्षे इति मध्ये उपसंख्यातव्यम्। प्राणोध्यक्षे। स च पंचभूतेष्विति पर्यवसितार्थः ॥

इत्यध्यक्षाधिकरणम्

# अधिकरणम् – ४

## समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य ४-२-७

विद्वानविद्वानिवोत्क्रमणवान्नवेदिति संशयः। पूर्वोक्तोत्क्रान्तिमुपजीव्य विचारः प्रवर्तत इत्युपजीव्योपजीवकभावसंगतिः। तमुत्क्रान्तमित्यादिश्रुति र्विषयः। विद्वानुत्क्रमणरहितः गमनरहितत्वात् प्रतिषिद्धोत्क्रान्तिकत्वात्। न तस्य प्राणा उत्क्रामन्तीति। विद्वान् गमनरहितः अमृतत्वप्राप्तिमत्त्वात् इति पूर्वपक्षः। विद्वान् उत्क्रान्तिमान् उत्क्रान्तिप्राप्य ब्रह्मलोकादि (अमृतत्व) फलवत्त्वात्। पूर्वपक्षे अमृतत्वप्राप्तिमत्त्वहेतौ अमृतत्वं मुख्यं चेत्स्वरूपासिद्धिः। आपेक्षिकं चेदप्रयोजकः। विद्वानत्र सगुणविद्योपासकः। समाना उत्क्रान्तिः विद्वदविदुषोः आसृत्युपक्रमात् देवयानमार्गोपक्रमात्प्राक्। अत्र श्रूयमाणममृतत्वं अविद्यादिकं अनुपोष्य अदग्धवा – तथा च आपेक्षिकममृतत्वमित्यर्थः ॥

इत्यासृत्युपक्रमाधिकरणम्

## अधिकरणम् – ५

### तदापीतेः संसारव्यपदेशात् ४–२–८

तेजः परस्यां देवतायामिति वाक्यं विषयः। एतद्वाक्यं साध्यक्षसकरणतेजःस्वरूपप्रविलयबोधकं नवेति संशयः। उत्क्रान्तिः समानेत्ययुक्तम्। मृतस्य स्वरूपत एवात्यन्तं ब्रह्मसम्पत्तेरित्याक्षेपात्संगतिः। तादृशं तेजः परदेवताधिष्ठानकस्वरूपप्रविलयवत् परदेवताप्रकृतिकप्रविलयवत्त्वेन श्रूयमाणत्वादिति पूर्वपक्षः। तादृशं तेजः मोक्षपर्यन्तं स्वरूपप्रविलयवन्न ज्ञानाधीनमोक्षपर्यन्तं शरीरहेतुत्वेन व्यपदिश्यमानत्वात्। पूर्वपक्षहेतुः सुषुप्तिकालावच्छिन्नजीवे व्यभिचारी। यदि स्वरूपप्रविलयवत् स्यात् तर्हि अप्रमाणविद्याशास्त्रकं स्यादित्यनुकूलतर्कः सिद्धान्तिनः। ज्ञानस्य बन्धनिवृत्तिसाधनत्वप्रतिपादकं शास्त्रमनर्थकं स्यात्॥

तेज आदि यदि शरीरादुत्क्रान्तिमत्स्यात् तर्हि पार्श्वस्थैरुपलभ्येत मूर्तैः प्रतिहन्येत। तददर्शनादुत्क्रान्तिर्नास्तीति शङ्कायां—

### सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ४–२–९

तेज आदिभूतं अनुद्भूतरूपत्वान्न दृश्यते (स्वरूपतः)। प्रमाणतः अनुद्भूतस्पर्शत्वान्न प्रतिहन्यते इत्यर्थः। उत्क्रामद्भूतसूक्ष्मं चक्षुस्पर्शनाभ्यामुपलब्धिविषयो भवेत्। महत्वे सति रूपवत्त्वात्। अनेकद्रव्यत्वे सति रूपवत्त्वाद्वा इति पूर्वपक्षः। आद्यः चक्षुषि व्यभिचरितः। द्वितीयहेतुः त्र्यणुके व्यभिचरितः। मूर्तान्तरैः प्रतिहन्येत कुम्भवत्॥

### नोपमर्देनातः ४–२–१०

सूक्ष्मशरीरं स्थूलशरीरोपमर्दप्रयुक्तोपमर्दरहितं सूक्ष्मत्वात्॥

## अस्यैव चोपपत्तेरेष ऊष्मा ४–२–११

ऊष्मा स्थूलशरीरातिरिक्तकिञ्चिदाश्रितः स्थूलशरीरानाश्रयत्वे सति आश्रितत्वात्। ऊष्मा स्थूलशरीरानाश्रितः तद्भावाभावित्वात्॥

इति संसारव्यपदेशाधिकरणम्

# अधिकरणम् – ६

## प्रतिषेधादिति चेन्न शरीरात् ४–२–१२

पूर्वमनुपोष्येत्यनेन दग्धाशेषक्लेशस्य निर्गुणज्ञानिन उत्क्रान्त्याद्यभावः सूचितः। तस्यात्राक्षिप्य समाधानाद्व्यवहितेनास्य सङ्गतिः। "अथाकामय मानो योऽकामों निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति" इति वाक्यं विषयः। इदं वाक्यं ब्रह्मविद उत्क्रान्तिनिषेधकं न वेति संशयः। ब्रह्मवित् शरीरापादानकोत्क्रान्तिमान् प्राप्यफलकत्वात् उपासकवत्। श्रुतेः शारीरापादानकोत्क्रान्तिनिषेधपरत्वेन न तया बाधः। पूर्वोक्तवाक्यं शारीरापादानकोत्क्रान्तिनिषेधपरं न तस्यादित्यादिवाक्यसमानार्थत्वात् इति पूर्वपक्षः॥

## स्पष्टोह्येकेषाम् ४–२–१३

ब्रह्मवित् उत्क्रान्तिमान्न तदभाववत्त्वेन श्रूयमाणत्वात्। अकामयमान उत्क्रान्तिरहितः कामयमानविलक्षणत्वेनोक्तत्वात्, उत्क्रान्तिहेतुकर्माभावा त्। यद्यकामयमान उत्क्रान्तिमान् स्यात् तर्हि कामयमानप्रतिपादक प्रकणणविच्छिन्नप्रकरणको न स्यात् इत्यनुकूलतर्कः। पूर्वपक्षहेतौ गतिसाध्यदेशान्तरप्राप्तिमत्त्वमुपाधिः।

## स्मर्यतेऽपि च ४–२–१४

महाभारते देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिण इति उत्क्रान्त्यभावः स्मर्यते इत्यर्थः। पद्यत इति पदं पुण्यफलम्। मार्गे = ब्रह्मविद्यारूपे, पदैषिणः देवा मुह्यन्तीत्यन्वयः।

इति प्रतिषेधाधिकरणम्

## अधिकरणम् – ७

### तानि परे तथाह्याह ४–२–१५

विद्वत्प्राणादिलयः पृथिव्यादिप्रकृतिकः ब्रह्मप्रकृतिको वेति संशयः। पूर्वं ब्रह्मणि लय उक्तः, गताः कलाः पञ्चदश प्रतिष्ठा इति विद्वद्विषयश्रुत्या स्वप्रकृतिषु लयश्रवणादयुक्त इत्याक्षेप संगत्या पूर्वपक्षः। विद्वत्प्राणादिलयः पृथिव्यादिप्रकृतिकः तत्त्वेन गताः कला इति श्रुत्योक्तत्वादिति पूर्वपक्षः। विद्वत्प्राणादिलयः ब्रह्मप्रकृतिकः एवमेवास्येति श्रुत्या तथोक्तत्वात्। विद्वद्दृष्ट्या ब्रह्मणि लयः। अविद्वद्दृष्ट्या स्वप्रकृतिपृथिव्यादिषु लयः इत्यविरोधः। तथा च कलाः स्वप्रकृतिषु विलीय ताभिः सह पुरुषे विलीयन्ते इति श्रुतिद्वयतात्पर्यम्॥

इति वागाधिलयाधिकरणम्

## अधिकरणम् – ८

### अविभागो वचनात् ४–२–१६

विद्वत्कलादिलयः किं सावशेषः उत निरवशेष इति संशयः। एकविषयत्वं संगतिः। विद्वत्कलादिलयः सावशेषः कलालयत्वात् सुषुप्तिकालीनाविद्वत्कलादिलयवदिति पूर्वपक्षः। विद्वत्कलादिलयः निरवशेषः तत्त्वेनोक्तत्वात् (भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलो मृतो भवति) विद्याकृतत्वात् रज्ज्वां विद्यया सर्पलयवत् इति सिद्धान्तः। प्रतिषेधाधिकरणं, वागादिलयाधिकरणं, अविभागाधिकरणं, एतत्त्रयं परविद्याविषयं प्रासंगिकम्॥

इत्यविभागाधिकरणम्

# अधिकरणम् – ९

## तदोकोग्रज्ज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति योगाच्च हार्दानुगृहीतः शताधिकया ४–२–१७

"शतं चैका च हृदयस्य नाडयः----तयोर्ध्वमायन्नमृतत्व"मेति इति श्रुतिः। तत्र तयोर्ध्वमायन्निह तयैवेति वा तयापीति वा। तथा च उपासकः उत्क्रान्तिकाले येन केनापि द्वारेण शरीराद्गच्छति उत मूर्धन्य नाड्यैवेति संशयः। पूर्वमासृत्युपक्रमाधिकरणे उत्क्रान्तिः सगुणब्रह्मविदामपि मार्गोपक्रमपर्यन्तं समानेत्युक्तम्। तद्वन्मार्गोपक्रमेऽपि समास्तु तस्य हैतस्याग्रं प्रद्योतते इति हृदयप्रद्योतनादेः समत्वश्रवणात् इति दृष्टान्तसंगत्या पूर्वपक्ष;। उपासकः उत्क्रान्तिकाले योन केनापि द्वारेण शरीराद्गच्छति, हृदयप्रद्योतनवत्त्वात्, तत्प्रयुक्तप्रकाशविषय द्वारकत्वात्, गतिसाध्यदेशान्तरप्राप्तिकत्वाच्च कर्मठवत् इति पूर्वपक्षः। विद्यारहितत्वं अर्चिरादिगतिध्यानरहितत्वं हार्दब्रह्माननुगृहीतत्वं चोपाधिः, उपासकः मूर्धन्येतरनाड्या न गच्छति पूर्वोक्तोपाध्यभावेभ्य इति सिद्धान्तः॥

इति तदोकोधिकरणम्

# अधिकरणम् – १०

## रश्म्यनुसारी ४–२–१८

अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत इति वाक्यं म्रियमाणस्य सर्वकालावच्छेदेन रश्म्यनुसारित्वप्रतिपादकं नवेति संशयः। पूर्वोक्त नाडीसम्बद्धरश्मीनुपजीव्य विचार्यत इति उपजीव्योपजीवकभावसङ्गतिः। रश्म्यनुसारित्वप्रतिपादकं इति सिद्धान्तप्रतिपादकं सूत्रम्॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ४-२-१९

रात्रौ मृत उपासकः सूर्योदयपर्यन्तं अर्चिरादिगतिमान्न भवति तत्प्रयोजकसूर्यरश्मिसम्बन्धाभावात् इति पूर्वपक्षः। उपासकः सूर्योदयात्पूर्व मेव गतिमान्भवति उत्क्रान्त्यनन्तरमेव गतिमत्त्वश्रवणात्। "स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छती" ति॥ पूर्वपक्षहेतुः स्वरूपासिद्धः रात्रावपि रश्मीनां शरीरे विद्यामानत्वात्। अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेमुष्मिन्नादित्ये सृप्ता इति श्रुतेः इति सिद्धान्तः॥

इति रश्म्यधिकरणम्

## अधिकरणम् – ११

## अतश्चायनेऽपि दक्षिणे ४-२-२०

दक्षिणायनमृतः उत्तरायणात्पूर्वम् अर्चिरादिगतिमान्न वेति संशयः। अतिदेशत्वान्नसंगत्यपेक्षा दक्षिणायनमृतः अर्चिरादिगतिमान्न उत्तरायणघटितमार्गकत्वात्, अप्रशस्तदक्षिणायनमरणवत्त्वात्, शिष्टाचारविषयीभूतोत्तरायणप्रतीक्षाकत्वाच्चेति पूर्वपक्षः। उत्तरायणमित्यनेन अभिमानिदेवता उक्तेति आद्यहेतुः स्वरूपासिद्धः। विदुषः अप्रशस्तकालो न प्रतिबन्धक इति द्वितीय हेतुरप्रयोजकः। शिष्टाचारोऽन्यथासिद्धः उत्तरायणमृत्यनुकूलं कर्मकरणं शिष्टाचारेण ज्ञाप्यत इत्याचारप्रतिपालनार्थमपि॥

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ४-२-२१

योगिनः स्मार्तविद्योपासकान्प्रति अहरादिकालविशेषः स्मर्यते। प्रत्यासत्तेः न श्रौतदहरोपासकान्प्रति। ब्रह्मार्पणबुद्ध्याऽनुष्ठितं कर्म योगः धारणापूर्वकाकर्तृत्वानुभवः सांख्यम्। एते योगसांख्ये स्मार्ते एव। तथा च श्रुतिस्मृत्योर्थभेदान्न श्रौतोपास्तिषु कालनियमः। यदि प्रत्यभिज्ञया

कालशब्दस्तदभिमानिपरः तर्हि ऐकार्थ्यमेव। तस्माद्विद्वान् सर्वदैव मृतः विद्याफलमाप्नोतीति सिद्धम्॥

इति दक्षिणायनाधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां चतुर्थाध्यायस्य द्वितीयः पादः॥

# अथ चतुर्थाध्यायस्य तृतीयः पादः

## अधिकरणम् – १

### अर्चिरादिना तत्प्रथितेः ४–३–१

उत्क्रान्तिनिरूपणानन्तरं तत्साध्यमार्गो निरूप्यते। ब्रह्मलोकप्राप्तिहेतौ मार्गे श्रुतीनां विप्रतिपत्तिः। उत्क्रान्तपुरुषः अर्चिरादिमार्गेण गच्छति, भिन्नेन मार्गेण वेति संशयः। १) उत्क्रान्तपुरुषः अनियतेन मार्गेण गच्छति श्रुतौ तथोक्तत्वात्। २) रश्मिव्यतिरिक्तनिरपेक्षगतिमत्त्वेन श्रूयमाणत्वात्। ३) उत्क्रान्त्यव्यवहितोत्तरमेवादित्यप्राप्तिमत्त्वेनोक्तत्वात्। कौषीतक्युक्तमार्गः छान्दोग्यस्थ मार्गभिन्नः तत्प्रकरणभिन्नप्रकरणकत्वात्। मार्गभेदे भिन्नप्रकरणगतत्वं हेतुः भाष्ये उक्तः। भिन्नप्रकरणस्थत्वेऽपि विद्यैक्यवन्मार्गस्याप्युपसंहारो भविष्यतीत्याशङ्क्य भिन्नोपासनाशेषत्वाच्चेत्युक्तम्। यत्रोपासनभेदेन मार्गभेदाम्नानं तत्र उपसंहारस्य वक्तुमशक्यतया मार्गभेदो भवत्येवेत्यभिप्रायः। एवं भिन्नोपासनाशेषत्वाच्च इति पूर्वपक्षः। उपासकः अर्चिरादिनैव गच्छति अर्चिरादिमार्गेणैव ब्रह्मलोकप्राप्तिमत्त्वेनोक्तत्वात्। पूर्वपक्षिणः प्रथमहेतुः स्वरूपासिद्धः। द्वितीयोऽप्यसिद्धः। रश्मिसम्बन्धः नियमेन वर्तते इत्येवकारो बोधयति, न तु तद्भिन्नं निषेधयति। तृतीयहेतुरपि स्वरूपासिद्धः। भिन्नप्रकरणहेतुरप्रयोजकः। प्रत्यभिज्ञाबाधितमनुमानम्। उपासकः अर्चिरादिनैव गच्छति अर्चिरादिमार्ग भिन्नमार्गरहितत्वात् इति सिद्धान्तः॥

तेऽर्चिषमेवाभिसम्भवन्ति अर्चिषोहः अह्न आपूर्यमाणपक्षं आपूर्यमाण पक्षाद्यान्षडुदङ्ङेति मासान् मासेभ्यः संवत्सरं संवत्सराद्वायुं वायोरादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं ततोऽमानवः पुरुषः वरुणलोकं इन्द्रलोकं प्रजापतिलोकं ब्रह्मलोकं नयति। वरुणादिसाहाय्येन ब्रह्मलोकं नयतीत्यर्थः॥



इति अर्चिराद्यधिकरणम्

# अधिकरणम् – २

## वायुमब्दादविशेषविशेषाभ्याम् ४–३–२

अत्राग्नेरनन्तरं पठितो वायुर्विषयः। स किमर्चिरात्मकाग्नेरनन्तर उत संवत्सरात्पर इति संशयः। पूर्वं सर्वत्रार्चिरादिप्रत्यभिज्ञानान्मार्गैक्यमित्युक्तम्। तद्वदग्न्यनन्तरं वायुपाठप्रत्यभिज्ञानात्तत्रैव वायुर्निवेश्य इति दृष्टान्तसङ्गतिः। भाष्ये प्रथमं सिद्धान्तेनोपक्रम्य कस्मात्पुनरित्यादिना पूर्वपक्ष; प्रदर्शितः। वायुः अर्चिरादिमार्गे अन्ते निवेश्यः आगन्तुकत्वात्।

ते तेषु ब्रह्मलोकेष्वित्यादि श्रुत्यर्थः। ते – उपासकाः तेषु ब्रह्मलोकेषु ब्रह्मविष्णुरुद्रादिभोगभूमीनां बहुत्वात् तदभिप्रायं बहुवचनम्। पराः संवत्सराः, प्रशंसायां मतुप्, प्रशस्तसंवत्सरशालिनः दीर्घजीविन इत्यर्थः। तस्य ब्रह्मणः पराः संवत्सरान्। वसन्तीत्यर्थः। जितिः जयः व्युष्टिः व्याप्तिः॥

सिद्धान्तस्तु वायुः आदित्यात्पूर्वं निवेशयतिव्यः। पासकगमनोपयोगि आदित्यद्वारकर्तृत्वात्। वायुः संवत्सरादनन्तरः। संवत्सरानन्तरादित्या व्यवहितपूर्वत्वादिति॥

इति वाय्वधिकरणम्

# अधिकरणम् – ३

## तडितोधिवरुणः सम्बन्धात् ४–३–३

कौषीतकिवाक्ये श्रुतः वरुणः मार्गपर्वत्वेन सम्बध्यते नवेति संशयः। मार्गमुपजीव्य प्रवृत्तेरुपजीव्योपजीवकभावः सङ्गतिः। वरुणः अर्चिरादिमार्गे वायोरनन्तरं न निवेशयितव्यः वाय्वनन्तरं निविशमानादित्य लोककत्वात्। वायुः अर्चिरादिमार्गे स्थानरहितः। स्थानविशेषवत्त्ववेनाश्रुतत्वादिति पूर्वपक्षः। वरुणः विद्युल्लोकाव्यवहितोत्तरस्थानकत्वेन प्रत्येतव्यः। विद्युत्सम्बन्धित्वे सति आगन्तुकयत्किञ्चित्स्थानकत्वात् इति सिद्धान्तः॥

इति तडिदधिकरणम्

# अधिकरणम् – ४

## आतिवाहिकास्तल्लिङ्गात् ४–३–४

अनेनार्चिरादीनां स्वरूपं निरूप्यते। किमर्चिरादयः मार्गचिह्नानि उत भोगभूमयः अथवा गन्तॄणां नेतार इति संशयः। अर्चिरादिशब्दाः मार्गचिह्नभूताः चिह्नप्रतिपादकोपदेशनरूपत्वात्। अर्चिरादिशब्दप्रतिपाद्याः भोगभूमयः लोकत्वेनोक्तत्वात्। आतिवाहिका न भवन्ति अचेतनत्वादिति पूर्वपक्षद्वयम्। अर्चिरादिशब्दप्रतिपाद्याः आतिवाहिकाः अमानवपुरुष समभिव्याहृतत्वात्। तत्पुरुषोऽमानव इति वाक्यं पूर्वप्राप्त मानवत्वनिवृत्तिपर त्वात् तन्मात्रस्य नेतृत्वप्रतिपादकं न भवति। अर्चिरादिशब्दप्रतिपाद्याः नेतारः मानवत्वात्। ते मानवाः अमानव इति शब्दप्रतिपाद्यनिषेधप्रतियोगि परत्वात्॥

## उभय व्यामोहात्तत्सिद्धेः ४–३–५

उपासकाः अर्चिरादिनेतृकाः तदितरानेतृकत्वे सति सनेतृकत्वात्। उपासकाः स्वव्यतिरिक्तनेतृकाः संपिण्डितकरणत्वात् मत्तमूर्छितादिवत्। अर्चिरादीतरनेतृकत्वमनुपलब्धमिति अर्चिरादीनां नेतृत्वं सिद्ध्यति। यदि अर्चिरादयोऽचेतनाः स्युः तर्हि उपासकनेतारो न स्युः। ओमित्युक्ते उपासकस्य स्वयं गमनाशक्तौ अनेतृकत्वे ब्रह्मलोकप्राप्तिर्न स्यात्। उभयोः उपासकस्य अर्चिरादेश्च अचेतनत्वे व्यामोहात् अज्ञत्वाद्ब्रह्मलोक प्राप्तिः न स्यात्। अतः स्वयंप्रयत्नशून्यश्चेतनान्तरेण नेय इति लौकिकन्यायात्तत्सिद्धेः, अर्चिराद्यभिमानिनां नेतृत्वसिद्धेः इत्यर्थः। अर्चिरादयो मार्गलक्षणभूता न अनवस्थितत्वात्। उपासकभोगभूमयो न उपासकवृत्तिभोगाजनकत्वात्। सूत्रे तत्सिद्धिरित्यस्य अभिमानि देवतात्वसिद्धिरित्यर्थः।

ननु विद्युल्लोकादमानवस्यैव नेतृत्वश्रवणात् कथं वरुणादीनां नेतृत्वमित्यत आह

## वैद्युतेनैव ततस्तच्छ्रुतेः ४–३–६

ततः विद्युल्लोकप्राप्त्यनन्तरं विद्युल्लोकमागतो वैद्युतोऽमानवः पुरुषः तेनैव नीयमाना उपासका ब्रह्मलोकं प्राप्नुवन्ति। तच्छ्रुतेः "पुरुषो ऽमानव एत्य ब्रह्मलोकं गमयति" इति श्रुतेः। वरुणादयस्तु साहाय्यानुष्ठानेनानुग्राहका इत्यर्थः। इत्थं मार्गो निरूपितः।

इत्यातिवाहिकाधिकरणम्

## अधिकरणम् – ५

## कार्यं बादरिरस्य गत्युपपत्तेः ४–३–७

स एनान् ब्रह्म गमयतीति वाक्यं विषयः। किमेतद्वाक्यप्रतिपाद्यं कार्यब्रह्म उत परं ब्रह्मेति संशयः। फलफलिभावः सङ्गतिः। सिद्धान्तेनोपक्रमः। ब्रह्मशब्दप्रतिपाद्यं कार्यब्रह्म गतिकर्मत्वात्। यद्यपि सगुणोपासकानामपि परब्रह्मप्राप्तिरस्त्येव, परन्तु क्रमेण। अत्र तु साक्षादेव परप्राप्तिराशङ्क्य निराक्रियते।

## विशेषितत्वाच्च ४–३–८

ब्रह्मशब्दप्रतिपाद्यं कार्यब्रह्म बहुत्वेनोक्तत्वात्। ब्रह्मलोकेषु ब्रह्मणो लोकेषु इति षष्ठ्या स्वामित्वबोधात्। लोकस्वामित्वात्। अधिकरणत्वेनोक्त त्वात्।

ननु ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् कथं कार्यब्रह्मणि तद्व्यपदेश इत्यत आह—

## सामीप्यात्तु तद्व्यपदेशः ४–३–९

कार्यब्रह्म ब्रह्मशब्दप्रतिपाद्यं ब्रह्मसमीपस्थत्वात्। निरवच्छिन्न ब्रह्मरूप मुख्यार्थाभेदरूपात्सामीप्यात्। अथवा सोपाधिकस्य पश्चान्निरुपाधिप्रापक त्वेन तत्सामीप्यात्तद्व्यपदेशः तदभेदोपचारः॥

यदि ब्रह्मशब्दप्रतिपाद्यं कार्यब्रह्म स्यात् तर्हि उपासकगतानावृत्तिकं न स्यादिति चेत् – अत्रोच्यते।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ४–३–१०

क्रममुक्तेरुक्तत्वात् व्याप्तिभङ्गान्न तर्कः प्रवर्तत इत्यर्थः। अभिधानात् उक्तश्रुतेः कार्यस्य ब्रह्मलोकस्यात्यये सति तदध्यक्षेणहिरण्यगर्भेण सह नतु द्रागेव तत्र तेषां भोगश्रुतेः। अमृतत्वाप्ति हेतुतत्त्वज्ञानार्थं तल्लोके वेदान्तश्रवणाद्यपेक्षणाच्च। अतः परं ब्रह्म प्रतिपद्यन्ते इत्यर्थः॥

## स्मृतेश्च ४–३–११

क्रममुक्तौ प्रमाणं स्मृतिः। ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मनः प्रविशन्ति परं पदमिति इत्थं सिद्धान्तोऽभिहितः॥ अथ पूर्वपक्षः प्रदर्श्यते—

## परं जैमिनिर्मुख्यत्वात् ४–३–१२

ब्रह्मशब्दः परब्रह्मप्रतिपादकः। तत्र मुख्यत्वात्॥

## दर्शनाच्च ४–३–१३

परं ब्रह्म ब्रह्मशब्दप्रतिपाद्यं अमृतत्वप्रापकगतिविषयत्वात्॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ४–३–१४

ब्रह्मशब्दप्रतिपाद्यं कार्यब्रह्म प्रजापतिसभावेश्म प्रतिपत्त्यभिसन्धिविषय त्वादिति न च वाच्यम्। "आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा तद्ब्रह्म" इति ब्रह्मणः प्रकृतत्वेन परब्रह्मत्वनिश्चयात् कार्यब्रह्मत्वानुमानस्य बाधितत्वादिति॥ तत्र मुख्यत्वादिति पूर्वपक्षहेतुः अन्यथासिद्धः। अमृतत्वप्रापकगतिविषयत्वादिति हेतुः स्तुत्यर्थत्वेनान्यथा सिद्धः। प्रकृतत्वरूपहेतुरपि न साधकः। प्रकरणाल्लिङ्गस्य बलीयस्त्वात्॥

तदनुपपन्नमित्यादि। ब्रह्मशब्दप्रतिपाद्यं परं ब्रह्म सर्वात्मत्वेनोक्तत्वात्। ब्रह्म निर्विशेषं अपोदितविकारानृताभिसन्धिकत्वात्। ब्रह्मवित् मुख्यब्रह्मविषयकगतिमान्न तत्प्रयोजकोत्क्रान्तिरहितत्वात्। यथा परब्रह्मणो निर्विशेषत्वात् गन्तव्यत्वं नोपपद्यते इति गत्यभावः एवं गन्त्रालोचनायामपि गतिर्नोपपद्यत इति उपपादयति। गतिकल्पनायां चेत्यादिना। जीवो ब्रह्मणोऽवयवः विकारो वा इति पक्षद्वयं भेदाभेदमतेन, अत्यन्तभेदपक्षः अन्य इति। ब्रह्म जीवगम्यं न भवति तदेकदेशित्वात् , जीवगम्यं न भवति तदुपादानत्वात्। ब्रह्मातिरिक्तत्वपक्षे जीवस्याणुत्वादिविकल्पः। जीवो यद्यणुः स्यात्तर्हि सकलशरीरावच्छिन्नवेदनोपलब्धा न स्यात्। यदि मध्यमपरिमाणः तदा अनित्यः स्यात्। व्यापित्वे गमनानुपपत्तिरिति। एवं अत्यन्तभेदे अभेदबोधकशास्त्राद्यनुपपत्तिः॥

संसाराभावरूपमोक्षः कर्माभावेनैव सेत्स्यतीत्यैकभविकवादमाशङ्क्य निराचष्टे — यत्तु कैश्चिदित्यादिना।

इति कार्याधिकरणम्

## अधिकरणम् – ६

### अप्रतीकालम्बान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ४–३–१५

स एनान् ब्रह्म गमयतीति वाक्यघटकएनानिति पदं सर्वोपासकपरं वा, प्रतीकोपासकभिन्नोपासक परं वेति संशयः। गन्तव्यविशेषनिरूपणानन्तरं गन्तृविशेषनिरूपणात्प्रसङ्गसङ्गतिः। प्रतीकोपासकोऽपि ब्रह्मलोकप्राप्तिमान् ब्रह्मलोकप्राप्तिहेतुभूतार्चिरादिमार्गकत्वादिति पूर्वपक्षः। प्रतीकोपासकः ब्रह्मलोकप्राप्तिमान् न तद्विषयकध्यानाभावात्। यो यद्विषयकध्यानाभाववान् स न तत्प्राप्तिमान् इति व्याप्तिः। न च पञ्चाग्निविद्यायां व्यभिचारः। वचनाभावविशिष्टतद्विषयकध्यानाभाववत्त्वं यत्र तत्र तत्प्राप्त्यभाववत्त्वमिति व्याप्तेर्विवक्षितत्वात्। उभयथा–कांश्चिन्नयति

कांश्चिन्नेत्यभ्युपगमे अदोषात् अनियमः सर्वासामिति न्यायविरोधाभावात्। तन्न्यायस्य प्रतीकभिन्नविषयकत्वात्। अत्र नियामकमाह – तत्क्रतुश्चेति।

## विशेषं च दर्शयति ४–३–१६

प्रतीकोपासकः ब्रह्मलोकप्राप्तिरहितः तारतम्यविशिष्टफलवत्त्वात्॥

इत्यप्रतीकालम्बनाधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
चतुर्थाध्यायस्य तृतीयः पादः॥



# अथ चतुर्थाध्यायस्य चतुर्थः पादः॥

## अधिकरणम् – १

### संपद्याविर्भावः स्वेनशब्दात् ४–४–१

निर्गुणविद्यायाःफलं बन्धनिवृतिसहितब्रह्मभावाविर्भावः। तत्र बन्धनिवृतिरूपो भागः प्रथमे पादे निरूपितः। द्वितीये सगुणनिर्गुणफलप्राप्तिशेषत्वेन तद्विदोरुत्क्रान्त्यनुत्क्रान्ती चिन्तिते। तृतीये सगुणफलसिद्ध्युपयोगिनः गतिगन्तव्यगन्तृविशेषा निरुपिताः। अस्मिन्पादे निर्गुणविद्याफलैकदेशब्रह्मभावाविर्भावः, सगुणविद्याफलञ्च सर्वेश्वरतुल्यभोगभाक्त्वञ्च निर्धार्यते।

स्वेन रूपेणाभिनिष्पद्यत इति वाक्यं ब्रह्मविदः स्वात्मकरूपाभिनिष्पतिप्रतिपादकम् उत स्वीयरूपाभिनिष्पतिप्रतिपादकमिति संशयः। संपद्याविर्भावः संपति सति य आविर्भावः मोक्ष इत्यर्थः। मोक्षः (स्वीय) आगन्तुकरूपात्मकः फलत्वात् ब्रह्मलोकप्राप्त्यादिफलवत् उत्पद्यमानत्वेनोक्तत्वाच्च इति पूर्वपक्षः। मोक्षः स्वात्मकरूपाविर्भावरूपः स्वशब्दप्रतिपाद्यरूपात्मकत्वात्। यदि मोक्षः स्वात्मकरूपाविर्भावरुपो न भवेत्, तर्हि व्यर्थस्वशब्दप्रतिपाद्यरूपात्मकः स्यादित्यनुकूलतर्कः।

मोक्षः यदि स्वात्मकरूपाविर्भावः स्यात्तर्हि तस्य फलत्वं न स्यात्। स्वप्रकाशस्वरूपस्य बन्धावस्यायामत्यभिव्यक्तत्वादिति प्रतिकूलतर्कपराहतये सूत्रम्॥

### मुक्तः प्रतिज्ञानात् ४–४–२

उपलक्षणस्य अनर्थनिवृत्तेः पूर्वमसत्त्वादुपलक्षणस्य साध्यत्वात् फलत्वोपपत्तिरित्यर्थः। मोक्षः मुक्तात्मनाऽवस्थितिरूपः तत्त्वेन प्रतिज्ञायमानत्वात्। एवं त्वेव ते भूयोनुव्याख्यास्यामीत्यादिना। स्वप्रकाशस्यापिस्वरूपस्य बन्धावस्थायामविद्याध्यस्तविशेषैराच्छादिततया न

स्फुटतया अवभासः। मुक्तौ तु अविद्यादेः निःस्वरूपतापत्त्या स्वरूपस्य स्फुटतयाऽवभास इति परिहाराभिप्रायः।

अनर्थनिवृतिरुत्पद्यत इति मोक्षोत्पतेरौपचारिकत्वात् पूर्वपक्षद्वितीयहेतु रसिद्धः॥

## आत्मा प्रकरणात् ४–४–३

कथं पुनरित्यादि। मोक्षः स्वात्मरूपात्मको न पूर्वप्रकृतज्योतिः—शब्दार्थ विकारपरामर्शिस्वशब्दप्रतिपाद्यार्थरूपत्वादिति शङ्कायामिदं सूत्रं प्रवृत्तम्। ज्योतिःशब्दस्य ब्रह्मपरामर्शकत्वेन निर्धारितत्वात् (प्रकरणेन) शङ्काहेतुरसिद्धः। ज्योतिर्दर्शनादिति न्यायस्य स्मरणार्थमिदं सूत्रमिति न पुनरुक्तता॥

इति संपद्याविर्भावाधिकरणम्

## अधिकरणम् – २

## अविभागेन दृष्टत्वात् ४–४–४

मुक्तः ब्रह्मविभागवानुताविभागवानिति संशयः। उपजीव्योपजीवक भावसङ्गतिः। मुक्तः ब्रह्मभिन्नत्वेनावतिष्ठते ब्रह्माधिकरणकत्वेनोक्तत्वात्। (स तत्र पर्यैति) ब्रह्मकर्मकोपसम्पत्तिकर्तृत्वेनोक्तत्वात् (परं ज्योतिरुपसंपद्य) इति पूर्वपक्षः। मुक्तः ब्रह्माभिन्नः ब्रह्मात्यन्ताभिन्नत्वेन श्रुतौ दृष्टत्वात्। मुक्तः ब्रह्माभेदेन वर्तते ब्रह्माभेदविषयकनिदिध्यासनवत्त्वा त्। दृष्टत्वादित्यस्य श्रुतौ, लोके च तत्क्रतुन्यायेन दृष्टत्वादित्यर्थः। कल्पितभेदमादाय पूर्वपक्षहेतूपपत्तिः। स तत्र पर्यैतीत्यादिफलं सगुणविद्यायामुत्क्रष्टव्यम्, कर्तुकर्मभावनिर्देषश्च गौणो नेतव्य इति सिद्धान्तः॥

इत्यविभागाधिकरणम्

# अधिकरणम् – ३

## बाह्मेण जैमिनिरुपन्यासादिभ्यः ४–४–५

मुक्तः ब्राह्मैश्वर्यादिमान् उत शुद्धचेतनात्मको वेति संशयः। यथोक्तं ब्रह्माभिन्नं मुक्तमुपजीव्य विचार्यत इति उपजीव्योपजीवकभाव सङ्गतिः। मुक्तः अपहतपाप्मत्वादिब्राह्मरुपेण अभिनिष्पद्यते अपहतपाप्म त्वादिनोपन्यस्यमानत्वात्, तत्र पर्येतीति ऐश्वर्यवत्ततवेनोक्तत्वात् सर्वज्ञः सर्वेश्वर इति व्यपदिश्यमानत्वाच्च॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ४–४–६

मुक्तः चिदात्मक स्वस्वरूपवान् चिंन्मात्रात्मकत्वात् इत्यौडुलोमिः। जैमिनिमते सर्वज्ञत्वादिधर्माः सत्याः एतन्मते असन्तः शशशृङ्गादिवद्विकल्प विषया इति॥

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ४–४–७

मुक्तः ब्राह्मेण रूपेण चिदात्मना च अभिनिष्पद्यते, उभययाश्रूयमाणत्वात्। तथा च सर्वेश्वरत्वादिगुणकत्वचिन्मात्ररुपत्वश्रुत्यो रपि व्यावहार्थिक पारमार्थिकदृष्टिभ्यामविरोधे सम्भवति कस्याश्चन श्रुतेः निरालम्बनताकल्पना न युक्ता। मुक्तस्यामुक्तरूपप्रतिबिम्बप्रतियोगिकबि म्बरूप परमेश्वरभावापत्तिश्चावर्जनीया। तद्भावापत्तौ च मुक्तौ तदीयगुणाविर्भावोऽप्यनिवार्यः। न चैतावता मुक्तस्य चिन्मात्ररूपता हानिः। परमेश्वरस्येव तद्भावापन्नस्य तस्यापि वस्तुतश्चिन्मात्ररूपत्वोपप त्तेरिति (परिमलः)॥ एवमधिकरणत्रयेण परविद्याफलमुक्तम्। बद्धपुरुषदृष्ट्यां चिन्मात्रस्यापि सत्यसङ्कल्पत्वादिकमिति दृष्टिभेदेन मतद्वयमप्युपपद्यते इति भावः॥

इति ब्राह्माधिकरणम्

# अधिकरणम् – ४

## सङ्कल्पादेव तच्छ्रुतेः ४–४–८

"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती"ति वाक्यं विषयः। ब्राह्मलौकिकाः पित्रादयः किं सङ्कल्पमात्रजन्याः किं वा सङ्कल्पसहकृत कारणान्तरजन्या इति संशयः। एवकारस्यअयोगव्यवच्छेदान्ययोगव्यवच्छेदार्थसाधारण्यात् संशयः प्रत्युदाहरणसङ्गतिः। ब्राह्मलौकिकाः पित्रादयः कारणान्तरसहकृतसङ्कल्पजन्याः भोगसाधनत्वात् संमतवत् (भूलोकपित्रादिवत्)। विपक्षे भोगसमर्था न स्युरिति अनुकूलतर्कः इति पूर्वपक्षः। विमताः सङ्कल्पमात्रजन्याः तत्त्वेनोक्तत्वात्। श्रुत्या पूर्वपक्ष्यनुमानं बाधितम्। निमित्तान्तरापेक्षायां कदर्थितवकाराः स्युः। श्रुत्या सङ्कल्पमात्रजन्यस्यापि भोगसमर्थत्वबोधनात् पूर्वपक्ष्यनुकूलतर्कः न व्याप्तिमूलकः। एवकारेण निमित्तान्तराजन्यत्वस्य निश्चिततया लोकन्यायेन तत्कदर्थनमसङ्गतम्। अनिश्चितविषय एव लोकन्यायस्य प्रवृत्तेरिति॥

यदि सत्यसङ्कल्पः स्यात्तर्हि ईश्वराधीनो न स्यादिति प्रतिकूलतर्कपरिहाराय सूत्रम्—

## अत एव चानन्याधिपतिः ४–४–९

इष्टापत्तिरित्यर्थः। विमतः प्रयत्नाद्यनपेक्षसङ्कल्पजन्यः योगसामर्थ्य सृष्टत्वात् अगस्त्यकृत समुद्रपानवदिति॥

इति संकल्पाधिकरणम्

# अधिकरणम् – ५

## अभावं बादरिराह ह्येवम् ४–४–१०

ब्रह्मलोकप्राप्तउपासकः भोगावच्छेदकशरीरेन्द्रियवान्न वा इति संशयः। यथा सङ्कल्पातिरिक्तं नापेक्षितं एवं मनोतिरिक्तमपि नापेक्षितमिति

दृष्टान्तसङ्गतिः। ब्रह्मलोकप्राप्तउपासकः भोगावच्छेदक शरीरेन्द्रियवान्न मनोव्यतिरिक्तनिरपेक्षभोगादिमत्त्वेनोक्तत्वात् इति बादरिः। आह ह्येवमाम्नायः मनसैतान् कामान् पश्यन् रमते इति॥

## भावं जैमिनिर्विकल्पामननात् ४–४–११

विमत उपासकः शरीरेन्द्रियवान् अनेकशरीरवत्त्वेनोक्तत्वात्। स एकधा भवति त्रेधा भवतीत्यादिना अनेकधा भावविकल्पामननात् इति जैमिनिमतम्॥

## द्वादशाहवदुभयविधं बादरायणोऽतः ४–४–१२

विमत उपासकः कादाचित्कशरीरेन्द्रियवत्त्वकादाचित्कतदभाववत्त्वोभयवान् उभयवत्त्वेन श्रूयमाणत्वात् इति बादरायणः। अतः लिङ्गद्वयात्। तथा च देहादयो न सन्त्येव, सदा सन्त्येवेति पक्षद्वयं पूर्वपक्षः॥ कालभेदेनेच्छया सन्ति न सन्ति चेति सिद्धान्तपक्षः। द्वादशाहमृद्धिकामा उपेयुः इत्युपायनचोदना गम्यत्वात्सत्रत्वं "द्वादशाहेन प्रजाकामं याजयेत्" इत्यहर्गणत्वे सति यजति चोदनागम्यत्वादहीनत्वं चेत्युभयविधत्वम्॥

## तन्वभावे सन्ध्यवदुपपत्तेः ४–४–१३

शरीराद्यभावे स्वप्ने इव भोग उपपन्नः॥

## भावे जाग्रद्वत् ४–४–१४

शरीरादिमत्त्वे तु जाग्रद्वद्भोगः॥

इत्यभावाधिकरणम्

## अधिकरणम् – ६

### प्रदीपवदावेशस्तथा हि दर्शयति ४–४–१५

उपासकनिर्मितानि शरीराणि निरात्मकानि सात्मकानि वेति संशयः। ननु विकल्पामननलिङ्गेन विदुषोऽनेक शरीराणि सन्तीत्युक्तम्। तद्व्यर्थम्। निरात्मके तु तेषु भोगायोगादित्याक्षेपात्सङ्गतिः। विमतानि शरीराणि निरात्मकानि सात्मकत्वेन निर्णीतशरीरभेदात् इति पूर्वपक्षः। विमतानि सात्मकानि उपासकमनसम्बन्धत्वात्सम्मतशरीरवत्। यथा प्रदीपोऽनेकवर्तिषु प्रविशति एवं विद्यायोगबलात् विद्वल्लिङ्गशरीरस्य व्यापित्वादनेकदेहेषु युगपदावेश इति सूत्रार्थः॥

उपासकः अनेकधा भावरहितः निषिद्ध सकलकार्यकरणकत्वादिति शङ्कायां सूत्रम्— (तत्केन कं विजानीयात्। नतु तदद्वितीयमस्तीत्यादि)

### स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ४–४–१६

तादृश श्रुतीनां सुषुप्तमुक्तपरत्वात् शङ्कहेतुः स्वरूपासिद्ध इति। स्वाप्ययसम्पत्त्योः सुषुप्तिपरममुक्त्योः अन्यतरापेक्षमिद विशेषज्ञानाभावश्रवणम्। हि, यतः प्रकरणादेवमाविष्कृतम्। सुषुप्तिप्रकरणापेक्षया ततोऽन्यद्विभक्तं यद्विजानीयादिति। परममुक्तिप्रकरणापेक्षया तत्केन कं पश्येदिति। तस्मान्नेदं सगुणब्रह्मविदः शरीराङ्गीकारे बाधकमिति॥

इति प्रदीपाधिकरणम्

## अधिकरणम् – ७

### जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ४–४–१७

जगद्व्यापारः उपासक प्राप्यो न वेति संशयः। पूर्वोक्त सर्वैश्वर्यस्यापवाद इति अपवादसङ्गतिः। उपासकः जगद्व्यापारवान् स्वाराज्यवत्त्वेनोक्तत्वात् इति पूर्वपक्षः। जगद्व्यापार उपासकप्राप्यो

न भवति ईश्वरनिष्ठत्वेनोक्तत्वात्, उपासकनिष्ठत्वेनानुक्तत्वाच्च। पूर्वपक्षे सांकुशस्वाराज्यस्य हेतुत्वे अप्रयोजकता। निरङ्कुशस्य तस्य स्वरूपासिद्धिः। उपासकः जगद्व्यापारवान्न सृष्टेः पूर्वमविद्यमानत्वात्, प्राकृतजीववत् इति नित्यसिद्धस्येत्यादिनाभिप्रेतम्। जगद्व्यापारः विरुद्ध दिक्रियानेकोपासकप्राप्यो यदि स्यात् तर्हि सोत्पत्तिको न स्यादिति तर्कः समनस्कत्वादित्यनेनोच्यते॥

निरङ्कुशैश्वर्यस्य हेतूकरणे स्वरूपासिद्धिरिति यदुक्तं तन्न। आप्नोति स्वाराज्यमिति प्रत्यक्षश्रुत्या निरङ्कुशैश्वर्यस्य विदुषः प्रतिपादनादित्याशङ्क्य निराचष्टे—

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिक मण्डलस्थोक्तेः ४–४–१८

यदि आप्नोति स्वाराज्यमिति वाक्ये निरवग्रहैश्वर्यमुक्तं स्यात् तदा आप्नोति मनसस्पतिमिति वाक्येन ईश्वरप्राप्तिवचनमनर्थकं स्यादिति अतः सातिशयं विदुष ऐश्वर्यम्। मनसस्पतिः सूर्यमण्डलान्तस्थः परमात्मा तत्सवितुर्वरेण्यमिति श्रुतेः। तथा च भोगे स्वाराज्यं न तु जगज्जन्मादिष्विति। जगद्व्यापार उपासकप्राप्यः उपास्यनिष्ठत्वादित्यनुमानमाशङ्क्य निराचष्टे–

## विकारावर्ति च तथा हि स्थितिमाह ४–४–१९

सगुणे ब्रह्मणि विकारावर्ति निर्गुणं रूपमस्ति। तथा हि – ब्रह्मणि सगुणत्वनिर्गुणत्वयोस्स्थितिमाह श्रुतिः — "तावानस्य महिमेत्यादि"। तथा च यथा सगुणे स्थितं निर्गुणस्वरूपं उपासको न प्राप्नोति तज्ज्ञानाभावात् तथा तद्गतं जगदुत्पत्त्यादिकमैश्वर्यं न प्राप्नोति तदुपास्त्यभावात् उपास्त्यभावश्च श्रुत्यभावात्। तथा च पूर्वोक्तं शङ्कानुमानं उपास्यनिष्ठे निर्गुणस्वरूपे व्यभिचरितमिति॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ४–४–२०

न तत्र सूर्यो भाति इति श्रुतिः प्रत्यक्षं, न तद्भासयते सूर्यः इति स्मृतिरनुमानम्। तदुभयमपि ब्रह्मणो निर्गुणस्वरूपं दर्शयतीति निर्गुणे प्रमाणप्रदर्शनम्॥

## भोगमात्रसाम्यलिङ्गाच्च ४–४–२१

उपासकः जगद्व्यापाराधिकारी न भवति। भोगमात्रवत्त्वेनोक्तत्वात्॥ यदि उपासकः जगद्व्यापारवान् न स्यात् तर्हि सातिशयैश्वर्यवान् स्यात्। ओमित्युक्ते ऐश्वर्यमन्तवत्स्यात्। तत्राप्यङ्गीकारे उपासक आवृत्तिमान् स्यात्। ओमित्युक्ते उपासनायां प्रवृत्तिर्न स्यादित्याक्षेपे सूत्रम्—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ४–४–२२

"न स पुनरावर्तते" इति श्रुत्या उक्तत्वादनावृत्तिमानिति सिद्ध्यति। तथा च पूर्वपक्षिप्रतिकूलतर्कः न व्याप्तिमूलक इति सगुणविद्योपासकानामप्य नावृत्तिसिद्धिरिति। सूत्राभ्यासः शास्त्रपरिसमाप्तिद्योतकः॥

इति जगद्व्यापाराधिकरणम्

इति श्री गोडा सुब्रह्मण्यशास्त्रिविरचितायां भाष्यप्रदीपिकायां
चतुर्थाध्यायस्य चतुर्थः पादः
चतुर्थाध्यायश्च समाप्तः

इति श्री गोडावंशोद्भवरुक्मिणीकृष्णास्त्रिसुतशूलमेनिग्रामाभिजनसुब्रह्मण्यशास्त्रि विरचिता ब्रह्मसूत्रशाङ्करभाष्यप्रदीपिका समाप्ता

श्रीः

मङ्गलंमहत्

श्रीः

| प्रस्तावनायां | अशुद्धं | शुद्धम् |
|---|---|---|
| 1-18 | मात्मनोऽपि | आत्मनोऽकर्तृत्वं |
| 9 | कर्मानुष्ठान | कर्मानुष्ठापन |
| 2-9 | तत्रपाठ | अत्रपाठः |
| 3-12 | न चानतीव | न चात्रातीव |
| | ग्रन्थे | |
| 1-9 | डुति | च्छुति |
| | रूप: | रूपा |
| 2-8 | दोषास | दोषाः स |
| 4-1 | प्रत्ययशो | प्रत्ययगो |
| 5-1 | त्यनुमानषवं | स्यानुमानषट्कं |
| 5-9 | लोहित्यहम | लौहित्यभ्रम |
| 6-2 | धमनिष्य | धर्मनिष्ठस्य |
| 6 6 | सु | सुप्त्वोक्ति |
| 9-1 | आरोष्यस्यधिष्ठाने | आरोप्यस्याधिष्ठाने |
| 10-16 | ..योभाव | तोयभाव |
| 17-19 | तदभेदा | तद्भेदा |
| 26-2 | त्यानुमानमानं | त्यनुमान |
| 27-19 | विलक्षणत्वत् | विलक्षणत्वात |
| 30-2 | शब्दवा | शब्दव |
| 35-10 | कारणाधि | करणाधि |
| 39-4 | हृति | इति |
| 39-6 | नमय | नन्दमय |
| 46-23 | वाहिताग्न्याग्रदि | गाहिताग्न्यादि |
| 48-2 | निश्चयकाभावात् | निश्चायकाभावात |
| 49-5 | ब्रम | ब्रह्म |
| 49-19 | इति इति | इति |
| 54-18 | संहृत् | संहृतं |

| प. P. | अशुद्धं | | शुद्धम् |
|---|---|---|---|
| 54-24 | चराचरसंहर्ता इत्यनन्तरं मृत्यूपसेचन सम्बन्धिप्रतिसम्बन्धित्वात् इति पठनीयम् | | |
| 55-4 | शङ्कयां | - | शङ्कायां |
| 55-6 | सिद्धो इत्यनन्तरं यत्र स इत्यस्य यत्र स्वे महिम्नि स विश्वोप सहर्ता इत्यर्थकत्वात् स भगवः कस्मिन् प्रतिष्ठित इति स्वे मडिम्नि इति श्रुतेः। | | |
| 55-6 | जगत्संहर्ता सगुणेश्वरो यत्र कल्पितमिति निष्कासनीयम् | | |
| 57-13 | नुगुणयेन | - | नुगुण्येन |
| 69-9 | इश्वरो | - | ईश्वरो |
| ,, | हृष्टान्तह | - | हृष्टान्तह |
| 22- | सिद्धान्ते इत्यनन्तरं, | - | भूतयोनेर्विवर्तोपादानस्वस्यैवाभ्युपगमात् सर्वत्र चित एवोपादानत्वेन जडत्वाभावे प्युपादानत्वोपपलेरप्रयोजक इति पठनीयम् |
| 65-5 | लिङ्गेना | - | लिङ्गेन |
| 67-18 | अब्रह्मण्यापि | - | अब्रह्मण्यपि |
| 71-23 | ज्योतिरू | - | ज्योतिरु |
| 72-4 | पर्यायिर्जी | - | पर्यायियोर्जी |
| 74-4 | लिङ्गत्वे | - | लिङ्गत्वं |
| 75-13 | कथानात् | - | कथनात् |
| 77-19 | ताहृशात् | - | ताहशात् |
| 23 | वैचित्यात् | - | वैचित्त्रयात् |
| 78-7 | योरर्थः | - | योऽर्थः |
| 82-10 | परैवंकारप | - | परैवंकारश्च |
| 85-1 | लिङ्गना | - | लिङ्गानां |
| 14 | उपस्य | - | धेय द्वे अधिकरणे - एकमधिकरणम् |
| 19 | कसत्वेन | - | कत्वेन |
| 18-18 | आद्यन्त्त | - | आद्यान्त्य |
| 86-21 | प्रतिपाधन | - | प्रधानं |

| प. P. | अशुद्धं | शुद्धम् |
|---|---|---|
| 87-2 | स्वरूपासिद्ध इत्यनन्तरं सांख्यमतसिद्धाव्यस्तातता ग्रहणम् तस्य पारिभाषिकत्वात् । अतः प्रधाने पक्षे हेतोरसिद्धिः य एव लौकिकाः शब्दास्त एव वैदिका इति यौगिकार्थस्यैव शाह्यत्वात् एतदेव प्रपञ्चितं भाष्ये नह्येतदित्यादिना इति पठनीयम् | |
| 88-20 | सूक्ष्मत्वेनामा | सूक्ष्मत्वेनात्मा |
| 90 1 | अर्गग्निलः | अर्वाग्निलः |
| 23- | गृहो | ग्रही |
| 92-6 | माह | मपि |
| 93-15 | क्वाचित्क | क्वाचित्क |
| 94-17 | सच्यते | सूच्यते |
| 95-5 | भोक्दृ | भोक्तृ |
| -7 | मामन्तः | मामनन्तः |
| 102-3 | जडरुपाः | जडरूपाः |
| -3 | स्युप | स्युरु |
| 103-18 | कलिपतस्य | कल्पितस्य |
| 106-14 | ब्रवन् | बुवन् |
| ,, | सभन्वये | समन्वयो |
| 111-7 | गुरूव | गुरुत्व |
| -19 | न्यन्वं | न्यत्वं |
| -21 | रवत्वात् | रत्वात् |
| 113-17 | तन्तू | तन्तु |
| 114-5 | जगत्सवं | जगत्सर्गं |
| 116-21 | सर्वं | सर्गं |
| 118-2 | रूपे व्यभिचार, इत्यनन्तरं, तस्य भ्रमोपादानत्वादिति पठनीयम् | |

| | अशुद्धं | | शुद्धं |
|---|---|---|---|
| -17 | त्यरङ्गत्वं | - | त्यन्तरङ्गत्वं |
| -18 | ग्रहाचैव | - | ग्रहाच्चैव |
| -19 | न्वित्व | - | न्तितत्व |
| 121-4 | ष्टित | - | ष्ठित (सर्वत्र मुवमेव) |
| -9 | र्त्तहि सा | - | र्त्तहि न सा |
| 122-11 | प्रमापित्वात् | - | प्रमापितत्वात् |
| 124-1 | दःखम् | - | दुःखम् |
| 126-11 | भक्नानां | - | विभक्तानां |
| 127-13 | तस्मानु | - | तस्मादनु |
| -15 | कारणादा | - | कारणवादो |
| 128-3 | गुणत्वन्न | - | गुणत्वान्न |
| 130-11 | सिद्धसा ता | - | सिद्धसाधनता |
| 134-12 | स्वच्छेदात् | - | रविच्छेदात् |
| 137-10 | योगाचारा | - | निष्कासनीयम् |
| ,, | मित्यनुमान | - | मिति योगाचारानुमान |
| 138-2 | णोति | - | णेति |
| -9 | व्यधानेपि | - | व्यवधानेपि |
| -10 | नीन्नाधार | - | नीलाद्याकार |
| -22 | युक्त्व | - | युक्तत्व |
| 139-2 | व्याकृत्त | - | व्यावृत्तं |
| 141-16 | शक्ष्यते | - | शब्द्यते |
| 142-20 | मक्य | - | मशक्य |
| -26 | ह्यूम् | - | ह्यूह्यम् |
| 143-20 | कात्स्नो | - | कार्त्स्न्यो |
| 143-20 | मक्य | - | मशक्य |
| -21 | माशङ्क यान. चो | - | माशङ्क्याने नो |

| | अशुद्धं | | शुद्धं |
|---|---|---|---|
| 144-6 | दुभयो | - | दुभयोराद्य |
| -7 | शा | - | निष्कासनीयम् |
| 147-7 | प्रतिपादक | - | एतदनन्तरं, पाञ्चरात्रागमः प्रमाणं इति पठनीयम् |
| 147-14 | कर्तृत्वाभावः | - | कर्तृत्वाभावः |
| 153-6 | वैयर्थं | - | वैय्यर्थ्यं |
| 159-6 | भिनतत्वात् | - | भिन्नत्वात् |
| 174-14 | नित्यत्वावि | - | नित्यत्ववि |
| 175-7 | वाद | - | वादि |
| -23 | प्राण | - | प्राण |
| 178-5 | सिद्धम् | - | सिद्धसाधनम् |
| -9 | भोक्दतृ | - | भोक्तृ |
| -13 | सन्धाणृत् | - | सन्धातृ |
| -22 | वृत्तिरेकेन | - | वृत्ति व्यतिरेकेण |
| 179-23 | मृद्वया | - | मृत्व्याप्तत्वम् |
| 182-1 | कर्मंणि | - | कर्माणि |
| 1-23 | प्रेरणभावे न | - | प्रेरणाभावेन |
| 184-16 | भोत्यत्व | - | भोग्यत्व |
| 185-13 | मदिकर | - | मधिकर |
| 186-6 | द्योत्या | - | द्योन्या |
| 190-21 | रर्जः | - | रजैः |
| -22 | संश्चेष | - | संश्लेष |
| -23 | ब्रीद्या | - | वीद्यादि |
| 192-10 | णेम | - | णेमं |
| -16 | जाग्रया | - | जाग्रद्वया |
| 193-10 | कल्पृ | - | क्लृप्त |

| | अशुद्धं | | शुद्धं |
|---|---|---|---|
| 198-10 | त्वमो | - | त्वतो |
| 199-21 | अनश्य | - | अतश्च |
| 210-5 | तद्वाक्यानां | - | तद्वाक्यानां |
| -22 | हृयस | - | ह्रास |
| 103-12 | रज्यति | - | रस्यति |
| -18 | प्रह्म | - | ब्रह्म |
| 204-5 | सक्ति | - | इति |
| -19 | प्रत्यावृत्तिः | - | प्रत्ययावृत्तिः |
| 206·14 | अन्मितत्वात् | - | उन्मितत्वात् |
| -20 | भि नात् | - | भिधानात् |
| -21 | अत्याधारं | - | अक्ष्याधारं |
| 201-20 | भिद्यन्ते - इदं | - | पदं निष्कासनीयम् |
| 211-5 | संयोगभिन | - | संयोगाभिन |
| -9 | रव्यभिनाच | - | रव्याभिना |
| -10 | भिन | - | भिना |
| 212-2 | सात्रच्च | - | सववच्च |
| -5 | वतो | - | व्रतो |
| 213-23 | हृविनि | - | दूर्विनि |
| 214-3 | मुइकीयो | - | मुद्भीथो |
| 216-16 | शाखान्तरस्य | - | शाखान्तरस्थ |
| -21 | आनन्दत्वादि | - | अनानन्दत्वादि |
| 217-6 | रीगकस्य | - | रीयकस्थ |
| 220-24 | धाश्कैंकत्वात् | - | धारितैकस्वकत्वात् |
| 220-26 | मस्य | - | मस्थ |
| 221-8 | अचमो | - | आचामे |
| -22 | यापोभिः | - | याधिः |

| | अशुद्धं | | शुद्धं |
|---|---|---|---|
| 222-4 | नुवदेन | - | नुवादेन |
| 225-3 | भिद्धि | - | सिद्धिः |
| 226-18 | सोन्वि | - | सनि |
| -25 | विद्याथा | - | विद्यया |
| 230-10 | प्रतिपादश | - | प्रतिपादकश |
| 231-13 | हृयेते | - | ह्येते |
| -7 | पोगाच्य | - | योगाच्येति |
| 235-13 | द्विन्वाति | - | द्वित्ववि |
| -22 | वेद्यैकक्यै | - | वेद्यैक्ये |
| 240-14 | विद्याय | - | विद्यया |
| 241-17 | मवते | - | मवत्ते |
| 243-3 | लानार्थ्यं | - | सामर्थ्यं |
| -15 | अग्न्यः | - | अग्नयः |
| -16 | विषिष्टः | - | विशिष्टः |
| 244-17 | कर्तुकः | - | कर्तृकः |
| -25 | इति | - | निष्कासनीयम् |
| 245-19 | स्वातन्त्त्रम् | - | स्वतन्त्रम् |
| 246-19 | उपब्धि | - | उपलब्धिं |
| -24 | अख्या | - | उक्था |
| 247-5 | विनो | - | भिनो |
| -10 | द्वाति | - | द्वाऽवि |
| -18 | सनिधि | - | संनिधि |
| 248-5 | तयादि | - | तथाहि |
| -20 | भेदाच्यच्यो | - | भेदांच्यो |
| 249-7 | तामियत्या | - | नामित्या |
| 251-4 | ततो गा | - | ततोऽङ्गा |

| | अशुद्धं | | शुद्धं |
|---|---|---|---|
| 255-5 | यद्यापि | - | यद्यपि |
| -8 | दर्मं | - | धर्मं |
| 256-5 | एतमेवेति | - | निष्कासनीयम् |
| 259-19 | सुति | - | स्तुति |
| 258-13 | तारुव्या | - | तारव्या |
| -16 | पंकत्व | - | कित्वं |
| -18 | नोदोहे | - | प्रोहे |
| -20 | विशेष्यां | - | विशिष्यो |
| 259-16 | जामाम | - | णाम् |
| 261-14 | इवादि | - | श्वादि |
| 262-22 | वीर्यंकामस्य | - | एतदनन्तरं इति वाक्यद्वयेनेति योजनीयम् |
| 263-10 | काण्डंस्य | - | काण्डस्थ |
| -11 | णकाभे | - | णभे |
| -20 | निन्दिते | - | विनिश्ते |
| 264-3 | विद्यार्यंत्वं | - | विद्यार्थत्वं |
| 5 | विद्युरा | - | तिधुरा |
| 267-11 | मव्यवहारि | - | संव्यवहारो |
| -18 | लानि | - | तानि |
| 265-21 | ब्रह्मण | - | ब्राह्मण |
| 274-15 | आत्मना | - | आत्मत्वेना |
| 275-8 | विशेष्यक | - | विशेष्यविषयक |
| -10 | बोधकः इति | - | बोधकेति |
| -20 | द्विशेष्व | - | द्विशेष्य |
| 275-22 | यमप्त्करण | - | यमकारण |
| 278-21 | तया | - | तथा |
| 279-7 | तत्र | - | तस्य |

| प. P. | अशुद्धं | | शुद्धम् |
|---|---|---|---|
| -19 | सत्थं | - | इत्थं |
| -20 | षातेत्यं | - | पाते |
| 282-3 | प्रारब्थथीनं | - | प्रारब्धाधीनं |
| 282-3 | ध्यानाभ्य | - | थानादुत्थ |
| 287-14 | तस्यादि | - | तस्मादि |
| -19 | प्रकणण | - | प्रकरण |
| 289-6 | मायालिह | - | मायनिति |
| 289-11 | योन | - | येन |
| 290-22 | ब्रह्मार्वंण | - | ह्मार्पण |
| -24 | स्मृत्योरथं | - | स्मृत्योरथं |
| 292-17 | निषेधयत्ति | - | तिषेधति |
| 293-13 | पासक | - | उपासक |
| 22 | विशेषत्रत्ववेना | - | विशेषवत्वेना |
| 299-10 | तिप्रति | - | त्तिप्रति |
| -10 | निष्पति | - | निष्पत्ति |
| -18 | वस्याया | - | वस्थाया |
| -18 | मत्यभि | - | मप्यभि |
| 23 | एवत्वेव | - | एतंत्वेव |
| 300-3 | त्पते | - | त्पत्ते |
| -7 | शङ्गा | - | शङ्का |
| -21 | निर्देष | - | निर्देश |
| 301-6 | थंवत्तवते | - | थंवत्वे |
| -15 | हार्थिक | - | हारिक |
| -18 | वोऽत्य | - | वोऽप्य |
| 302-11 | तवका | - | तैवका |
| 304-7 | मनसम्बत्धत्वा | - | मनस्सम्बन्धवत्त्वा |
| 306-7 | साते | - | साति |
| -19 | कृष्णास्ति | - | कृष्णशस्ति |

—o—

| प. P. | अशुद्धं | | शुद्धम् |
|---|---|---|---|
| -19 | सत्थं | - | इत्थं |
| -20 | षातेत्यं | - | पाते |
| 282-3 | प्रारब्थथीनं | - | प्रारब्धाधीनं |
| 282-3 | ध्यानाभ्य | - | थानादुन्थ |
| 287-14 | तस्यादि | - | तस्मादि |
| -19 | प्रकणण | - | प्रकरण |
| 289-6 | मायालिह | - | मायनिति |
| 289-11 | योन | - | येन |
| 290-22 | ब्रह्मार्वण | - | ह्मार्पण |
| -24 | स्मृत्योरर्थं | - | स्मृत्योरर्थं |
| 292-17 | निषेधयत्ति | - | तिषेधति |
| 293-13 | पासक | - | उपासक |
| 22 | विशेषत्रत्ववेना | - | विशेषवत्वेना |
| 299-10 | तिप्रति | - | त्तिप्रति |
| -10 | निष्पति | - | निष्पत्ति |
| -18 | वस्याया | - | वस्थाया |
| -18 | मत्यभि | - | मप्यभि |
| 23 | एवत्वेव | - | एतंत्वेव |
| 300-3 | त्पते | - | त्पत्ते |
| -7 | शङ्का | - | शङ्का |
| -21 | निर्देष | - | निर्देश |
| 301-6 | थंवत्तवते | - | थंवत्वे |
| -15 | हार्थिक | - | हारिक |
| -18 | वोऽत्य | - | वोऽप्य |
| 302-11 | तवका | - | तैवका |
| 304-7 | मनसम्बत्धत्वा | - | मनस्सम्बन्धवत्त्वा |
| 306-7 | साते | - | साति |
| -19 | कृष्णास्ति | - | कृष्णशस्ति |

—o—